Tanjore Sarasvati Mahal Series No. 98

# PRAPAÑCHASĀRA SĀRA SAṄGRAHA

OF

## GĪRVĀṆENDRA SARASWATHI

PART II

Edited by

Shri K. S. SUBRAMANIA SASTRY,

*Retired Pandit,*

*Sarasvati Mahal Library, Tanjore.*



Published by

Shri O. A. NARAYANASWAMI, B. A., B. L.,

*Honorary Secretary,*

FOR THE ADMINISTRATIVE COMMITTEE,

T. M. S. S. M LIBRARY, TANJORE.

Saka 1885] *Price:* Rs. 18-50 [A. D. 1963

तञ्जपुरी सरस्वतीमहालय ग्रन्थमाला संख्या-९८.

॥ श्रीः ॥



# श्रीमत्प्रपञ्चसारसारसंग्रहे

## गीर्वाणेन्द्रसरस्वतीपादविरचिते

## (उत्तरो भागः)

भारताधीश्वरैः मद्रमण्डलाधीश्वरैश्च कृतोपकारः,

पण्डितवर, मन्त्रमूर्ति,

**क्षे० शं० सुब्रह्मण्यशास्त्रिणा**

संशोध्य प्रकाशितः

श्रीमत्तञ्जपुरी सरस्वतीमहालय कार्यदर्शिभिः

**ओ. ए. नारायणस्वाम्यार्यैः, बि. ए., बि. एल् महाशयैः**

मुद्रापितः

शकाब्दाः १८८५ क्रिस्त्वब्दाः १९६३

मूल्यम् रूप्यकाणि १८-५०.

# PREFACE.

With this volume we complete Prapanchasara Sarasangraha of Geervanendra Saraswathi. *This is one of the two* Sanskrit works taken up for publication under the scheme for "publication of rare manuscripts". Dharmakutam Yuddhakanda also will be issued soon.

To suit worshippers of *different* age *and experience* hundred of forms and sound symbols called "Mantras" have been given in the text, sifted carefully and collected mostly from the work Prapanchasara of Sri Sankaracharya, the great monistic philosopher. These Mantras intoned in the proper way according to both sound and *rhythm-Varna* and *Swara*- are capable of producing not only mundane happiness but also spiritual bliss. Advanced souls may not require out-side symbols but an average soul requires such symbols to pin its faith even as immature minds require illustrations to be discarded at a later stage.

Our thanks are due to Sri K. S Subramania Sastry who has very ably edited this work.

We are also grateful to the Union and State Governments for their liberal grants for publication of such rare and valuable works in the library.

Thanjavur,
6—12—1963.

*O. A. Narayanaswami,*
Honorary Secretary.

॥ श्री गणेशाय नमः ॥

प्रपञ्चसारसारसंग्रहे उत्तरभागस्य

## विषयानुक्रमणिका ॥

| क्रम-सं० | विषयाः | पृष्ठ-सं० |
|---|---|---|
| | द्वात्रिंशे पटले — | |
| ४८८ | सन्तानयागविधिः | ९२२ |
| ४८९ | पञ्चगव्ययोजनार्था ऋचः | ,, |
| ४९० | संकोचमन्त्रः | ,, |
| ४९१ | मूलमन्त्रः | ९२३ |
| ४९२ | शङ्करनारायणमन्त्रविधानम् | ९२६ |
| ४९३ | पूजाविधिः | ,, |
| ४९४ | प्रजार्थिहोमविधिः | ,, |
| ४९५ | वन्ध्यात्वनिवृत्तिप्रदः कल्पः | ९२७ |
| ४९६ | रेणुकामन्त्रः | ९३१ |
| ४९७ | रेणुकायन्त्रम् | ९३२ |
| ४९८ | प्रयोगाः | ,, |
| ४९९ | गुरुशिष्ययोः लक्षणम् | ९३४ |
| | अनुबन्धे — | |
| ५०० | ज्वरशान्तिकर ऋङ्मन्त्रः | ९३९ |
| ५०१ | सन्धिकरऋङ्मन्त्रः | ,, |
| ५०२ | जिह्वादोषशान्तिकरऋङ्मन्त्रः | ,, |
| ५०३ | सुपुत्रदऋङ्मन्त्रः | ,, |
| ५०४ | रक्षाकरऋङ्मन्त्रः | ,, |
| ५०५ | उपद्रवशान्तिकरऋङ्मन्त्रः | ,, |
| ५०६ | आयुष्करऋङ्मन्त्रः | ,, |
| ५०७ | नष्टद्रव्यलाभकरऋङ्मन्त्रः | ,, |
| ५०८ | शत्रुपलायनकरऋङ्मन्त्रः | ,, |
| ५०९ | वाक्सिद्धिकरऋङ्मन्त्रः | ९४० |

इति प्रपञ्चसारसारसंग्रहविषयानुक्रमणिका समाप्ता ॥



॥ श्री गणेशाय नमः ॥

# ॥ प्रपञ्चसारसारसंग्रहोक्तामन्त्राः ॥

इति पूर्वभागोक्ता मन्त्राः ॥

---

# अथोत्तरभागोक्ता मन्त्राः ॥

| क्रम-सं० | विषयाः | पृष्ठ-सं० |
|---|---|---|
| १३० | ज्वरशान्तिकरवैष्णवमन्त्रः | ५५० |
| १३१ | इन्द्रगायत्रीमन्त्रः | ५५१ |
| १३२ | ऐन्द्रत्रिष्टुप्चिन्तामणिमन्त्रः | ५५३ |
| १३३ | इन्द्राणीमन्त्रः | ५५९ |
| | एकोनविंशपटले — | |
| १३४ | विष्णोरष्टाक्षरमन्त्रः | ५६९ |
| | एकविंशपटले — | |
| १३५ | नामत्रयमन्त्रः | ५८० |
| १३६ | वैष्णवद्वादशाक्षरीमन्त्रः | ५८५ |
| १३७ | सुदर्शनषडक्षरमन्त्रः | ५८७ |
| | द्वाविंशपटले — | |
| १३८ | गीतात्रिष्टुप्मन्त्रः | ६०० |
| १३९ | कार्तवीर्यमन्त्रः | ,, |
| १४० | कार्तवीर्यमन्त्रान्तरम् | ६०३ |
| १४१ | कार्तवीर्यमन्त्रान्तराणि | ,, |
| १४२ | कार्तवीर्यमालामन्त्रः | ६०५ |
| १४३ | श्रीकराष्टाक्षरमन्त्रः | ६०७ |
| १४४ | वराहमन्त्रः | ६१० |
| १४५ | भूवराहाष्टाक्षरमन्त्रः | ६१८ |
| १४६ | वराहैकाक्षरमन्त्रः | ,, |
| १४७ | स्वप्नवाराहीमन्त्रः | ६२० |
| १४८ | महावाराहीमन्त्रः | ६२२ |
| | त्रयोविंशपटले — | |
| १४९ | नृसिंहानुष्टुप्मन्त्रः | ६२६ |

| क्रम-सं० | विषयाः | पृष्ठ-सं० |
|---|---|---|
| | द्वात्रिंशपटले — | |
| २६३ | संकोचमन्त्रः | ९२२ |
| २६४ | शङ्करनारायणमन्त्रः | ९२६ |
| २६५ | रेणुकामन्त्रः | ९३१ |
| | अनुबन्धे — | |
| २६६ | नानाफलदाऋङ्मन्त्राः ( २८ ऋचः ) | ९३९ |
| २६७ | तत्र, मृतसञ्जीविनीमन्त्रः | ९४२ |
| २६८ | पुनः नानाफलदाऋङ्मन्त्राः ( १८ ऋचः ) | ,, |
| २६९ | यक्षिणीमन्त्राः ( ७ ) | ९४६ |
| २७० | माणिभद्रयक्षमन्त्रः | ९४८ |
| २७१ | पुनः यक्षिणीमन्त्राः ( ६ ) | ९४९ |
| २७२ | सुब्रह्मण्यपञ्चदशाक्षरीमन्त्रः | ९५० |
| २७३ | अन्नलाभदऋङ्मन्त्रः | ९५१ |
| २७४ | गोरक्षाकरकृष्णमन्त्रः | ९५१ |
| २७५ | पुनः नानाफलदाऋङ्मन्त्राः (१२) | ,, |
| २७६ | छर्दिनाशनामृतपञ्चाक्षरीमन्त्रः | ९५५ |
| २७७ | पुनः नानाफलदाऋङ्मन्त्राः ( १२ ) | ९५७ |
| २७८ | कन्यायावरलाभकररुक्मिणीवल्लभमन्त्रः | ९६० |
| २७९ | चामुण्डानवाक्षरीमन्त्रः ( ३ ) | ,, |
| २८० | चिटिमन्त्रः | ९६१ |
| २८१ | लवणमन्त्रऋक्पञ्चकम् | ९६२ |
| २८२ | प्रत्यङ्गिराविधानेदिग्बन्धनमन्त्रः | ९६८ |
| २८३ | प्रत्यङ्गिराविंशत्यक्षरमन्त्रः | ९७२ |
| २८४ | प्रत्यङ्गिरामालामन्त्रः | ,, |
| २८५ | प्रत्यङ्गिराऋङ्मन्त्राः ( ऋचः ४५ ) | ,, |

इति प्रपञ्चसारसारसंग्रहोक्तमन्त्राः समाप्ताः ॥

## ॥ प्रपञ्चसारसारसंग्रहे होमाद्यर्थद्रव्यवाचकपदानामर्थाः ॥

अगरुः-கருங்காலி.

अग्निः-கொடிவேலி.

अग्निमन्थः-முன்னை.

अजमोदः-அசமதம்.

अजमोदकः-அசமதம்.

अञ्जलिनी-வரள்சுண்டி. ஆனை வணங்கி.

अनित्यः-அநிச்சை

अपामार्गः-நாயுருவி.

अपूपं-அதிரஸம்.

अमृता-சீந்தில்.

अरिष्टः-வேம்பு.

अरुणोत्पलं-சிவப்பு அல்லி.

अर्कः-எருக்கு

अलं-அரிதாளம்.

अलक्तकं-செம்பஞ்சு.

अश्वारिः-அரளி.

अष्टचूर्णं-சுக்கு, மிளகு, திப்பிலி, கருஞ்ஜீரகம், நல்லஜீரகம், இந்துப்பு, பெருங்காயம், அசமதம் இவைகளின் தூள்.

असृक्-குங்குமம்.

अस्थि-விதை.

आज्यं-நெய்.

आमयं-செங்கழநீர் கோட்டம்.

आमलकं-நெல்லிக்காய்.

आमलकीतरुः-நெல்லிமரம்.

आम्रः-மாமரம்.

आरग्वधः-கொன்னை.

आसुरी-கடுகு.

इक्षुः-கரும்பு.

इक्षुरसं-சர்க்கரை, வெல்லம்.

इन्द्रवल्ली-மொடக்கித்தான்.

उडुतरुः-அழிஞ்சில்.

उत्पलं-நீலோத்பலம்.

उन्मत्तम्-ஊமத்தை.

उरगमौलिः-உரகமௌளி.

उर्वारुकं-வெள்ளரிக்காய்.

उशीरं-விளாமிச்சவேர்.

ऊषण-சுக்கு, மிளகு, திப்பிலி.

एरण्डः-கொட்டைச்செடி.

एला-ஏலக்காய்.

औदुम्बरः-அத்தி.

कटुत्रय-சுக்கு, மிளகு, திப்பிலி.

कटुकालाबुः-பேய்ச்சுரை.

कणा-திப்பிலி.

कदम्बः-அடப்பமரம்.

कदली-வாழை.

कपिः-முசுமுசுக்கை.

कपित्थः-விளாமரம்.

कपिला-காராம்பசு.

करञ्जः-புங்கமரம்.

करण्डः-கோங்கு.

करवीरः-அரளி.

कर्पूरं-பச்சைக் கர்ப்பூரம்.

कल्हारं-செங்கழுநீர்ப்பூ

कस्तूरी கஸ்தூரி.

काकमाची-மணத்தக்காளி.

कारस्करः-எட்டிமரம்.

कार्पासं-பரித்திக்கொட்டை.

काश्मर्यं-பெருங்குமிழ்.

काश्मरी-சிறுகுமிழ்

काश्मीरं-குங்குமப்பூ.

किंशुकः-புரசு.

कुङ्कुमं-குங்குமப்பூ.

कुचन्दनं-செஞ்சந்தனம்.

कुण्डलिनी-நாயுறு வணங்கி.

कुन्दं-குருக்கத்தி.

कुबेराक्षी-கொடிக்கழல்.

कुम्भिवन्दिनी-யானை வணங்கி

कुरण्टः-செங்குறிஞ்சில்.

कुरवकः-மருதாணி,

कुलत्थं-கொள்ளு.

कुशं-குசப்புல்.

कुशीतं-செஞ்சந்தனம்.

कुसुमरसं-தேன்.

कुसुम्भं-குசும்பைப்பூ.

कृष्णोदरपुष्पी-கருப்புக் காக்கணம்பூ

केतकी-தாழை.

केसरं-குங்குமப்பூ.

कैरवं-ஆம்பல்.

कोकनदं-தாமரைப்பூ.

कोद्रवः-கம்பு, சாமை, வரகு.

क्ष्वेडं-எட்டி.

क्षौद्रं-தேன்.

खदिरः-கருங்காலி.

खादिरः-கருங்காலி.

खरमञ्जरी-நாயுருவி.

गळूची-சீந்தில்.

गळूचीपट्टिका-சீந்தில் தோலி.

गुग्गुलु-குங்கிலியம்.

गुहारुणं-திருவட்டம் பிசின்.

गुळं-வெல்லம்.

गृहधूमः-ஒட்டடை.

गोधूमः-கோதுமை.

ग्रन्थिः-திப்பிலி மூலம். சித்தரத்தை.

घनमञ्जरी-நாயுருவி.

घुसृणं-குங்குமப்பூ.

घृतं-நெய்.

चतुरंगुलः-கொன்னை மரம்.

चतुर्जातं-ஏலம், லவங்கம், பத்திரி, நாகப்பூ.

चन्दनं-சந்தனம்.

चम्पकं-சம்பகப்பூ.

चित्रं-கொடிவேலி.

चित्रः-கொட்டைச்செடி.

चोरः-கஸ்தூரி மஞ்சள்.

மரமஞ்சள்.

छर्द-இலை.

छिसरुहा-சீந்தில்.

जपा-சம்பரத்தை.

जम्बूः-நாவல் மரம்.

जलं-வெட்டிவேர்.

जातिः-ஜாதிக்காய்.

जाती-ஜாதிக்காய்.

ज्योतिष्मती-ஜியோதிஷ்மதிலதை.

टङ्कणं-வெண்காரம்.

तक्कोलः-தக்கோலம்.

तण्डुलः-அரிசி.

तिलः-எள்ளு

तीक्ष्णं-கடுகு.

तीक्ष्णस्नेहं-கடுகெண்ணை.

तुलसी-துளஸி.

तृणकं-காவட்டம்புல்.

त्रिफलं - நெல்லிக்காய், தானிக்காய், கடுக்காய்.

त्रिमधुरं-நெய், பால், தேன்.

त्रियामा-மஞ்சள்.

दण्डी-பிரம்ஹ தண்டை, சிறுதேக்கு.

दर्पुष्पी-சங்கங்குப்பி.

दलं-பச்சிலை.

दाडिमी-மாதுளை.

दार्वी-மரமஞ்சள்.

दीपकं-புத்திர தீபகம்.

दुग्धं-பால்.

दुग्धवृक्षाः-அரசு, புரசு, அத்தி, ஆல்.

दुर्वर्णं-வெள்ளி.

दूर्वा-அருகம்புல்.

देवदारुः-தேவதாரு என்னும் மரம்.

देवी-ஸஹதேவியார்.

दोषा-மஞ்சள்.

दौग्धं-பாயஸம்.

द्विजतरुः-புரசமரம்.

द्विरेफः-கருச்சராங்கண்ணி.

धात्री-கடுக்காய்.

धुत्तूरः-ஊமத்தை.

नन्द्यावर्तं-நந்தியாவட்டை.

नवनीतं-வெண்ணை.

नागः-புன்னாக மரம்.

नागपुष्पं-நாகப்பூ.

नारंगः-நாரத்தை

नालिकेरं-தேங்காய்.

निम्बः-வேம்பு

निर्गुण्डी-நொச்சில்.

निर्यासं-பிசின்.

नीलं-நீலோத்பலம்.

नीलोत्पलं-நீலோத்பலம்.

निशा-மஞ்சள்.

नृपतरुः-கொன்னை.

पङ्कजं-தாமரைப்பூ.

पञ्चजूर्णं-சுக்கு, திப்பிலி, மிளகு, கடுகு, அசமதம், இவைகளின் பொடி.

पटुः-உப்பு.

पत्रं-ஜாதிப்பத்திரி. இலை.

पद्मं-தாமரைப்பூ.

पनसं-பலாப்பழம்.

परपुष्टकण्टकं-குயில் முள்.

पलाशः-புரசு,

पाटली-பாதிரி.

पाटीरंசந்தனம்.

पाठा-பாடக்கிழங்கு.

पायसं-பாயஸம்.

पारन्ती-வேழச்சி.

पारदं-பாதரஸம்.

पिप्पलः-அரசு

पिशाची ( गन्धमांसी )-சித்தாமல்லி, பேராமல்லி, சிறுவழுதலை, கணுக்கத்தரி, சுக்கு

पीतद्रव्यं-மஞ்சள்.

पुत्रजीवी-புத்திரஜீவி மரம்.

पुन्नागं-புன்னைகபுஷ்பம்.

पुरं-குங்கிலியம்.

पुलाकम्-புல்லாந்தி.

पृथुकम्-அவல்

प्रणत्घृतम्-கட்டி வெண்ணை.

प्रत्यक्पुष्पी-ருத்திரதண்டி, கௌதும்பை.

प्रियङ्गुः-ஞாழல்

प्लक्षः-இச்சில்.

फलत्रयम्-கடுக்காய், நெல்லிக்காய், தானிக்காய்.

फलिनी-ஞாழல்.

फलीकरणम्-தவிடு.

बन्धुजीवम्-உச்சிச்சிலந்தன்.

बन्धूकम्-சம்பரத்தை.

बिल्वः-பில்வம்.

बृहती-முள்ளுக்கத்தரிக்காய்

बोधिपत्रम्-அரச இலை.

ब्राह्मी-பிரமிவழுக்கை.

भल्लातकः-சேங்கொட்டை மரம்.

भानुपुष्पम्-எருக்கம்பூ.

भीता-தொட்டாச்சிணிங்கி.

भूर्जपत्रम्-பூர்ஜ இலை.

मत्तः-ஊமத்தை.

मधु-தேன்.

मधुकम्-அதிமதுரம்.

मधुपः-கருச்சாரங்கண்ணி.

मधूकः-இலுப்பை மரம்.

मधुरसमित्-அதிமதுரக்குச்சி.

मन्दारं-மந்தாரப்பூ.

मयूरशिखा-மயூரசிகை. நாயுருவி.

मरीचम्-மிளகு.

मर्कटी-முசுக்கை.

मल्ली-மல்லிகைப்பூ.

महाभद्रा-சிறுபீளை.

माञ्जिष्ठम्-மஞ்ஜிட்டை.

मातुलङ्गम् – மாதுளை.
मातुलिङ्गम् – மாதுளை.
मायूरकम् – நாயுருவி.
मायूरिका-நாயுருவி.
मालती-சிறு செண்பகம், குண்டு மல்லி.
मापः-உளுந்து.
मांसी-ஜடாமாஞ்சி.
मुद्गः-பயறு.
मुरं-மருக்கொழுந்து.
मुसली-நிலப்பனை.
मुस्ता-முத்தக்காசு, கோரைக் கிழங்கு.
मृगमदम् - கஸ்தூரி.
मृद्वीकम् - திராக்ஷைப் பழம்.
यवः-யவை.
यष्टिः-மதிமதுரம்.
रक्तकार्पासपुप्पम् – செம்பருத்திப்பூ
रक्तवाराही-சென்னிலப்பனை.
रजनी-மஞ்சள்.
राजी-கடுகு.
राजवृक्षः-கொன்னைமரம்.
रामठम् - பெருங்காயம்.
रुचिरं-குங்குமம்.
रोगः-கோஷ்டம்.
रोचना-கோரோசனை.
रोचनम् – கோரோசனை.
रोहिणः-ஆலமரம்.
रोहिणका-கடுகுரோஹிணீ.
लक्ष्मी-ஸ்ரீதாளி, நிலத்தாளி.
लज्जा-வரன் சுண்டில்.
लज्जालुः-தொட்டாச்சிணிங்கி.
लज्जालुका-தொட்டாச்சிணிங்கி
लवङ्गम् – கிராம்பு.
लवणम् - உப்பு.
लाक्षा – அரக்கு.
लाजः-பொரி.
लोगम् - உப்பு.
लोणमुद्रा-உப்பு உருண்டை.
लोध्रम् – வெள்ளலொத்தி.
वकुलम् – மகிழம்பூ
वचा-வசம்பு.
वज्रम् - சதுரக்கள்ளி.
वञ्जुलः-நீர்வஞ்சி.
वज्रवल्ली-பெரண்டை.
वह्निः-கொடிவேலி.
वह्निचित् – கொடிவேலி பஸ்மம்.
वाकुची-கார்போக அரிசி.
वाराही-நிலப்பனை.
विशाला-பெரும்பசளை.
विपतरुः-எட்டி மரம்.
विषं.ग्रिपः-விஷமுட்டி.
विष्णुक्रान्तम् – விஷ்ணுக்கிராந்தி.
विष्णुदयिता-விஷ்ணுகிராந்தி.
विलङ्गम् – விழாலரிசி.
वेतसः-நீர்நொச்சில்.

वैणवम् = மூங்கிலரிசி.
वैतसम् - நீர்நொச்சிக்குச்சி.
वैभीतकम् - தானிக்காய்.
சேங்கொட்டை.
व्याघातः—கொன்னை.
व्योषम् = சுக்கு, மிளகு, திப்பிலி
व्रणतैलम् - சேங்கொட்டை
தைலம்.
व्रीहिः—நெல்.
शतमखलता-மொடக்கித்தான்.
शतवीर्या—அருகம்புல்.
शमी—வன்னி.
शर्करा—சர்க்கரை.
शाली—சம்பாப்பயிர்.
शावपाषाणम् - சாவபாஷாணம்.
शिफा—வேரு, மூலம்.
शिम्बी—சிம்பிதானியம்.
शिरीषपुष्पम् - வாகைப்பூ.
शिवा—கடுக்காய்.
शीता-சந்தண கர்பூராதி லகு
கர்பூரம்
शौण्डी—திப்பிலி.
श्येनम् - கருணைக்கிழங்கு
श्रीः—ஸ்ரீதாளி.
श्रीकरीकुसुमम् - பில்வப்பூ
கதம்பபுஷ்பம்.
श्रीदेवी-ஸ்ரீதேவியார். செங்கழிநீர்.
श्रीभार्गवी—வெள்ளருக்கு.
श्रीवृक्षः-பில்வமரம்
श्वेतार्कः-வெள்ளெருக்கு
षड्बिन्दुः—6 புள்ளி வண்டு.

सक्तुः-ஸத்துமா.
(நெல்லுவறுத்தமா.)
सरसिजम् - தாமரைப்பூ
सरोरुहम् - தாமரைப்பூ.
सहदेवी-ஸஹதேவியார்.
सहा-எழுத்தாணிப்பூண்டு.
सहभद्रा-சிறியீனை.
सर्षपः—கடுகு.
सारः-வேங்கைமரம்.
सितकिंशुकम् - வெள்முருக்கு.
வெண்புரசு.
सिता—கல்கண்டு.
सिद्धार्थम् - கடுகு.
सिंही—கண்டங்கத்திரி.
सुधालता-சீந்திக்கொடி.
सुरभिः—சந்தணம்.
सूरणम् - கருணைக்கிழங்கு.
सेवन्ती-ஸேவந்தீ (ஜவந்தி)
புஷ்பம்.
सैन्धवम् - இந்துப்பு.
स्तनजवृक्षाः—ஆல், அரசு, அத்தி
புரசு, மரங்கள்.
स्थिराब्जम् - ஒரிலைத்தாமரை.
स्नुहिक्षीरं-திருகுகள்ளிப்பால்.
स्वादु (त्रिमधुरं)-நெய், பால், தேன்
हरिद्रा-மஞ்சள்.
हयारिः-அரளி.
हविः-ஹவிஸ்.
हिङ्गुः-பெருங்காயம்.
हेमपारि-பொன்னூமத்தை.
ह्रीबेरं-இருவேலி, கபிதிப்பிலி.

## ॥ प्रपञ्चसारसारसंग्रहे उत्तरभागे शुद्धाशुद्धपाठः ॥

| पुट-सं. | प-सं. | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| 573 | 13 | स्वात्म | स्वाल्म |
| 616 | 4 | क्षौमं | क्षोमं |
| 661 | 10 | गृहधूम | ग्रुहधूम |
| 685 | 10 | जानुसन्धि | जानुमन्धि |
| 755 | 3 | गच्छागन्तुकं | गच्छगन्तुकं |
| 776 | 16 | रोगो | रोगी |
| 790 | 9 | सुधा | वसुधा |
| 794 | 15 | सचिह्नि | सचिसह्नि |
| 805 | 3 | वत्सकल | वल्कल |
| 824 | 9 | स्वल्पमनेन | स्वल्पनेन |
| 878 | 15 | अपिवातय | अभिवातय |
| 899 | 16 | पनसा | पुनसा |
| 901 | 23 | वज्रम् । | वत्रम् । |
| 911 | 15 | मङ्गेन्द्र | मङ्गेन्द्र |
| 934 | 6 | निम्बं | विम्बं |
| 936 | 6 | पूजाया | पूजया |
| 942 | 23 | ध्रुवासु | प्रवासु |
| 944 | 10 | प्रभृत्यग्नि | प्रभृन्यग्नि |
| 947 | 16 | प्रिये स्वाहा । | प्रिये । |
| 952 | 23 | संविशेद्वा । | संविशेयद्वा । |
| 957 | 16 | तामरस | तामरसु |
| 973 | 15 | पठंपि | पठंपि |
| 976 | 18 | दारुदर्भे | दारुधर्भे |
| 983 | 15 | सोद्वेगस्सुरत | सोद्वेगसुरत |
| 985 | 2 | एतास्समस्ता | एतस्समस्ता |

# ॥ प्रपञ्चसारसारसंग्रहे उत्तरभागः ॥

## ॥ अथाष्टादशः पटलः ॥

अथ श्रीकृष्णमन्त्रप्रसङ्गात् श्रीराममन्त्रोपि लिख्यते —

ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीरामचन्द्रो देवता । रां बीजम् । नमः शक्तिः । मम सर्वैश्वर्यसर्वसौभाग्यसर्वलोकवश्यविद्याज्ञानसिध्यर्थे विनियोगः । रां हृत् । रीं शिरः । रूं शिखा । रैं कवचम् । रौं नेत्रम् । रः अस्त्रम् । अथवा मूलमन्त्रैरेव (मूलमन्त्राक्षरैरेव) करन्यासं च कुर्यात् ॥

अथाक्षरन्यासः —

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृदि नाभौ च गुह्यके ।
पादयोश्च प्रविन्यस्य भावयेद्भावनां सुधीः ॥

ध्यानम् —

आधारे भावयेच्छक्तिं चित्सदानन्दरूपिणीम् ।
उद्यदादित्यसंकाशामाधारं तत्प्रभामयम् ॥

विद्युत्कोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
सुषुम्नामुखमुन्मील्य प्रापयेदुपदेशतः ॥

ब्रह्माध्वना नयेदेतद्द्वादशान्ते तु मण्डलम् ।
प्राप्य विधिना बुध्या प्रापयेत्सुधामृतम् ॥

ततः परिगलच्छुद्धसुधाधाराभिराप्लुतम् ।
निजदेहं जगत्सर्वं एकीभूतं विचिन्तयेत् ॥

निष्प्रपञ्चं निराकारं निरवद्यं निरञ्जनम् ।
अशून्यशून्योपरमं सदसद्भाववर्जितम् ॥

अखण्डानन्दमात्मानं भावयेन्मुनिसत्तम ॥ इति ॥

ध्यानान्तरम् —

उपसंहृत्य तत्तेजो यद्वा हृदयपङ्कजे ।
रामं ज्योतिर्मयं ध्यायेत्सर्वलोकैकसाक्षिणम् ॥

जगदुत्पत्तिसंभूतिविपरीतिकरं परम् ।
देवासुरमुनीन्द्रैश्च योगिवृन्दैश्च सेवितम् ॥

चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
किरीटहारकेयूररत्नकुण्डलशोभितम् ॥

एवं ध्यात्वा जपेन्मन्त्रं षट्सहस्रं दिने दिने ।
सर्वेषां श्रुतिमूलानां नित्यनैमित्तिकात्मनाम् ॥

कर्मणामविरोधेषु कालेषु जप इष्यते ।
वाचः श्रियः पतिर्भूत्वा कविर्भवति वत्सरात् ॥ इति ॥

ध्यानान्तरम् —

यद्वा कल्पतरोर्मूले सौवर्णं मण्डपं मुने ।
तन्मध्येष्टदलं पद्ममुद्यदादित्यसन्निभम् ॥

वीरासनेन तन्मध्ये समासीनं महामुने ।
सम्यक् ज्ञानमयीं मुद्रां दधानं दक्षिणे करे ॥

तेजःप्रकाशिनीं वामजानुमूर्धनि चापरम् ।
जानकीवल्लभं देवमिन्द्रनीलसमप्रभम् ॥

व्याख्याननिरतं देवं द्विभुजं रघुनन्दनम् ।
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ॥

भजतां कामदां नित्यं नीलोत्पलकराम्बुजाम् ।
लक्ष्मणं पश्चिमे भागे धृतछत्रं सचामरम् ॥

पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ।
एवं ध्यात्वा जपेन्मन्त्रं ज्ञानलक्ष्म्योश्च भाजनम् ॥

चातुर्विध्यं कवित्वं च षण्मासाज्जायते पुनः ।
जपतां मन्त्रिणामेवमन्तर्यागेन धीमताम् ॥

पुरश्चरणकृत्येन विना च फलदो मुने ॥

ध्यानान्तरम्—

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥

रां रामाय नमः । इति मन्त्रः ॥

अतः परं प्रवक्ष्यामि पौरश्चरणकं विधिम् ।
जितेन्द्रियो हविष्याशी शाकयावकभोजनः ॥

पश्चिमाभिमुखे देवे *वृषशूले शिवालये ।
नद्यास्समुद्रगामिन्याः तीरे गोष्ठेऽथवा मुने ॥

अश्वत्थबिल्वयोर्मूले सिन्धुतीरे जलाशये ।
पर्वताग्रेऽथवा मन्त्री स्थानेष्वन्यतमे जपेत् ॥

द्वादशलक्षं जपेत् । तद्दशांशं तर्पयेत् ॥ तद्दशांशं बिल्वसमिद्भिश्च तत्फलैश्च तत्पत्रैश्च तत्कुसुमैश्च त्रिमधुरसिक्तैर्हुनेत् पुरश्चरणार्थम् ॥

* वृषशून्ये इति ख, ग, ङ मातृका पाठः ।

अथ कल्पान्तरोक्तन्यासविधिः — शुद्धमातृका केशवादिका तत्त्वमूर्तिपञ्जरान् प्राक् गोपालकविधानोक्तान् न्यसेत् ॥

अथ पूजाविधिः ॥ अथ यन्त्रं वक्ष्ये —

अथोच्यते महायन्त्रं रघुनन्दनविग्रहम् ।
सौभाग्यदं वश्यकरं रिपुनाशकरं परम् ॥

आयुरारोग्यदं पुंसां ग्रहज्वरनिवारणम् ।
यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेरिता ॥

पुरा भगवताप्युक्तं तन्त्रे संमोहनाह्वये ।
देहात्मनोर्यथा भेदो मन्त्रदेवतयोस्तथा ॥

तस्मात्पीठे महायन्त्रं लिखित्वा तत्र पूजयेत् ।
विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥

ततो वक्ष्यामि यन्त्रस्य स्वरूपं गुरुदर्शितम् ।
षट्कोणं पूर्वमालिख्य तदग्रे वृत्तमालिखेत् ॥

बहिरष्टदळं पद्मं ततः पार्थिवमण्डलम् ।
एवं मण्डलमालिख्य शोभनं व्यक्तमुज्ज्वलम् ॥

षट्कोणान्तर्लिखेद्बीजं साध्याख्याकर्मगर्भितम् ।
मान्मथेनैव बीजेन तद्बीजं वेष्टयेद्बहिः ॥

अवशिष्टैर्मनोर्वर्णैः मान्मथं तच्च वेष्टयेत् ।
दशाक्षरेण मन्त्रेण तत्सर्वं वेष्टयेत्पुनः ॥

अग्न्यादिकोणषट्केषु षडङ्गानि च विन्यसेत् ।
श्रीं ह्रीमिति लिखेत्पश्चात् षट्कोणस्य कपोलयोः ॥

कोणाग्रेषु च हुं बीजं केसरेषु स्वरान् क्रमात् ।
ततो मालामनोर्वर्णैः पूर्वाद्यष्टदलेषु च ।
तेषु सप्तसु मन्त्रज्ञो विन्यसेद्रससंख्यया ॥

अवशिष्टं पञ्चवर्णं विन्यसेदष्टमे दळे ।
वृत्ताकारेण तत्सर्वं वेष्टयेत्कादिवर्णकैः ॥

बीजद्वयं लिखेत्पश्चात् भूगृहे दिग्विदिक्षु च ।
नारसिंह्मं महाबीजं वाराहं च मुने क्रमात् ॥ इति ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये मन्त्रस्य प्रथमबीजं रामिति विलिख्य, तन्मध्ये साध्यनामादीन्विलिख्य, पुनः कामबीजेन पूर्वलिखितमन्त्रप्रथमबीजं वेष्टयेत् । पुनरवशिष्टेन मूलमन्त्रवर्णपञ्चकेन तत्काम-बीजमपि वेष्टयेत् । पुनर्वक्ष्यमाणेन रामदशाक्षरेण पूर्वलिखितं सर्वं वेष्टयेत् ॥ "हुं जानकीवल्लभाय स्वाहा" इति रामदशाक्षरीमन्त्रः । पुनष्षडङ्गानि षट्सु कोणेषु एकमेकं विलिख्य, षट्कोणकपोलद्वन्द्वे श्रीं ह्रीं इत्येकैकस्मिन् कपोले, एवं सर्वकपोलेष्वपि विलिख्य, पुनः षट्कोणाग्रेषु हकार उकारबिन्दुकूटं हुमित्येतद्बीजं विलिख्य, पुनर्बहिरष्टदलं पद्मं विलिख्य, तत्केसरस्थानेष्वष्टसु स्वरान् द्वौ द्वौ विलिखेत् । पुनस्तेषु दळेषु मालामन्त्रवर्णान् षट्षट्संख्यया सप्तस्वपि दळेषु विलिख्य, अष्टमे अवशिष्टवर्णान् विलिखेत् ॥ तदुच्यते —

ओं नमो भगवते रघुनन्दनाय रक्षोघ्नविशारदाय मधुरप्रसन्नवदनायामित-तेजसे बलाय रामाय विष्णवे नमः । एतेन सप्तचत्वारिंशद्वर्णवता मालामन्त्रेण षट्संख्यया सप्तदळेषु अवशिष्टवर्णपञ्चकं अष्टमे च विलिख्य तद्बहिर्वृत्तं विलिख्य तस्मिन् कादिक्षान्तैर्वर्णैर्वेष्टयेत् । तद्बहिश्चतुरश्रं साष्टशूलाग्रं विलिख्य तस्य दिक्षु नारसिंह्मबीजं विलिख्य कोणेषु हुमिति वराहबीजं विलिखेत् ॥

क्षशब्दरेफ औकारबिन्दुना भूषितो मुने ।

नीलोत्पलानां होमेन वशयेदखिलं जगत् ।
विल्वप्रसूनैर्जुहुयादिन्दिरावाप्तये नरः ॥

दूर्वाहोमेन दीर्घायुः भवेन्मन्त्री निरामयः ।
रक्तोत्पलहुतैर्मन्त्री धनमाप्नोति वाञ्छितम् ॥

मेधाकामेन होतव्यं पलाशकुसुमैर्नवैः ।
तज्जप्तमम्भः प्रपिबेत्कविर्भवति वत्सरात् ॥

तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात् ॥

अथ सीताराममन्त्रोपि लिख्यते —

सुयज्ञ ऋषिः । जगती छन्दः । सीतारामो देवता । श्रीं बीजम् । स्वाहा शक्तिः । ओं क्लीं हृत् । श्रीं श्रीं शिरः । रां रामाय नमः शिखा । श्रीं सीतायै स्वाहा कवचम् । रां श्रीं श्रीं नेत्राभ्याम् । क्लीं ओं अस्त्रम् । ध्यानम् —

तप्ताष्टापदभां विदेहतनयां रामाङ्कपीठस्थितां
तद्वक्त्रेक्षणतत्परामनिमिषां हस्तस्थिताब्जोत्पलाम् ।
रामं दाशरथिं रमाकुचलसद्धस्तं तदास्येक्षणं
कस्तूरीरचितस्वदक्षिणकरं ध्यायेदभीष्टाप्तये ॥

प्रणवं मान्मथं बीजं लक्ष्मीबीजद्वयं तथा ।
राममन्त्रषडर्णं च सीतामन्त्रषडक्षरान् ॥

अग्निबीजं ततः पश्चात् रमाबीजद्वयं तथा ।
कामबीजं ततः पश्चात् प्रणवं च पुटं क्रमात् ॥

सीताराममहामन्त्रं जपेद्वाञ्छितमाप्नुयात् ।

ॐ क्लीं श्रीं श्रीं रां रामाय नमः, श्रीं सीतायै स्वाहा, रां श्रीं श्रीं क्लीं ओं॥
इति मन्त्रः ॥

एकविंशतिवर्णोयं भुक्तिमुक्तिप्रदो नृणाम् ॥

षडक्षरोक्तवत् जपपूजादिकम् ॥ अथ यन्त्रम्—

षट्कोणं पूर्वमालिख्य तदग्रे वृत्तमालिखेत् ।
बहिरष्टदळं पद्मं राममालां लिखेत् क्रमात् ॥

पूर्वादिदळपर्यन्तमवसानेऽवशिष्टकम् ।
षोडशार्णान्बहिर्लिख्य तद्बहिः प्रणवं लिखेत् ॥

षट्कोणमध्ये श्रीरामं लक्ष्मीबीजेन वेष्टयेत् ।
एवमुद्धृत्य विधिवत् मुद्रापट्कं प्रदर्शयेत् ॥

गन्धपुष्पादिधूपैश्च दीपनैवेद्यमेन च ।
एवं कुर्वीत मतिमान् रामसायुज्यमाप्नुयात् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तन्मध्ये रामबीजं विलिख्य तन्मध्ये साध्यनामादीन्विलिख्य * तन्मध्ये ध्यानश्लोकोक्त राममूर्त्याकारं विलिख्य षट्सु कोणेष्वपि रामबीजं रामिति विलिख्य तानि बीजानि प्रत्येकं श्रीबीजेन वेष्टयेत् ॥ बहिरष्टदळं पद्मं विलिख्य तेषु राममालामन्त्रवर्णान्पूर्वोक्तान् सप्तसु दळेषु षट्षट्संख्यया विलिख्य अवशिष्टानष्टमे विलिख्य तद्बहिर्वृत्तं विलिख्य तस्मिन् 'ओं नमः सीतापतये रामाय हन हन हुं फट्' इति षोडशाक्षरीमन्त्रेण वेष्टयेत् ॥ तद्बहिः प्रणवेन वेष्टयेदिति ॥

* एवं व्याख्यानस्थ बीजं मूले न विद्यते ॥ यन्त्रे मूर्तिस्वरूपलेखनमप्य-प्रसिद्धं भाति । षट्कोणस्य मध्येपि रामिति बीज विलिख्य श्रीबीजेन वेष्टयेदिति व्याख्यानं तु युक्तं भाति ॥

नारसिंहो महामन्त्रः भजतां कल्पभूरुहः ॥

पञ्चमस्वरसंयुक्तो हकारो बिन्दुभूषितः ।
वाराहबीजमित्युक्तं लक्ष्मीधनधराप्रदम् ॥

एतद्यन्त्रं समालिख्य सौवर्णे राजते पटे ।
भूर्जे वा सम्यगुद्धृत्य गुलिकीकृत्य धारयेत् ॥

अपुत्रो लभते पुत्रमधनो धनवान् भवेत् ।
किमत्र बहुनोक्तेन सर्वसिद्धिप्रदं नृणाम् ॥

यन्त्रमेतत्समालिख्य धारणात्पातकापहम् ।

इत्येवं यन्त्रमण्डलं विलिख्य तस्मिन्वैष्णवपीठे संपूज्य तदुपरि श्रीराममावाह्य उपचारैः समर्चयेत् । पूर्वमङ्गैष्षट्कोणेषु समर्चयेत् । पुनर्वामभागे सीतां तन्मन्त्रेण यजेत् । तन्मन्त्रस्तु —

जनक ऋषिः । गायत्री छन्दः । सीता श्रीर्देवता । श्रीं सीतायै नमः । इति सीतामन्त्रः । इमं मन्त्रं भार्यान्वितो जपेत् । तस्मादैश्वर्यसिद्धिर्भवति । पुनः शार्ङ्गाय नमः । इति देवस्य पुरतो यजेत् । शरेभ्यो नम इति देवस्य वामदक्षिणतो यजेत् । इत्थं प्रथमावृतिः । तद्बहिरष्टदळेषु प्राग्दळे हनुमते नम इति, पुनराग्नेये सुग्रीवाय नम इति, भरताय॰ विभीषणाय॰ लक्ष्मणाय॰ अङ्गदाय॰ शत्रुघ्नाय॰ जाम्बवते नम इत्यवशिष्टेषु दळेषु क्रमेण सर्वे च प्रणवाद्यास्समर्चनीयाः । एवं द्वितीयावृतिः । पुनर्धृष्टयै॰ जयन्ताय॰ विजयाय॰ सुराष्ट्राय॰ राष्ट्रवर्धनाय॰ अक्रोधाय॰ धर्मपालनाय॰ सुमन्त्राय॰ ८ एतैरष्टमन्त्रिभिः तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी । वज्रादिभिः पञ्चमी ॥ इति ॥

अथ प्रयोगविधिः —

मधुहोमेन जुहुयात् पायसेनैव वा पुनः ।
कुबेरसदृशो लक्ष्म्या विद्यया धिषणायते ॥

अथ राममन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तश्रीरामदशाक्षरीमन्त्रोपि लिख्यते —

दशाक्षरीमन्त्रस्य वसिष्ठ ऋषिः । विराट् छन्दः । सीतापाणिग्रहणसमर्थश्रीरामो देवता । क्लीं बीजम् । स्वाहा शक्तिः । क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि ।

राजाऽयोध्यानगरविलसन्मण्डपे रत्नभित्तौ
तत्तद्दिक्षु स्थितससुमनस्तोरणे दिव्यगन्धे ।
नानादिग्भ्यो धनपतिधनो दिव्यसिंहासनस्थो
दिव्याकारैरनुजनिवहैस्सेवितः स्वद्रुमूले ॥

दिव्यैर्माल्यैर्दिवि च सततं स्तूयमानस्सुरौघैः
प्राज्ञैः प्रान्ते दृढमुनिवरैर्वामदेवादिभिश्च ।
राकाचन्द्रोपमितसुमुखश्श्यामळश्चारुलक्ष्म्या
ध्येयस्सद्यो विरचितमहाराजराज्याभिषेकः ॥

हुं जानकीवल्लभाय स्वाहा । इति मन्त्रः ॥ अथाक्षरन्यासः —

मूर्ध्नि भाले भ्रुवोर्मध्ये आस्ये कण्ठे हृदि नाभौ गुह्ये जानौ पादयोरक्षरन्यासः । समस्तेन व्यापकन्यासः । षडक्षरोक्तेन विधानेन पूजां कुर्यात् ॥ लक्षं जपेत् पुरश्चरणार्थम् । अथ प्रयोगः—

जातिप्रसूनैर्जुहुयात् चन्दनाम्भस्समुक्षितैः ।
जनवश्याय कमलैः धनधान्याय संपदे ॥

अथ श्रीरामद्वादशाक्षरीमन्त्रस्य अगस्त्य ऋषिः । गायत्रीछन्दः । श्रीरामो देवता ॥ रां बीजम् । श्रीं शक्तिः । ओं हृत् । श्रीं शिरः । भरताग्रज राम शिखा । क्लीं कवचम् । स्वाहा अस्त्रम् ॥ ध्यानं पूर्ववत् ॥ ओं ह्रीं भरताग्रज राम क्लीं स्वाहा ॥ इति मन्त्रः ॥

अथ श्रीरामषोडशाक्षरीमन्त्रस्य अगस्त्य ऋषिः । बृहतीछन्दः । श्रीरामो देवता । रां बीजम् । श्रीं शक्तिः ॥ ओं हृत् । ह्रीं शिरः । मूलमन्त्रपदैः पञ्चाङ्गानि । ध्यानं पूर्ववत् ॥ ओं नमः सीतापतये रामाय हन हन हुं फट् ॥ इति मन्त्रः ॥

अथ श्रीरामद्वात्रिंशदक्षरीमन्त्रस्य अगस्त्यऋषिः । अनुष्टुप्छन्दः । श्रीरामो देवता । ओं बीजम् । श्रींशक्तिः । मन्त्रपादैः व्यस्तैस्समस्तैश्च पञ्चाङ्गानि ॥ ध्यानादि पूर्ववत् ॥

ओं रामभद्र महेष्वास रघुवीर नृपोत्तम ।
दशास्यान्तक मां रक्ष श्रियं मे देहि दापय ॥

इति मूलमन्त्रः ॥

अथ श्रीरामद्वात्रिंशदक्षरीमन्त्रान्तरम् —

शुकऋषिः । अनुष्टुप् छन्दः । श्रीरामो देवता । रां बीजम् । आयेति शक्तिः । पादचतुष्टयेन समस्तेन च पञ्चाङ्गानि । ध्यानादिकं पूर्ववत् ।

नमो ब्रह्मण्यदेवाय रामायाकुण्ठतेजसे ।
उत्तमश्लोकधुर्याय हस्तदण्डार्पितांघ्रये ॥

इति मूलमन्त्रः । लक्षजपः । साज्यपायसेन दशांशं होमः ।

अथ श्रीराममन्त्रान्तरम् —

अगस्त्यऋषिः । बृहती छन्दः । श्रीरामो देवता ॥ ह्रीं बीजम् । नमः शक्तिः । ओं ह्रीं श्रीं द्रां दाशरथाय सीतावल्लभाय त्रैलोक्यनाथाय नमः । इति मूलमन्त्रः त्रयोविंशत्यर्णः । पूर्ववत् ध्यानादिकम् ॥

अथ राममन्त्रप्रसङ्गात् लक्ष्मणादिमन्त्रा लिख्यन्ते —

लक्ष्मणमन्त्रस्य अगस्त्य ऋषिः । गायत्री छन्दः । लक्ष्मणो देवता । लं बीजम् । नमः शक्तिः । मम पुरुषार्थचतुष्टये(चतुष्टयसिध्यर्थे) विनियोगः ।

द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम् ।
धनुर्बाणकरं रामसेवासंसक्तमानसम् ॥

लं लक्ष्मणाय नमः ॥ इति मन्त्रः ॥

भरतशत्रुघ्नमन्त्रयोरपि ऋषिच्छन्दसी पूर्ववत् । भरतशत्रुघ्नौ देवता ॥ भं भरताय नमः ॥ शं शत्रुघ्नाय नमः ॥ इति मन्त्रः ॥

हनुमन्मन्त्रस्य ईश्वरऋषिः । अनुष्टुप् छन्दः । हनूमान् देवता ॥ ह्रां बीजम् । नमः शक्तिः । मं कीलकम् । मम हनुमत्प्रीत्यर्थे जपे विनियोगः । ओं नमो भगवते आञ्जनेयाय हृत् । रुद्रमूर्तये शिरः । वायुसुताय शिखा । अग्निगर्भाय कवचम् । रामदूताय नेत्रम् । ब्रह्मास्त्रनिवारणाय अस्त्रम् । एतैरेव करन्यासश्च ।

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ।
कुण्डलद्वयसंशोभिमुखाम्भोजं मुहुर्भजे ॥

ह्रीं ओं नमो भगवन् प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोवितान-धवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लङ्कापुरीदहन उदधिबन्धन दशग्रीव-कृतान्तक सीताश्वासन अञ्जनागर्भसंभव रामलक्ष्मणानन्दकर कपिसैन्यप्राकारक

सुग्रीवधारण पर्वतोत्पाटन बालब्रह्मचारिन् गम्भीरशब्द सर्वग्रहविनाशन सर्वज्वरोत्सादन डाकिनीविध्वंसिन् ओं ह्रीं हा हा हा हंस हंस एहि सर्वविषं हर हर परबलं क्षोभय क्षोभय मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा ॥ इति हनुमन्मालामन्त्रः ॥

एतान् लक्ष्मणादिमन्त्रान् राममन्त्राङ्गत्वेन यथाशक्ति जपेत् ॥

अथ श्रीराममन्त्रप्रसङ्गात् श्रीरामसन्ध्यावन्दनमपि कल्पान्तरोक्तमत्र योग्यतावशात् लिख्यते --

अस्य श्रीरामसन्ध्यावन्दनस्य अगस्त्यभगवान् ऋषिः । गायत्री छन्दः । श्रीरघुनाथो देवता । अस्त्रमन्त्रेण जलं संशोध्य चक्रीकृत्य कवचमन्त्रेणावकुण्ठ्य पश्चात्, 'ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥" इति मन्त्रेणादित्यात् जलं प्रार्थ्य अंकुशमुद्रया मण्डलं विभिद्य करे तज्जलमादाय, 'गङ्गे च यमुने चे'ति मन्त्रेण तज्जलं जले प्रतिष्ठाप्य आवाहनादिषण्मुद्राः प्रदर्शयेत् । आवाहितो भव । संस्थापितो भव । सन्निहितो भव । संपिण्डितो भव । संमुखो भव । अमृतायितो भव । इति । पश्चात् गन्धपुष्पधूपदीपनैवेद्यैः संपूज्य, ओं नमो भगवते रघुनन्दनाय रक्षोघ्नविशारदाय मधुरप्रसन्नवदनायामिततेजसे बलाय रामाय विष्णवे नमः इति मालामनुना अञ्जलिना जलमादाय, दक्षिणकरस्थं जलं वामकरे निक्षिप्य, मालामनुं नवधा विभज्य, नवप्रोक्षणं कुर्यात् । अवशिष्टं जलं दक्षिणकरे गृहीत्वा, 'हुं जानकीवल्लभाय स्वाहा' इति पिबेत् । पश्चादर्घ्यम् ॥ अस्य श्रीरामार्घ्यमन्त्रस्य । अगस्त्य ऋषिः । गायत्री छन्दः । श्रीरामचन्द्रो देवता । दाशरथाय अंगुष्ठाभ्यां नमः । विद्महे तर्जनीभ्यां नमः । सीतावल्लभ मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । तन्नो रामः कनिष्ठिकाभ्यां नमः । प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । इति करे न्यस्त्वा अनेन मन्त्रेणाङ्गन्यासं कुर्यात् । दाशरथाय हृत् । विद्महे शिरः । सीतावल्लभ

शिखा । धीमहि कवचम् । तन्नो रामः नेत्रम् । प्रचोदयात् अस्त्रम् ॥ इति । पश्चात्,

सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् ।
नमामि पुण्डरीकाक्षमाञ्जनेयगुरुं परम् ॥

इति श्लोकेन सूर्यमण्डले रामं ध्यात्वा दाशरथाय विद्महे *सीतावल्लभ धीमहि । तन्नो रामः प्रचोदयात् ॥ इति रविमण्डलमध्यस्थाय रामाय नमोर्घ्यं समर्पयामि इत्यर्घ्यत्रयं समर्प्य जलमादाय तीरे गत्वा श्रीं सीतायै स्वाहेति आत्मानं परिषिच्यादित्याभिमुखो भूत्वा श्रीरामचन्द्रोहमस्मीति आत्मानं भावयेत् । ततो जलमाविश्य रां रामाय नमः रामं तर्पयामि इत्येकविंशतिवारं संतर्प्य पश्चात्सीतादीन् तत्तन्मनुना तर्पयेत् । अवशिष्टश्रीरामदेवताः संगृह्य समस्तश्रीरामदेवताभ्यस्तर्पयामि इति तर्पयेत् ॥ ततः ऐं रामाय नम इति करे जलमादायाभिमन्त्र्य त्रिः पिबेत् । ततः आचम्य रामाय नम इति अनुष्ठितं सर्वं रामायार्पयेत् ॥ इति रामसन्ध्योपासनविधिः ॥

अथ गायत्री—

अस्याः श्रीरामगायत्र्याः पूर्ववत् ऋष्यादि । पूर्ववदेवाङ्गन्यासः करन्यासश्च । सूर्यमण्डलमध्यस्थमित्यनेन ध्यात्वा सूर्यमण्डलस्थिताय रामाय गन्धादिपञ्चोपचारं कृत्वा आदित्याभिमुखो भूत्वा अनामिकामूले अंगुष्ठं निधाय "दाशरथाय विद्महे" इति गायत्रीं जपेत् । ततः- गुह्यातिगुह्यगोप्तस्त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देव त्वामहं शरणं गतः ॥ इति रामगायत्रीं रामाय समर्प्याङ्गन्यासं कृत्वोपस्थानं कुर्यात् ॥

उपस्थानमन्त्रः--

नमस्ते रामदेवाय ज्योतिषांपतये नमः ।

* वल्लभाय इति मूलग्रन्थे विपरिणामितः पाठः ।

साक्षिणे सर्वभूतानामत्यन्तानन्दमूर्तये ॥

रघुनाथाय दिव्याय महाकारुणिकाय च ।
नमोस्तु कौशिकानन्ददायिने ब्रह्मरूपिणे ॥

त्रिकालमेवं यः कुर्यात् राम एव भवेत्स्वयम् ।
इति श्रीरामसन्ध्यावन्दनविधिस्समाप्तः ॥

*अथ श्रीराममन्त्रप्रसङ्गात् हनूमन्मन्त्रोपि लिख्यते* --

ब्रह्मा ऋषिः । गायत्री छन्दः । हनूमान्देवता । ह्रां बीजम् । ह्रीं शक्तिः । श्रीहनुमत्प्रीत्यर्थे विनियोगः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ।

ध्यानम् —

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

ओं नमो भगवते हनुमते मम मदनक्षोभं संहर संहर आत्मतत्वं प्रकाशय प्रकाशय हुंफट् स्वाहा ॥ इति मन्त्रः । विद्याप्रदः ॥

हनूमन्मन्त्रान्तरमाह —

कर्शि कुक्ष वरवर अञ्जनावरपुत्रं *आवेशि आवेशि ओं ह्रीं हनुमन् फट् । पूर्वोक्तवदङ्गऋष्यादिध्यानम् । अनेन पिशाचादिनिवृत्तिः ॥

अथ प्रसङ्गात् मन्त्रसारोक्तहनूमन्मन्त्रोप्यत्र योग्यतावशात् लिख्यते —

वसिष्ठ ऋषिः । अनुष्टुप्छन्दः । हनूमान् देवता । ओं नमो हनुमते हृत् । मम मदनक्षोभं शिरः । संहर संहर शिखा । आत्मतत्वं कवचम् । प्रकाशय प्रकाशय नेत्रम् । हुंफट् स्वाहा अस्त्रम् ॥

* आवेशय आवेशय इति ङ मातृकापाठः

वामे जानुनि वामबाहुमपरं ज्ञानाख्यमुद्रायुतं
हृद्देशे कलयन् वृतो मुनिगणैरध्यात्मदत्तेक्षणः ।
आसीनः कदळीवने मणिमये बालार्ककोटिप्रभो
ध्यायन्ब्रह्म परं करोतु मनसः * सिद्धिं हनूमान्मम ॥

ओं नमो हनूमते मम मदनक्षोभं संहर संहर आत्मतत्वं प्रकाशय प्रकाशय हुंफट् स्वाहा । मदनक्षोभशान्तिविद्याप्रधानोयं मन्त्रः ॥

शीर्षालिकश्रवणनेत्रकपोलनासादोःपादसन्धिकटिनाभिसपार्श्वहृत्सु ।
कण्ठांसयुग्ममुखमूर्धसु च क्रमेण मन्त्राक्षरान्न्यसतु शुद्धमतिः स्वदेहे ॥

लक्षं जपेत् । कदळीपक्वैर्वा पनसपक्वैर्वा स्वादुप्लुतैर्दशांशं पुरश्चरणाहोमः ॥

अथ पूजा — नवशक्तिरहिते सामान्यपीठे आवाह्य अङ्गैः प्रथमावृतिः । जाम्बवते० विनताय० नीलाय० पनसाय० गन्धमादनाय० सुषेणाय० मैन्दाय० द्विविदाय० ८ इति द्वितीयावृतिः । लोकेशैस्तृतीया । तदायुधैश्चतुर्थी । अस्य यन्त्रम् —

कर्णिकायां लिखेत्तारं साध्यगर्भं च तद्बहिः ।
अष्टपत्रे केसरोद्यत्स्वरद्वन्द्वे मनोः क्रमात् ॥

आद्ये सप्त द्वितीये च चतुरोर्णांस्तृतीयके ।
सप्त तुर्ये पञ्चमे च त्रीणि त्रीण्यक्षराण्यपि ।
षट्सप्ताष्टमपत्रेषु चतुरश्चतुरोऽक्षरान् ॥

वृत्तोल्लसत्कादिवर्णं भूपुराश्रस्थतारकम् ।
हनूमतो यन्त्रमेतत् वाञ्छितार्थप्रदं परम् ॥

* शुद्धिं इति ङ पाठः ।

इदमेव विलिख्य साधु यन्त्रं नवनीते प्रतिजप्य मन्त्रमेनम् ।
परिभक्षयतामनङ्गपीडा प्रशमं गच्छति शुद्धिमेति चेतः ॥

प्रयोगान्तरम्—

आदाय दोष्णा सलिलं प्रसन्नं प्रजप्य मन्त्रं प्रपिबेत् त्रिवारम् ।
रागादिदोषप्रशमाय बुद्धेः ज्ञानोदयाय प्रशमाय वृत्तेः ॥

अथ विद्याप्रदमन्त्रप्रसङ्गात् विद्याप्रदविद्यागोपालमन्त्रोपि लिख्यते—

श्रीनारदऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । मन्त्रेण व्यस्तेन समस्तेन वा पञ्चाङ्गानि ॥

ध्यानम्—

दिव्योद्याने विवस्वत्प्रतिममणिमये मण्डपे योगपीठे
मध्ये यस्सर्ववेदान्तमयसुरतरोस्सन्निषण्णो मुकुन्दः ।
वेदैः कल्पद्रुरूपैः *शिखरिशतसमालम्बिकोशैश्चतुर्भिः
न्यायैस्तर्कैः पुराणैस्स्मृतिभिरभिवृतस्तादृशैश्चामराद्यैः ॥

दद्याद्भिश्रत्कराब्जैरदिरमुरलीपुष्पबाणेक्षुचापान्
अक्षस्रक्पूर्णकुम्भौ स्मरललितवपुर्दिव्यभूषाङ्गरागः ।
व्याख्यां वाचे वितन्वन् स्फुटरुचिरपदां वेणुना विश्वमात्रे
शब्दब्रह्मोद्भवेन श्रियमरुणरुचिर्वल्लवीवल्लभो नः ॥

कृष्ण कृष्ण महाकृष्ण सर्वज्ञ त्वं प्रसीद मे ।
रमारमण विश्वेश विद्यामाशु प्रयच्छ मे ॥

इति मन्त्रः ॥ लक्षं जपेत् ॥

* शिखरितशतमालम्बि इति ग ट पाठः

अथ विद्यागोपालप्रसङ्गात् क्रमदीपिकोक्तविद्याप्रदगोपालकमन्त्रोपि लिख्यते श्रीनारद ऋषिः । गायत्री छन्दः । श्रीकृष्णो देवता । ऐं क्लीं कृष्णाय हृत् । ह्रीं गोविन्दाय शिरः । श्रीं गोपीजन शिखा । वल्लभाय कवचम् । स्वाहा सौः अस्त्रम् ॥ ध्यानम्—

वामोर्ध्वहस्ते दधतं विद्यासर्वस्वपुस्तकम् ।
अक्षमालां च दक्षोर्ध्वे स्फाटिकीं मातृकामयीम् ॥

शब्दब्रह्ममयीं वेणुमधःपाणिद्वयेरितम् ।
गायन्तं पीतवसनं श्यामळं कोमलच्छविम् ॥

बर्हिबर्हकृतोत्तंसं सर्वज्ञं सर्ववेदिभिः ।
उपासितं मुनिगणैरुपतिष्ठेद्धरिं सदा ॥

ध्यात्वैवं प्रमदावेषविलासं भुवनेश्वरम् ।
चतुर्लक्षं जपेन्मन्त्रममुं मन्त्री सुसंयतः ॥

ऐं क्लीं कृष्णाय ह्रीं गोविन्दाय श्रीं गोपीजनवल्लभाय स्वाहा सौः ॥ इति मन्त्रः द्वात्रिंशत्यक्षरः। विद्याफलप्रधानोयं मन्त्रः । चतुर्लक्षजपः । त्रिमधुरसिक्तैः पलाशकुसुमैः दशांशं जुहुयात् पुरश्चरणार्थम् । त्रिंशत्यक्षरी-विधानोक्तवत्पूजा । अस्य मन्त्रस्य फलमाह—

योस्मिन्निष्णातधीर्मन्त्री वर्तते वक्त्रगह्वरात् ।
गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् ॥

सर्ववेदेषु शास्त्रेषु सङ्गीतेषु च पण्डितः ।
संवित्तीं परमां लब्ध्वा चान्ते भूयात्परं पदम् ॥

अथ गोपालसामान्यात् सन्तानगोपालमन्त्रोपि लिख्यते—

श्रीनारद ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । ग्लौं बीजम् । नमः शक्तिः । पुत्रार्थे विनियोगः । देवकीसुत गोविन्द हृत् । वासुदेव जगत्पते शिरः । देहि मे तनयं कृष्ण शिखा । त्वामहं शरणं गतः कवचम् । ओं नमः अस्त्रम् ॥ ध्यानम्—

वैकुण्ठादागतं कृष्णं रथस्थं करुणानिधिम् ।
किरीटिसारथिं पुत्रानानयन्तं परात्परम् ॥

आदाय तान् रथस्थांश्च गुरवे वैदिकाय च ।
अर्पयन्तं महाभागं ध्यायेत्पुत्रार्थमच्युतम् ॥

ओं श्रीं ह्रीं क्लीं ग्लौं

देवकीसुत गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥

इति मन्त्रः ॥

अथ सन्तानगोपालमन्त्रान्तरमप्यत्र लिख्यते—

ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीकृष्णो देवता । क्लीं बीजम् । नमः शक्तिः । पुत्रार्थे विनियोगः । क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि । ध्यानम्—

शङ्खचक्रगदापद्मं दधानं सूतिकागृहे ।
अङ्के शयानं देवक्याः कृष्णं वन्दे विमुक्तये ॥

ओं नमो भगवते जगत्प्रसूतये नमः ॥ इति मन्त्रः ।

अथ सन्तानगोपालमन्त्रप्रसङ्गात् सनत्कुमारीयोक्तसन्तानगोपालमन्त्रोपि लिख्यते—

श्रीनारद ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । क्लां हृत् ।

क्लीं शिरः । इत्याद्यङ्गानि । अथवा, देवकीसुत गोविन्द हृत् । वासुदेव जगत्पते शिरः । देहि मे तनयं कृष्ण शिखा । त्वामहं शरणं गतः कवचम् । समस्तैरस्त्रम् ।

ध्यानम् —

शङ्खचक्रगदापद्मं धारयन्तं जनार्दनम् ।
अङ्के शयानं देवक्याः सूतिकामन्दिरे शुभे ॥

एवंरूपं सदा कृष्णं सुतार्थी भावयेत्सुधीः ।
देवकीसुत गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥

इति मन्त्रः । मन्त्रत्रयस्यापि त्रिलक्षजपः ।

अथास्यैव सन्तानगोपालमन्त्रस्य पूजादिकं सनत्कुमारीयोक्तप्रकारेण लिख्यते —

वैष्णवपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । इन्द्रादिभिर्द्वितीया । वज्रादिभिस्तृतीया ।

दशम्यपररात्रौ तु शुक्लपक्षेऽर्चयेद्धरिम् ।
पुत्रार्थे स्वस्तिके न्यस्य शरावं घृतसंयुतम् ॥

कर्पूरवर्तीर्न्यस्यास्मिन् ज्वालयेद्दीपमुत्तमम् ।
पद्ममष्टदळं कृत्वा तत्रस्थं कृष्णमर्चयेत् ॥

सर्वोपचारसंयुक्तं परिवारगणैस्सह ।
त्रिसन्ध्यमर्चयेद्देवमेकादश्यां जनार्दनम् ॥

क्षीरवृक्षकषायेण संपूर्य कलशद्वयम् ।
तत्रावाह्याच्युतं भक्त्या प्रोक्तवत्पूजयेत्पुनः ॥

संस्पृश्य कलशद्वन्द्वमष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं चापि जपेन्मन्त्रमनन्यधीः ॥

द्वादश्यामथ गोविन्दं संपूज्य विधिपूर्वकम् ।
शाल्यन्नं पायसं स्वादु गोसर्पिर्गुळमिश्रितम् ॥

पक्वाम्रमोचफलवत्ससूपापूपतण्डुलम् ।
स्वादूपदंशं सुस्निग्धं कपिलादधिखण्डवत् ॥

निवेदयेत्स्वर्णपात्रे पात्रभूताय विष्णवे ।
सुशीतलैश्च कर्पूरैः पाटलीसुरभीकृतम् ।
वस्त्रपूतं स्वच्छतरं पानीयं च निवेदयेत् ॥

स्ववित्तशक्त्या गोविन्दबुध्या श्रद्धापवित्रया ।
द्विजेभ्यो भोजनं दद्यात्सर्वकामसमृद्धिमान् ॥

संस्कृते चानले विष्णुमावाह्यार्घ्यादिभिर्यजेत् ।
हविषाऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥

हुत्वा शिष्टं कचिद्द्रव्यं घृतेनाष्टशतं हुनेत् ।
संपातं कलशद्वन्द्वे निषिच्येमौ च दंपती ॥

अभिषिच्य पुनस्ताभ्यां ध्यायन्स्तोत्रमयं हरिम् ।
अष्टोत्तरशतं जप्त्वा हविश्शेषं प्रदापयेत् ॥

कृष्णं ध्यात्वा तु तं पत्नी तमादाय सुखासने ।
आसीना प्राङ्मुखी भूत्वा एनं विष्णुं प्रभक्षयेत् ॥

सुभुक्तान्ब्राह्मणवरान् ताम्बूलैर्मोदकादिभिः ।
सन्तर्प्याथ नमस्कुर्यात् विष्णुं बुध्द्या च तान्द्विजान् ॥

ततस्ताभ्यामिष्टसिद्धिर्युवयोरस्त्विति द्विजाः ।
ब्रूयुस्तौ च सुसंहृष्टौ फलितं नोऽभिवाञ्छितम् ॥

इति स्मरन्तावनघौ भुञ्जीयातामनन्तरम् ।
एवं यः कुरुते विप्रो वित्तशाठ्यविवर्जितः ॥

विष्णुभक्तो विशिष्टोथ द्वादश्यां सितपक्षके ।
सोचिराल्लभते पुत्रमायुष्मन्तं सुवर्चसम् ॥

सन्ततेश्चाधिकर्तारं विष्णुभक्तं महामतिम् ।
दरिद्रः कर्तुमेवं यः न शक्नोति द्विजोत्तमः ॥

जपेद्वा तर्पयेद्वापि सोपि पुत्रमवाप्नुयात् ।

अथ सन्तानगोपालमन्त्रप्रसङ्गात् अस्यैव मन्त्रसारोक्तं सन्तानकरं यन्त्रं लिख्यते --

कामं मध्ये स्वरयुगलसत्केसरेष्वष्टपत्रे-
ष्वालिख्यैवं जलनिधिमितान्मन्त्रवर्णान् क्रमेण ।
भूयो हलिभर्बहिरभिवृतं भूपुरस्थं तदेतत्
यन्त्रं सद्यो वितरति नृणां पुत्रपौत्रादिवृद्धिम् ॥

अस्यार्थः— प्रथममष्टपत्रं पद्मं विलिख्य तत्कर्णिकायां क्लीमिति कामबीजं विलिख्य तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत् । पुनरष्टपत्रकेसरेषु अकारादिषोडशस्वरान् द्वौ द्वौ विलिखेत् । पुनर्दलमध्येषु सन्तानगोपालक(मन्त्र)वर्णान् चतुरश्चतुरो विलिखेत् । पुनस्तद्बहिर्वृत्तं विलिख्य, तस्मिन् कादिवर्णैः वेष्टयेत् । पुनस्तद्बहिः चतुरश्रं विलिखेत् । एवं नवनीते वा स्वर्णादिपट्टे वा विलिख्य नारी उपयुञ्जयात् । तस्मात्पुत्रं प्रसूते ॥

अथ सन्तानकरयन्त्रप्रसङ्गात् यन्त्रसारोक्तं सन्तानकरं पुरुषसूक्तयन्त्रमप्यत्र लिख्यते—

पट्कोणकर्णिकामध्ये तारं साध्यसमन्वितम् ।
सुदर्शनषडर्णं च षट्सु कोणेषु सन्धिषु ॥

तदङ्गानि चतुष्पत्रकेसरेषु क्रमेण च ।
गोपालकंचतुर्वर्णमन्त्रस्यैकैकमक्षरम् ॥

दळेषु द्वादशार्णस्य त्रीणि त्रीण्यक्षराणि च ।
अष्टपत्रे केसरोद्यदष्टार्णैकैकवर्णके ॥

नृसिंहानुष्टुभो वर्णान् चतुरश्चतुरस्ततः ।
सुदर्शनाष्टवर्णं केसरे षोडशच्छदे ॥

ऋचां पुरुषसूक्तस्य क्रमात् षोडशकं बहिः ।
मातृकार्णोल्लसद्वृत्तं भूपुराश्रस्थतारकम् ॥

यन्त्रं पुरुषसूक्तस्य पुत्रायुःकीर्तिकान्तिदम् ।
सर्वपापहरं श्रीदं धर्मार्थसुखमोक्षदम् ॥

हय्यङ्गवीने प्रविलिख्य यन्त्रं त्रिवारमेतत्प्रतिजप्य सूक्तम् ।
प्रातस्समद्याद्वनिता विदग्धं पुत्रं प्रसूते कमलाक्षतुल्यम् ॥

घोरे विषे घोरतरेऽभिचारे घोरे ज्वरे घोरतरे च शूले ।
हय्यङ्गवीने प्रविलिख्य यन्त्रं प्रभक्षयेत्तत्प्रशमाय जप्त्वा ॥

अस्यार्थः—प्रथमं पट्कोणं विलिख्य तन्मध्ये प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत् । पुनः सहस्रार हुं फडिति सुदर्शनषडर्णान् षट्सु कोणेषु विलिखेत् । पुनः कोणद्वन्द्वान्तराळेषु आचक्राय

स्वाहा हृदयाय नमः । विचक्राय स्वाहा शिरसे स्वाहा । सुचक्राय स्वाहा शिखायै वषट् । धीचक्राय स्वाहा कवचाय हुम् । संचक्राय स्वाहा नेत्रत्रयाय वौषट् । ज्वालाचक्राय स्वाहा अस्त्राय फट् । इत्येतानि सुदर्शनषडङ्गानि विलिखेत् । पुनस्तद्बहिः चतुर्दलं पद्मं विलिख्य, तत्केसरेषु "क्लीं कृष्ण क्लीं" इति गोपालक(मन्त्र)चतुर्वर्णान् विलिखेत् । पुनस्तद्दळमध्येषु, "ओं नमो भगवते वासुदेवाय" इति द्वादशाक्षरमन्त्रस्य त्रीणि त्रीण्यक्षराणि विलिखेत् । पुनस्तद्बहिरष्टपत्रं पद्मं विलिख्य, तत्केसरेषु, "ओं नमो नारायणाय" इत्यष्टाक्षरस्य एकैकमक्षरं विलिखेत् । पुनस्तद्दळमध्ये,

'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥"

इति नृसिंहद्वात्रिंशदर्ण(मन्त्र)स्य चतुरश्चतुरोक्षरान् विलिखेत् । पुनस्तद्बहिः षोडशपत्रं विलिख्य तत्केसरेषु "ओं नमो भगवते महासुदर्शनाय हुंफट्" इति सुदर्शनषोडशाक्षरस्यैकैकमक्षरं विलिखेत् । पुनस्तद्दळमध्ये ऋग्वेदोक्तपुरुषसूक्तस्य षोडश ऋचः क्रमेण षोडशदळेषु विलिखेत् । तद्बहिर्वृत्तं विलिख्य तस्मिन्मातृकावर्णैर्वेष्टयेत् । पुनस्तद्बहिः चतुरश्रं विलिख्य तत्कोणेषु प्रणवं विलिखेत् । एवं नवनीते विलिख्य षोडशसहस्रसंख्यं सूक्तं जपित्वा वनितां प्राशयेत् । तस्मात्पुत्रं प्रसूते । अथवा ज्वरग्रस्तं वा आभिचारग्रस्तं वा शूलव्याधिग्रस्तं वा एवं विलिख्य जप्त्वा प्राशयेत् । तच्छान्तिर्भविष्यति ॥

अथ प्रसङ्गात् ऋग्विधानोक्तप्रकारेण पुरुषसूक्तेन सन्तानयागविधिर्लिख्यते —

सहस्रशीर्षेति षोडश(ऋचां) नारायणऋषिः । अनुष्टुप् छन्दः । भगवान्पुरुषो देवता ।

सहस्रशीर्षेतिसूक्तं त्रिवारं च दिनेदिने ।
विष्ण्वादिसर्वदेवानां सर्वार्चनफलं लभेत् ॥

त्रिवारं जपेदित्यर्थः ॥

शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामस्तु चरुं कुर्वीत वैष्णवम् ॥

विष्णवे त्वा जुष्टं निर्वपामीत्यनेन प्रकारेणेत्यर्थः ।

दम्पत्योरुपवासस्स्यादेकादश्यां शिवालये ।
ऋग्भिष्षोडशभिस्सम्यगर्चयित्वा जनार्दनम् ॥

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
पूजितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥

चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं सूनुमचिरात्संततिक्षमम् ॥

द्वादश्यां सम्यक्पयसा निर्वपेद्वैष्णवं चरुम् ।
यः करोति सहस्रं वा याति विष्णोः परं पदम् ॥

होममिति शेषः । अयं होमः सन्तानार्थं न भवति । पुनः,

हुत्वाऽग्निं विधिवद्भक्त्या ऋग्भिष्षोडशभिर्बुधः ।
कृताञ्जलिपुटो भूत्वा स्तुवन्नाशीः प्रयोजयेत् ॥

अस्त्यत्रोपदेशः । प्रथमं षोडशभिः ऋग्भिः आज्याहुतिं हुत्वा, पुनस्ताभिः पक्वाहुतिं च कृत्वा पुनरप्याज्याहुतिं कुर्यादित्यर्थः ।

समिधोऽश्वत्थवृक्षस्य हुत्वाऽज्यं जुहुयात्पुनः ।
उपस्थाय हुताशस्य ध्यात्वाच्यं मधुसूदनम् ॥

हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतश्शुचिः ।
सूक्तेन जुहुयादाज्यं हविश्शेषं तु पूर्ववत् ॥

पूर्ववदवदाय स्विष्टकृद्धोमं कुर्यादित्यर्थः ।

अस्त्यत्रोपदेशः । अश्वत्थसमिधः षोडशभीऋग्भिर्हुत्वा एकैकहोमानन्तरं तत्तदृग्जपपूर्वकं अश्वत्थपत्रषोडशकं क्रमेण पुरतो निधाय पुनराज्याहुतिसमयेऽपि एकैकाहुत्यनन्तरं तत्तदृग्जपपूर्वकं तेषु पत्रेषु संपातं च गृहीत्वा, पुनश्चरुहोमसमयेपि तथैव संपातं गृहीत्वा, आज्यहोमसमयेपि तथैव गृह्णीयात् । तदुपरि च षोडशपत्रैराच्छादयेदित्यर्थः ॥

हविश्शेषं नमस्कृत्वा नारी नारायणं पतिम् ।
भक्षयित्वा हविश्शेषं लब्ध्वाशीस्संविशेत् क्षपाम् ॥

अस्त्यत्रोपदेशः । आचार्यस्तु नारीं पुरुषसूक्तन्यासादिकं कारयित्वा अश्वत्थपत्रस्थं संपातमेकैकऋग्जपपूर्वकं अश्वत्थपत्रेणैव तस्या आस्ये विनिक्षिपेत् । पुनस्संपातपिधायकाश्वत्थपत्रैर्जलानुपानं च एकैकऋग्जपपूर्वकं दद्यादित्यर्थः ।

ततः कृत्वा त्विदं कर्म कर्तव्यं द्विजतर्पणम् ।
द्वितीया स्त्री निवर्तेत या च गर्भं न विन्दति ॥

अपुत्रा मृतपुत्रा वा या च कन्यां प्रसूयते ।
क्षिप्रं सा जनयेत्पुत्रं ऋश्यशृङ्गो यथाब्रवीत् ॥

इत्थं ऋग्विधाने प्रोक्तः ॥

अथ पुरुषसूक्तपूजाविधिः—

आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥

चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥

यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
दशम्या पुष्पदानं स्यादेकादश्या च धूपकम् ॥

द्वादश्या च तथा दीपं त्रयोदश्या चरुं तथा ।
चतुर्दश्याञ्जलिं कृत्वा पञ्चदश्या प्रदक्षिणम् ॥

षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ।
एवं पुरुषसूक्तपूजाविधिस्समाप्तः ॥

अथ न्यासविधिः—

ॐ नारायण ऋषिः । अनुष्टुप् छन्दः । पुरुषो देवता । अतो देवा अवन्तु नः ॐ भूः पुरुषाय नमः हृत् । इदं विष्णुर्विचक्रमे ॐ भुवः पुरुषाय नमः शिरः । त्रीणि पदा विचक्रमे ॐ सुवः पुरुषाय नमः शिखा । विष्णोः कर्माणि पश्यत ॐ महः पुरुषाय नमः कवचम् । तद्विष्णोः परमं पदं ॐ जनः पुरुषाय नमः नेत्रत्रयाय । तद्विप्रासो विपन्यवः ऋक् सर्वत्र ॐ भूर्भुवस्सुवः सत्यपुरुषाय नमः अस्त्रम् ॥ इति ॥ ध्यानम्—

गोक्षीराभं पुण्डरीकासनस्थं चक्राब्जाढ्यं शङ्खकौमोदकीभ्याम् ।
श्रीभूमिभ्यामर्चितं योगनिष्ठं ध्यायेदेवं पूजयेत्पूरुषेण ॥

अथ न्यासः—

वामाङ्गाद्ये करचरणजानूरुयुग्मेषु नाभौ
हृत्कण्ठांसद्वितयवदनाक्ष्युत्तमाङ्गेषु मन्त्री ।

तत्राक्षीत्येकमेव स्थानम् । एवं षोडशभिः ऋग्भिर्न्यसेत् । स एष

संहृतिन्यासः ॥ एतद्विपरीतस्थानेन सृष्टिन्यासः ॥ नाभावारभ्य करान्तं न्यस्त्वा, शिष्टाभिश्शिरआदिहृदन्तं न्यसेत् । एष स्थितिन्यासः ॥

अथ "घोरे ज्वरे घोरतरे च शूले" इति पुरुषसूक्तयन्त्रस्य पूर्वं ज्वरशान्तिप्रदत्वमुक्तं किल तत्प्रसङ्गात् ज्वरशान्तिकरं कुबेरयन्त्रमपि मन्त्रसारोक्तमत्र योग्यतावशाल्लिख्यते —

कर्णिकायां लिखेत्तारं क्रमात्पत्रेषु चाष्टसु ।
वर्णान् कुबेरमन्त्रस्य चतुरश्चतुरो बहिः ॥

रक्षोहणं वाजिनमित्यृचा मातृकया वृतम् ।
भूपुराश्रिषु ठंबीजं वंबीजं दिक्षु चालिखेत् ॥

एतद्यन्त्रं कुबेरस्य रक्षाकरमनुत्तमम् ।
चातुर्थिकादिविषमज्वरौघानाशु हन्ति च ॥

अस्यार्थः— प्रथममष्टपत्रं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत् । पुनरष्टपत्रेषु,

कुबेरं ते मुखं रौद्रं नन्दिमानन्दिमावह ।
ज्वरं मृत्युं भयं घोरज्वरं नाशय मे ज्वर ॥

इत्यस्य मन्त्रस्य वर्णान् चतुरश्चतुरो विलिखेत् । पुनस्तद्बहिर्वृत्तद्वयं विलिख्य पूर्ववृत्ते "रक्षोहणं वाजिनमाजिघर्मि" इत्यृचा वेष्टयेत् । द्वितीये वृत्ते मातृकया वेष्टयेत् । तद्बहिर्भूपुरं विलिख्य तत्कोणेषु ठंठं इति विलिख्य, तद्दिक्षु वंवं इति विलिखेत् । एवं विलिख्य धृते उक्तफलं भवति ॥

अथ ज्वरशान्ति(कर)यन्त्रप्रसङ्गात् ज्वरशान्तिप्रदो मन्त्रः कल्पान्तरोक्तः शैवज्वरविषयोऽत्र योग्यतावशाल्लिख्यते ॥

ज्वरमन्त्रस्य कालाग्निः ऋषिः । अनुष्टुप् छन्दः । कालज्वरो देवता । आं बीजम् । ज्वरः शक्तिः । ज्वरशमनार्थे विनियोगः ।

रक्त त्रिणेत्र त्रिपद त्रिहस्त त्रिशूलिनं रुद्रसुतं कृशाङ्गम् ।
भस्मायुधं चक्रशशाङ्कमौळि ध्यायेत्समस्तं त्रिपदं ज्वरं तम् ॥

त्रिपादहस्तनेत्राय त्रिशीर्षाय नमो नमः ।
ज्वराय व्याधिराजाय दक्षारे श्वासमूर्तये ॥

ॐ त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतस्सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥

कुबेरं ते मुखं रौद्रं नन्दिमानन्दिमावह ।
ज्वरं मृत्युं भयं घोरज्वरं नाशय मे ज्वर ॥

भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि ।
तन्नो ज्वरः प्रचोदयात् ॥

अथ शैवज्वरमन्त्रानन्तरं वैष्णवज्वरशान्तिकरमन्त्रोप्यत्र योग्यतावशा-लिख्यते —

आद्यन्तनन्तः कवयः पुराणाः सूक्ष्मा बृहन्तो ह्यनुशासितारः ।
सर्वान् ज्वरान् घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥

ज्वरं च ज्वरसारं च ज्वरातीसारमेव च ।
शीतज्वरं तथा धूम्रं सन्निपातज्वरं तथा ॥

एकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम् ।
चातुर्थिकं तथात्युग्रं तथा सन्ततकज्वरम् ॥

दोषोत्थं सन्निपातोत्थं तथैवागन्तुकज्वरम् ।
शमं नयाशु गोविन्द छिन्धि भिन्ध्यस्य वेदनाम् ॥

अथ कुबेरमन्त्रप्रसङ्गात् कुबेरस्य लोकपालत्वात् लोकपालमुख्यस्येन्द्रस्यापि मन्त्रो मन्त्रसारोक्तैन्द्रगायत्र्याख्योत्र योग्यतावशात् लिख्यते—

सुकक्ष ऋषिः । गायत्री छन्दः । विबुधेश्वरो देवता । यदद्य हृत् । कच्च वृत्रहन् शिरः । उदगा अभिसूर्य शिखा । सर्वं तदिन्द्र कवचम् । ते वशे अस्त्रम् ॥ ध्यानम्—

पारिजाततरुमूलबद्धमणिकुट्टिमोपरिसमाश्रितं
पाणिपङ्कजयुगात्तरत्नकलशाभिषिक्तनिजविग्रहम् ।
पाटलाङ्गमरुणाभभूषममलेन्दुसुन्दरमुखश्रियं
पाकशासनमहर्निशं च नमः (नमत)धर्मकामधनमोक्षदम् ॥

यदद्य कच्च वृत्रहन्नुदगा अभिसूर्य । सर्वं तदिन्द्र ते वशे ॥ इति मन्त्रः ॥ वश्यैश्वर्यप्रधानोऽयं मन्त्रः । द्वादशलक्षजपः । जपसमये नित्यशः शुद्धं हविष्यं हुनेत् । जपान्ते रक्तकमलैः त्रिमधुरसिक्तैः दशांशं पुरश्चरणार्थं हुनेत् ।

कश्रोत्रनयनघ्राणमुखदोःपादसन्धिषु ।
आधारहृन्मस्तकेषु मन्त्रार्णान् क्रमशो न्यसेत् ॥

पूजाविधानं तु अस्मिन्नेव पटले वक्ष्यमाणे ऐन्द्रत्रिष्टुप्मन्त्रविधाने वक्ष्यामः ॥

अथ प्रयोगः—

रविबिम्बसंस्थममराधिपतिं प्रविचिन्त्य नित्यममुमेव मनुम् ।
जपतामथाष्टशतमाशु वशे भुवनं भवेत् किमुत मर्त्यजनः ॥

अरुणैः कमलैर्मधुरालुलितैः जुहुयादनले विधिनाष्टशतम् ।
उदिते सवितर्यथ वत्सरतो धनधान्यसमृद्धिरमुष्य भवेत् ॥

जातीभिर्यशसे श्रिये कुवलयैः श्वेतैस्तथा कैरवैः
वस्त्रास्यै पयसाऽऽयुषे कुरवकैर्बुध्यै धनायान्धसा ।
स्वर्णास्यै मधुना पलाशकुसुमैः पुत्राय मुक्त्यै कुशैः
अष्टोर्ध्वं घृतसंयुतैर्दशशतं मन्त्री दिनादौ हुनेत् ॥

जाती - जाजी । कुरवकं - कोराटा । अन्धः - अन्नम् । अथ यन्त्रम् —

मध्ये तारं तदनु गुणशो मन्त्रवर्णान्दळाग्रे
किञ्जल्केषु स्वरयुगमथ व्यञ्जनारूढवृत्तम् ।
क्ष्माबिम्बाश्रद्वययुगलसन्मारबीजं तदेतत्
यन्त्रं प्रोक्तं निखिलसुखदं श्रीकरं वश्यकारि ॥

आलिख्य यन्त्रममुमेव सुवर्णपट्टे
गोरोचनाघुसृणचन्दनगोमयाद्भिः ।
सूच्या हिरण्यकृतया प्रवरे मुहूर्ते
सन्धारयेत् सकलसंपदवाप्तिहेतोः ॥

स्पष्टोऽर्थः । यन्त्रान्तरमाह —

कर्णिकायां ससाध्यं तु तारं पत्रेषु चाष्टसु ।
अग्न्यश्विन्यग्निजलधित्रीणि त्र्यक्षराणि च ॥

आलिख्य मातृकावर्णैः भूपुरेण च वेष्टयेत् ।
यदयकेत्यृचो यन्त्रं वश्यसौभाग्यकान्तिदम् ॥

सुवर्णरत्नधान्यादिसर्वसंपत्करं परम् ॥ इति ॥

तत्र अग्निरिति त्रीणि । अश्वी इति द्वयम् ।

अथ इन्द्रगायत्रीमन्त्रप्रसङ्गात् ऐन्द्रत्रिष्टुप्चिन्तामण्याख्यो मन्त्रसारोक्तोत्र योग्यतावशाल्लिख्यते --

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । इन्द्र श्रेष्ठानि द्रविणानि धेहि हृदं । चित्तिं दक्षस्य सुभगत्वमस्मे शिरः । पोषं रयीणामरिष्टिं तनूनां शिखा । स्वात्मा(द्मा)नं वाचः सुदिनत्वमन्हां कवचम् । इन्द्रश्रेष्ठनीति सर्वमुक्त्वा अस्त्रम् ॥

ध्यानम् --

मातङ्गारातिपीठे स्थितमतिरुचिरे नन्दने कल्पवृक्षैः
मन्दाराद्यैर्मनोज्ञैः विबुधमुनिनुतं तप्तकार्तस्वराभम् ।
हस्तोद्यत्स्वर्णकुम्भप्रकरपरिगळद्रत्नधाराप्रवाहान्
वर्षन्तं वाञ्छितार्थप्रदममरपतिं सुप्रसन्नं नमामि ॥

इन्द्रश्रेष्ठानीत्यादिमन्त्रः । ऐश्वर्यप्रधानोयं मन्त्रः । लक्षं जपेत् पुरश्चरणार्थम् । अस्यैवाक्षरन्यास उच्यते —

शीर्षालिकश्रवणनेत्रसघोणगण्ड-
दन्तोष्ठपाणिपदसन्धिषु साग्रकेषु ।
आधारनाभिजठरस्तनपार्श्वपृष्ठ-
हृन्मस्तकेषु मनुविन्न्यसतु क्रमेण ॥

विन्यस्यैवं मन्त्रवर्णान् पदानि न्यस्येद्भूयो देवतात्वप्रसिध्यै ।
स्थानेष्वेषु व्यष्टसंख्येषु देहे ताराद्यानि व्यष्टसंख्यानि मन्त्री ॥

शीर्षश्रुतिकपोलांसदक्षपार्श्वकटीषु च ।
गुह्यवामकटीपार्श्वसांसगण्डश्रवस्सु च ॥

आधारनाभिहृदयवदनेषु यथाक्रमम् ।

एवं पदन्यासं च कुर्यात् । अस्यैव मन्त्रस्य ध्यानान्तरमुच्यते —

उपवने मरुतामथ नन्दने प्रततगेहलसल्ललनागणे ।
कनकभासितभूमितलेऽञ्चिते विबुधशाखिशतैरखिलार्थदैः ॥

कलितहेमलतानिकरोज्ज्वलैः कलनिनादविहङ्गमनोहरैः ।

कनकपङ्कजसौरभवाहिना सुरसरिन्मरुता च मनोरमे ।
सुरुचिरं मणिमण्डपमुज्ज्वलं विबुधपादपपङ्कजमध्यगम् ॥

मणिमयं च तदन्तरभूतले द्विरदवैरिमहासनमद्भुतम् ।
उपरि संस्थितमुज्ज्वलभूषणं अरुणभास्करकोटिसमप्रभम् ॥

महितरत्नकिरीटमनोहरं मणिमयूखविराजितकुण्डलम् ।
मसृणकुंकुमपङ्कपरिस्फुरत्तिलकशोभिललाटतटान्तरम् ॥

कमललोचनमुन्नतनासिकं मुकुरगण्डतलं मधुरस्मितम् ।
अधरकान्तिपराजितपल्लवं विगळिताङ्कशशाङ्कनिभाननम् ॥

विमलकम्बुविराजितकन्धरं विविधहारलताञ्चितवक्षसम् ।
कनकताळगतं वसुसञ्चयं निजकरे दधतं निजसेविनाम् ॥

महितरत्नमरीचिचयोल्लसज्जठरबन्धमनोहरमध्यकम् ।
विविधरत्नलसन्मणिमेखलाकलितसूक्ष्मदुकूलविराजितम् ॥

अमरबन्धुरसिन्धुरनासिकासदृशपीनवरोरुमनोहरम् ।
प्रपदनिर्जितकच्छपमंगुळीनखमयूखजितेन्दुकरांकुरम् ॥

मुनिसुरासुरसिद्धमहोरगाद्यखिललोकनतांघ्रिसरोरुहम् ।
त्रिभुवनैकपरायणमिष्टदं त्रिदशनाथमनारतमाश्रये ॥

एवं ध्यात्वा लक्षं जपित्वा दशांशं त्रिमधुरसिक्तैः कमलैर्जुहुयात् पुरश्चरणाहोमः ।

अथ पूजाविधिः—

ऋध्यै० समृध्यै० सुखदायै० मनोज्ञायै० कान्त्यै० कामदायै० सुरूपायै० कामरूपायै० सर्वज्ञायै० ९ इत्यष्टदलेष्वष्टशक्तीस्समभ्यर्च्य नवमीं कर्णिकायां च समर्च्य, "ॐ नमो भगवते सर्वरत्नमयाय सिंहासनाय नमः ।" इति कर्णिकायां समर्चयेत् । एतस्मिन्पीठे इन्द्रं समावाह्य, तत्र प्रथमं "पुलोमनन्दनायै नमः" इति इन्द्रस्य वामपार्श्वे समर्चयेत् । मातलये नमः इति पुरतः । पुनरङ्गैस्समर्चयेत् परित इति प्रथमावृतिः । पुनः मन्दाराय० सन्तानाय० कल्पपादपाय० हरिचन्दनाय० ४ इति चतुर्दिक्षु पारिजाताय नम इति पृष्ठे च समर्चयेत् । इति द्वितीयावृतिः । आदित्येभ्यो नमः० विश्वेभ्यो देवेभ्यो नमः० मरुद्भ्यो नमः० प्रजापतिभ्यो नमः० वसुभ्यो नमः० अश्विभ्यां नमः० रुद्रेभ्यो नमः० साध्येभ्यो नमः० ८ इति तृतीयावरणे अष्टदलेषु समर्चयेत् । पुनः, ऊर्वश्यै० मेनकायै० रम्भायै० घृताच्यै० पुञ्जिकस्थलायै० तिलोत्तमायै० चित्रलेखायै० उन्मदायै० ८ इति चतुर्थ्यावृतिः । गुरुभ्यो नमः० नारदाय नमः० तुम्बुरवे० चित्ररथाय० अभ्रमुवल्लभाय० वाजिपतये० अदित्यै० जयन्ताय० ८ इति पञ्चम्यावृतिः । इन्द्रादिभिः षष्ठी । एवं संपूज्य पुरस्तात्तन्त्रपूर्वकं उपरिष्टात्तन्त्रोत्तरं जुहुयात् । कमलैर्मधुरसंयुक्तैरयुतं पुरश्चरणार्थम् ॥

अथ प्रयोगविधिः—

दूर्वात्रिकैश्चाथ सहस्रसंख्यं दुग्धाप्लुतैः सप्तदिनं हुनेद्यः ।
रोगैर्वियुक्तस्सह बन्धुवर्गैः शतं प्रजीवेच्छरदां नरोसौ ॥

प्रयोगान्तरम्—

पाशांकुशौ काममभीतिमुद्रां करैर्दधानं कमलासनस्थम् ।
रक्तांशुकालेपनमाल्यमेनं शचीपतिं तल्पगतं निशीथे ॥

विचिन्त्य पाशांकुशशक्तिबीजैः युक्तं मनुं मन्त्रितमस्सहस्रम् ।
जपन्ननङ्गातुरचित्तवृत्तिमप्युर्वशीमानयते निजाङ्के ॥

आं ह्रीं क्रों इति पाशांकुशशक्तिबीजानि ।

प्रयोगान्तरम् —

वराभीतिशक्तीः पविं चापि हस्तैः वहन्तं सुरक्तं प्रसन्नाननाब्जम् ।
बलारातिमेनं विचिन्त्यार्कबिम्बे प्रजप्यात्सहस्रं समृध्यै दिनादौ ॥

अथास्य यन्त्रमाह —

कर्णिकायां लिखेत्तारं मनोः पत्रेषु चाष्टसु ।
पञ्चपट्पञ्चपट्पञ्चरसभूतषडर्णकान् ॥

वयं त एहिर्मातृकया भूपुरेण च वेष्टयेत् ॥
इन्द्रश्रेष्ठानिमन्त्रस्य यन्त्रं सर्वसमृद्धिदम् ॥

आयुरारोग्यसौभाग्यधनधान्यसुतप्रदम् ।
सर्वरक्षाकरं वश्यं सुदिनं तद्यशःप्रदम् ॥

किमत्र बहुनोक्तेन वाञ्छितार्थप्रदं परम् ॥

प्रयोगान्तरम् —

पृथुलां यो मधुरयुतां शालीनां मञ्जरीं जुहोत्यग्नौ ।
शालीपूर्णगृहः स्यान्मन्त्रितमो मण्डलत्रयादर्वाक् ॥

शाली धान्यविशेषः । मञ्जरी-कणीस । मधुरं त्रिमधुरम् । अयमर्थः-
त्रिमधुरसिक्ताभिश्शालीभिर्नित्यशस्सहस्रसंख्यं मण्डलत्रयं हुनेत् ॥ इति ॥

प्रयोगान्तरम् —

वैश्वदेवविरतौ गृहाश्रमी यो जुहोति वसुसंख्यमन्धसा ।
तस्य भक्तमतिमृष्टमन्वहं संप्रयच्छति सहस्रलोचनः ॥

अयमर्थः— वैश्वदेवान्तेऽन्नेनाष्टसंख्यं जुहुयान्नित्यशः ॥ इति ॥

प्रयोगान्तरम् —

सकृदुच्चरतोप्यमराधिपतिर्मनुवर्यममुं दिवसस्य मुखे ।
सुखजस्य कुटुम्बयुतस्य परं प्रददात्यशनं दिनशस्सरसम् ॥

अयमर्थः— प्रातः प्रातरेकवारं जपतो द्विजस्य कुटुम्बयुतस्य अवश्यमन्नं प्रयच्छतीति ॥

अथास्य यन्त्रमुच्यते —

साध्याख्याकर्मयुक्तं शिखिपुरयुगळस्यालिखेत्कर्णिकायां
तारं कोणेषु बीजं वसुदळकमले केसरोद्यत्स्वराढ्ये ।
दिक्पत्रेष्विन्द्रियार्णान् गुहवदनमितान् कोणपत्रेषु पश्चात्
आवीतं व्यञ्जनार्णैरवनिपुरगतं यन्त्रमैन्द्रं तदेतत् ॥

अस्यार्थः— प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य तन्मध्ये साध्यनामादीन् विलिखेत् । पुनः षट्सु कोणेषु लं लं इति इन्द्रबीजं विलिखेत् । पुनस्तद्बहिरष्टदळं पद्मं विलिख्य तत्केसरेषु स्वरान् द्वौ द्वौ विलिखेत् । पुनः पूर्वादिचतुर्दळेषु इन्द्रश्रेष्ठानिमन्त्रस्य वर्णान् पञ्च वर्णशो विलिखेत् । पुनराग्नेयादिकोणपत्रेषु अवशिष्टान्वर्णान् षट्षड्विलिखेत् । पुनस्तद्बहिर्वृत्तं विलिख्य कादिवर्णैर्वेष्टयेत् । पुनस्तद्बहिश्चतुरश्रं विलिखेत् ॥

अथ ताम्रादिपट्टविशेषश्च धारणादिविधिश्च फलं चोच्यते —

आलिख्येदं ताम्रपट्टे सुजप्तं हुत्वा वन्हौ साधु संपातयुक्तम् ।
रक्षां कुर्यात्स्थापितं मन्दिरादौ रक्षोभूतप्रेतचोरादिकेभ्यः ॥

इदमेव विलिख्य ताम्रपट्टे कृतसंपातविधि जपादिसिद्धिम् ।
रुचकादिषु भूषणेषु युञ्ज्यात् विदधानो लभते निजेष्टसिद्धिम् ॥

प्रयोगान्तरम् —

मन्दाकिनीतटरुहत्रिदशद्रुमाधो वृन्दारकैः परिवृतं गजराजसंस्थम् ।
दोर्भ्यां सुवर्णचषकस्थमभीष्टजातमादाय साधकवराय समर्पयन्तम् ॥

ध्यात्वा जपन्ननुदिनं नियमेन योऽमुं मन्त्रोत्तमं शितमतिश्शतमष्टयुक्तम् ।
देवे समग्रमुदिते च सहस्रभानौ संपूर्णरत्ननिचयो भविताऽब्दमात्रात् ॥

प्रयोगान्तरम् —

ज्ञानाख्यमुद्राकुलिशाभयेष्टान् दोर्भिर्वहन्तं सुसितं प्रसन्नम् ।
विचिन्त्य मन्त्रं प्रजपेत्सहस्रं व्रजेत्स वाग्वल्लभतां नरोऽसौ ॥

प्रयोगान्तरम् —

धवलनळिनमध्ये सन्निषण्णं सिताङ्गं
सुरमुनिपितृसिद्धैः सेवितं सुप्रसन्नम् ।
दशशतभुजदण्डोल्लासिपीयूषकुम्भै-
रमृतजलसहस्रं स्रावयन्तं निजाङ्के ॥

स्वरुपरि दृढमेवं चिन्तयित्वा सहस्रं
जपति नियमयुक्तो मन्त्रवर्यं नरो यः ।
स तु दुरितवियुक्तो विश्वसंवादयुक्तो
जगति गणनहीनं विन्दते दीर्घमायुः ॥

प्रयोगान्तरम् —

* दिनशो दिनावतारे चत्वारिंशच्चतुश्शतं प्रजपेत् ।
मासारम्भदिनेऽमुं सचतुश्शतमायुषे च लक्ष्म्यै च ॥

अथेन्द्रमन्त्रप्रसङ्गात् इन्द्राणीमन्त्रोऽपि मन्त्रसारोक्तोऽत्र लिख्यते —

बृहस्पतिः ऋषिः । गायत्री छन्दः । इन्द्राणी देवता । ह्रीं क्लीं हृत् । इन्द्राणि शिरः । सौभाग्यदेवते शिखा । मघवत्प्रिये कवचम् । सौभाग्यं नेत्रत्रयम् । देहि मे स्वाहा अस्त्रम् ॥

ध्यानम् —

कल्पद्रूद्यानमध्ये विविधमणिलसन्मण्डपान्तर्विराज-
न्मातङ्गारातिपीठप्रविलसितसरोजन्मसंस्थां प्रसन्नाम् ।
पीनोत्तुङ्गस्तनार्ता पृथुजघनभरां पद्मपत्रायताक्षी-
मिन्द्राणीमिन्द्रनीलोत्पलशकलनिभां हृद्यभूषां नमामि ॥

ह्रीं क्लीं इन्द्राणि सौभाग्यदेवते मघवत्प्रिये सौभाग्यं देहि मे स्वाहा । इति मन्त्रः । सौभाग्यलक्ष्मीप्रधानोयं मन्त्रः । लक्षं जपेत् । रक्तपद्मैः त्रिमधुरसिक्तैर्वा रक्तोत्पलैस्तत्सिक्तैर्वा वकुलकुसुमैर्वा कैरवैर्वा, त्रिमधुरसिक्तेष्वेतेषु एकेन दशांशं जुहुयात् पुरश्चरणाहोमः । *रक्तोत्पलं-रक्तकुमुदम् । लोणं-लवणम् । वकुलं-घोलसरी । कैरवं-पुष्पविशेषः । अथ पूजाविधिः —

कान्त्यै० प्रभायै० रमायै० विद्यायै० मदनायै० मदनातुरायै० रम्यायै० मनोज्ञायै० हृद्यायै० ९ इत्यष्टसु दळेषु च, नवमीं कर्णिकायां च समभ्यर्च्य, ह्रीं सर्वशक्तिकमलासनाय नमः इति कर्णिकायां समभ्यर्च्य, तस्मिन्पीठे इन्द्राणीं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । ऊर्वश्यै० मेनकायै० रम्भायै० प्रम्लोचायै० पुञ्जिकस्थलायै० तिलोत्तमायै० घृताच्यै० सुरूपायै० ८ इति द्वितीयावृतिः ॥ इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी ॥

* रक्तोत्पलं—செங்னெய்தல். लोणं—உப்பு. वकुलं—மகிழ். कैरवं—ஆம்பல் பூ. इति.

अथ प्रयोगः—

जुहुयाच्चम्पककुसुमैः प्रातर्वेश्याजनं वशे कर्तुम् ।
चन्दनपङ्कस्नपितैः सायं नवमालिकाप्रसूनैर्वा ॥
पालाशपुष्पैर्मधुरत्रयाक्तैरिष्टाय दातुं जुहुयात्सहस्रम् ।
कन्यां वरायाथ वरोपि तद्वत् निजेप्सितामाशु वशे विधातुम् ॥

लाजाभिरञ्जलिमिताभिरथाष्टसंख्यं
वह्नौ जुहोतु विधिवत् घृतसंप्लुताभिः ।
कन्यां हृदाभिलषितामचिरेण लब्धुं
सौभाग्यधेनुधनधान्यसुताप्तये च ॥

अस्यार्थः — चन्दनसिक्तैर्नवमालिकापुष्पैर्वा त्रिमधुरसिक्तैः पलाशपुष्पैर्वा सहस्रसंख्यं जुहुयात् सायंकाले इष्टाय पुरुषाय कन्यां दातुम् । अञ्जलिमिताभिरष्टसंख्यं जुहुयात् । वाञ्छितां कन्यां लभते । सौभाग्यादींश्च लभते । नवमालिका-मल्लिकापुष्पम् ॥

प्रयोगान्तरम् —

आदाय दोष्णा प्रतिपादयन्तीं वराय कन्यामभिवाञ्छिताय ।
सुरेन्द्रकान्तां परिचिन्त्य जप्यात् कन्याप्रदानाय सहस्रसंख्यम् ॥

अयमर्थः — एवं ध्यात्वा जप्त्वा कन्याप्रदानं लभते ॥

प्रयोगान्तरम् —

कन्यापि नित्यं कृतकर्णवेधा विद्यां प्रजप्यादथ तत्वसंख्यम् ।
सौभाग्यहृद्यं महनीयवेषं वरं लभेत त्रिदशेन्द्रतुल्यम् ॥

तत्वसंख्यं चतुर्विंशतिसंख्यम् ॥

अस्यैव यन्त्रमाह—

पट्कोणकर्णिकामध्ये ससाध्यं भुवनेश्वरीम् ।
आलिखेत् पट्सु कोणेषु षडर्णं कोणसन्धिषु ॥

अङ्गान्यष्टसु पत्रेषु गुणशः स्यान्मनोः क्रमात् ।
द्वौ द्वौ स्वरौ केसरेषु मारं शक्तिं च दिक्ष्वपि ॥

इन्द्राणीयन्त्रमेतत्तु परं त्रैलोक्यरञ्जनम् ।
सौभाग्यशोभासौन्दर्यधनधान्यश्रुतप्रदम् ॥

अयमर्थः— प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन्विलिखेत् । पुनष्षट्कोणेषु "ह्रीं इन्द्राण्यै नमः" इति विलिखेत् । पुनः कोणसन्धिषु अङ्गषट्कं विलिखेत् । पुनस्तद्बहिरष्टपत्रं पद्मं विलिख्य तत्केसरेषु द्वौ द्वौ स्वरौ विलिख्य तद्दलमध्ये मन्त्रवर्णान् त्रीणि त्रीण्यक्षराणि विलिखेत् । पुनश्चतुरश्रं विलिख्य तस्य दिक्षु क्लीं इति विलिख्य, तत्कोणेषु ह्रीमिति विलिखेत् । एवं विलिख्य धृते उक्तफलं भवति ॥

प्रयोगान्तरम्—

वदनक्षाळनमञ्जनमभिषेकालेपनादिकं चापि ।
एनां प्रजप्य कुर्यात्सौभाग्यायायुषे समृध्द्यै च ॥

अथ प्रणवविधानमुच्यते—

प्रजापति ऋषिः । देवीगायत्री छन्दः । परमात्मा देवता । अं बीजम् । उं शक्तिः । अं ओं आं हृत् । इं ओं ईं शिरः । उं ओं ऊं शिखा । एं ओं ऐं कवचम् । ओं ओं औं नेत्रम् । अं ओं अः अस्त्रम् । अथवा ओं भूः हृत् । ओं भुवः शिरः । ओं सुवः शिखा । ओं महः कवचम् । ओं जनः नेत्रम् । ओं तपः अस्त्रम् । इत्येतैर्वा षडङ्गानि कुर्यात् ॥

अथास्य चतुर्दशयोगन्यासविधिः—

तत्र चतुर्मूर्तियोगः प्रथमः। स चैवं कार्यः। नाभ्यादिगतमूर्तिचतुष्टयममृतमयैरुपहारैस्संपूज्य तेजोरूपं कृत्वा प्रणवेनैकीकृत्य अमृतमाप्लावयेदिति चतुर्मूर्तियोगक्रमः। एवमेव ब्रह्मविष्णुरुद्रभेदाभेदलिङ्गयोगा द्रष्टव्याः। तत्र ब्रह्मादियोगत्रये चतुर्ष्वपि स्थानेषु तत्तन्मूर्तय एव द्रष्टव्याः। भेदयोगे सर्वत्र भिन्नशरीरमूर्तित्रयं, अभिन्नयोगे अभिन्नशरीरमूर्तित्रयं, लिङ्गयोगे लिङ्गरूपम्॥

अथ चिदवष्टंभयोगः—

शरीरचतुष्टयस्य चित्तेजसा व्याप्तिचिन्तनं, पुनराप्त्यादिगुणैर्वाच्यवाचकैकत्वप्रतिपत्त्या प्रणवजपलक्षणो गुणयोगः। ततः स्थूलसूक्ष्मयोगः। कारणे संहारसंहारयोगः। पुनरेतयोश्चिद्रूपव्याप्तिचिन्तनमोतयोगः। पुनर्द्वैतस्य कल्पितत्वेन चिदधीनसत्ताप्रतीतित्वचिन्तनमनुज्ञातृयोगः। पुनर्द्वैतस्य चिद्व्यतिरेकेणासत्वात् चितोविकारित्वचिन्तनमनुज्ञायोगः। पुनरपि क्वचित्त्वादिधर्मराहित्यचिन्तनं निर्विकल्पकयोगः। एतदुक्तं भवति॥

नाभिहृदयभ्रूमध्यमूर्धसु अं नमः, उं नमः मं नमः, ओं नमः, इति *प्रणवावयवैः प्रणवेन च न्यासपूर्वकं ब्रह्मविष्णुरुद्रेश्वरान् संभाव्य सर्वत्र मानस*पूजां अमृतमयैरुपहारैस्संपूज्य, पुनस्तान् तेजोरूपान् कृत्वा, प्रणवोच्चारणेनैकीकृत्य षोडशान्तस्थममृतं संयोजयेदिति प्रथमो योगः॥

पुनरं नम इति प्रणवप्रथमावयवेन ब्रह्माणं चतुर्षु स्थानेषु पूर्ववत्संपूज्य प्रणवेन तेजोरूपं कृत्वा अमृतेन संयोजयेत्। पुनः उं नमः, मं नमः इति द्वाभ्यां विष्णुरुद्रौ तथैव संयोजयेत्। पुनः प्रणवावयवैस्त्रिभिरपि चतुर्षु स्थानेषु तथैव कार्यः। तत्र त्रयाणामपि न्यासस्थानविशेषस्तु नाभेर्दक्षिणतो वामतश्च नाभौ च। तथैवेतरहृदयादिस्थानेष्वपि द्रष्टव्यम्। इत्थं भेदयोगः॥

पुनः प्रणवेन चतुर्षु स्थानेषु न्यासपूर्वकं मानसोपहारतेजोरूपीकरण-समर्पणान्तं भेदयोगलिङ्गयोगचिदघटंभयोगास्त्रयोपि कार्याः । तत्र भावना-विशेषाः पूर्वोक्ताः ॥

अतः परं प्रणवेन हृदि न्यासपूर्वकं पूर्ववदेव सर्वेप्यवशिष्टा गुण-योगाद्या निर्विकल्पकयोगान्ता द्रष्टव्याः । तत्रापि भावनाविशेषाः पूर्वोक्ताः । इत्येवं चतुर्दशयोगान् कृत्वा, स्वनाममहावाक्यप्रणवोच्चारणेन स्वात्मन्यवस्थाय, प्रणवमकारउकारअकारैः व्यापकचतुष्टयं कुर्वन् तन्मूर्तिशरीरचतुष्टयमुत्पाद्य, संहारन्यासेन नाभ्यादिषु मूर्तिचतुष्टयं संभाव्य, अमृतमयैरुपहारैस्संपूज्य प्राणानायम्य, मूर्तिचतुष्टयमेकीकुर्वन् अमृतमासाव्यपाङ्गऋष्यादिकं विन्यस्य, सकृत्प्रणवमुच्चार्य सबाह्याभ्यन्तरममृतमासाव्य, अमृतमयो भवेत् ॥

अथानुष्ठानपद्धत्युक्तप्रकारेणापि प्रणवन्यासविशेषो लिख्यते --

अं अं नमो ब्रह्मणे नमः । आं उं नमो विष्णवे नमः । इं मं नमश्शिवाय नमः । ईं मं नमो ब्रह्मणे नमः । उं उं नमो विष्णवे नमः । ऊं अं नमश्शिवाय नमः । ॠं अं नमो ब्रह्मणे नमः ॥ इत्यादिप्रणवावयवै-रनुलोमविलोमितैर्ब्रह्मविष्णुशिवपदैश्च संयोज्य, उक्तरीत्या अवशिष्टान्मातृका-वर्णान्मातृकास्थानेषु न्यसेत् ॥

पुनः अं अं नमः । उं आं नमः । मं इं नमः । अं ईं नमः । उं उं नमः । मं ऊं नमः । अं ॠं नमः । इत्यादिप्रणवावयवत्रितयपूर्वकान् मातृका-वर्णान् मातृकास्थानेषु न्यसेत् । ओं अं ओं नमः । ओं आं ओं नमः । ओं इं ओं नमः । ओं ईं ओं नमः । इत्यादिप्रणवपुटितवर्णान् मातृकास्थानेषु न्यसेत् । पुनः ओं अं ब्रह्मणे नमः । ओं आं विष्णवे नमः । ओं इं रुद्राय नमः । ओं ईं ओंकाराय नमः । ओं उं प्रणवाय नमः । ओं ऊं सर्वव्यापिने नमः । ओं ॠं अनन्ताय नमः । ओं ॠं ताराय नमः । सूक्ष्माय नमः । शुक्लाय नमः । वैद्युताय नमः । पराय० ब्रह्मणे० एकाय० एकरुद्राय०

ईशानाय० भगवते० महेश्वराय० महादेवाय० सदाशिवाय० सर्वरक्षित्रे० सर्वगताय० सर्वप्रियतमाय० नित्यतृप्ताय० सर्वापगमाय० सर्वकान्ताय० सर्वप्रतिष्ठाय० सर्वश्रोत्रे० सर्वस्वामिने० सर्वसमृद्धाय० सर्वचक्राय० सर्वक्रियाय० सर्वेच्छाय० सर्वदीप्ताय० सर्वावाप्ताय० सर्वालिङ्गिताय० सर्वहिंसकाय० सर्वदाहकाय० सर्वभावाय० सर्ववृद्धाय० गुणबीजाय० स्तुवाय० वेदादये० आदये० मध्यमाय० पराय० त्रिमात्राय० योनये० सर्वदेहाश्रयाय० संवादकाय० सर्वात्मने नमः। ५१ इत्थं प्रणवमातृकावर्णपूर्वकं मातृकान्यासस्थानेषु न्यसेत्। पुनः सामान्यन्यासाख्यं गुरुगणपतिवन्दनादिकं मातृकान्यासान्तं प्रसिद्धरीत्या कुर्यात्॥

अथ योगविधिः--

एवं जपादिसिद्धप्रणवो योगी, यथोचितमासनमास्थाय तन्मन्त्रन्यासादिकं कृत्वा, मूलाधारत्रिकोणमध्ये मूलाधारगतस्यादिवर्णत्रयतेजसो मध्यत्रिकोणविन्दुस्थघ्वननादमयीं परां शब्दब्रह्मात्मिकां देवीं भावयेदात्मकुण्डलिनीम्॥

तस्या मध्यगतं सूक्ष्मं सर्वविश्वस्य कारणम्॥
जीवात्मकं परं तेजः संविद्रूपं परं स्मरेत्॥

इत्युक्तप्रकारेण मूलाधारे अकारादिप्रणवांशत्रयत्रिरेखं त्रिकोणं संचिन्त्य, प्रणवस्य विन्दुं तन्मध्ये दीपाकारं संचिन्त्य, ओंकारो गुणबीज इत्युक्तविभूतियुक्तं ध्यात्वा, यथावत्प्रणवमुच्चार्य, प्रणवमुन्मन्यन्तमात्रोपेतमुच्चार्यान्तनादात्मकमलिविरुतिकोमलं शब्दब्रह्मापरनामकं सूक्ष्मं तेजस्तन्तुनिभं नादं सुषुम्नाध्वना तदग्रगतपरमात्मगतं निनयेत्। इति सूक्ष्मतन्तुनयनयोगः॥

अथैवमेवावर्तत्रितययुक्तं विन्दुं संचिन्त्य तारं तथोच्चार्योच्चार्य द्वादशान्तस्थचित्तं तु प्रोतं परीक्ष्य ततोऽमृतवर्षं ध्यायन् तारमभ्यसेत्। इति विन्दुस्वरूपनयनात्मकः सपापमृत्युहरो योगः॥

एवं मूलाधाराकारादित्रिकोणमध्यबिन्दुगतनादरूपप्रभां बिसतन्तुनिभां विचिन्त्य प्रणवमुन्मन्यन्तमात्रायुक्तमुच्चार्य द्वादशान्तस्थचिच्चन्द्रे नीत्वा तस्मात् अमृतवर्षं भावयन् प्रणवमावर्तयेत् । इति मन्त्रानयनात्मको योगः ॥

विहरणादिनिपुणः मूलाधारगतत्रिकोणमध्यविन्दुगतनादं तेजः पीततन्तुनिभं ध्यात्वोक्तप्रकारेण परमात्मनि निनयन् पुनरावृत्तिविहीनं तारमभ्यसेत् । पीततन्तुनयनात्मकोयं योगः मोक्षकरः ॥

अथ मूलाधारे एवं विचिन्त्य स्थूलसूक्ष्मकारणसामान्यबीजं संविदभावक्रमेण अकारमुकारे, उकारं मकारे, मकारं विन्दौ, बिन्दुं नादे, नादं शक्तौ, शक्तिमुन्मन्यन्ते निर्द्वन्द्वत्वादिलक्षणे शान्ते संहरन् प्रणवमभ्यसेत् ॥ अयं क्रमः संहारात्मको मोक्षप्रदो योगः ॥

एवमहरहर्योगं कृत्वा, दिनत्रयावृत्तौ च मनसा जाग्रदात्मकं बीजं स्वप्नरूपे विन्दौ, तं सुषुप्तिरूपे नादे, तं तुर्यरूपायां शक्तौ, तां तुरीयातीतरूपे शान्ते च जाग्रदादिभिस्सह मनसा संहरेत् ॥ अयममन्त्रोच्चारको मोक्षप्रदो योगः ॥

समन्त्रोच्चारके योगे सूक्ष्मायां स्वमहिमायां वाचिन्त्यायां ख्यातिरूपायां *मूलाधारस्थायां परायां वाचि, पश्यन्त्यां नाभिस्थायां चापि मध्यमाख्यवैखर्योश्च* हृदयमुखस्थयोश्च प्रणवोच्चारणेन क्रमेणोत्पाद्य तां पञ्चमीं वैखरीमेवोच्चारणानन्तरं तदन्तध्वनिरूपेणाऽऽस्यभ्रूमध्यमूर्धद्वादशान्तषोडशान्तं स्थित्वा, आसु क्रमेण वैखरीमध्यमा-(पश्यन्ती)परासूक्ष्माख्यासु संहरन् प्रणवमभ्यसन् योगं कुर्यात्, इत्यादि सर्वमवगन्तव्यम् ॥

अथास्य प्रणवस्य यन्त्रमपि भावनार्थं मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते —

पद्मं कुक्षि पीठसंस्थं तदुपरि विलसत्सोमसूत्रं सबिन्दुं
तन्मध्ये नादसंज्ञं प्रणवमभिहितं बिन्दुनादौ पुनश्च ।

इत्थं संचिन्त्य योगी विविधमनुदिनं तारगं व्योमसंस्थं
सर्वाधारं महेशं सकृदपि मनसा संस्मरेद्यः स मुक्तः ॥

अस्यार्थः — पट्कुक्षिरित्यकारोन्वर्थसंज्ञः । पीठ इत्युकारः । सोमखण्डमिति तिर्यग्भूतरेखाद्वयम् । बिन्दुरिति तदुपरि रेखावलयम् । नादमिति तत्र दीर्घरेखा । तारं प्रणवः । तदुपरि च बिन्दुनादौ । व्योम हकारः । शेषं प्रसिध्दम् ॥ ध्यानम् —

विष्णुं भास्वत्किरीटाङ्गदवलयगळाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥

ओं इति मन्त्रः ॥ शतलक्षजपः । पायसैर्घृतसिक्तैश्च दशांशं होमः । विप्रभूरुहसमिद्भिर्वा । विप्रभूरुहः-पलाशः । एवं पुरश्चरणाहोमः ॥

अथ प्रयोगान्तरहोमः —

सर्पिःपायसशालीतिलसमिदाज्यैरनेन यो जुहुयात् ।
ऐहिकपारत्रिकमपि स तु लभते वाञ्छितं फलं नचिरात् ॥

अथ पूजा —

वैष्णवे पीठे समावाह्य मुकुन्दं समर्चयेत् । अङ्गैः प्रथमावृतिः । वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुध्दाय०

स्फटिकस्वर्णदूर्वेन्द्रनीलाकाराश्च वर्णतः ।
चतुर्भुजाश्चक्रशङ्खगदापङ्कजधारिणः ॥

किरीटकेयूरिणश्च पीताम्बरधरा अपि ।
एतैर्महादिग्दळेषु समर्चयेत् । पुनः शान्त्यै० श्रियै० सरस्वत्यै० रत्यै०

अच्छपद्मरजोदुग्धदूर्वावर्णाः स्वलंकृताः ।

एताभिरवान्तरदळे । एताभिर्मूर्तिशक्तिभिः द्वितीयावृतिः । आत्मने० अन्तरात्मने० परमात्मने० ज्ञानात्मने० निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै०

ज्वलज्ज्वालासमाभाः स्युरात्माद्या मूर्तिशक्तयः ।

एताभिर्मूर्तिशक्तिभिर्दिग्दळेष्ववान्तराळदळेषु च समर्चयेत् । एवं तृतीयावृतिः । इन्द्रादिभिः चतुर्थी । वज्रादिभिः पञ्चमी ॥

अथ प्रणवप्रसङ्गात् शक्तिप्रणवमन्त्रविधिश्च कल्पान्तरोक्तोऽत्र लिख्यते—

ईश ऋषिः । पंक्तिश्छन्दः । शक्तिभैरवी देवता । आं हृत् । ईं शिरः । इत्यादिदीर्घस्वरषट्कैरङ्गानि । (ध्यानम्—)

प्रकाशमध्यस्थितचित्स्वरूपां वराभये संदधतीं त्रिणेत्राम् ।
सिन्दूरवर्णामतिकोमलाङ्गीं मायामयीं तत्वमयीं नमामि ॥

ध्यानान्तरम्—

कल्पद्रुमूलमणिकुट्टिमसंनिविष्टां मुक्तातपत्रकृतमौक्तिकवृष्टिहृष्टाम् ।
इष्टाभये विदधतीमरुणां त्रिणेत्रां इष्टाप्तये भगवतीमनुशीलयामः ॥

ईं इति मन्त्रः सबिन्दुकः चतुर्थः स्वरः । एकविंशतिलक्षं जपेत् । दशांशमाज्यैर्हुनेत् पुरश्चरणार्थम् ॥ अत्यैश्वर्यफलप्रधानोऽयं मन्त्रः ।

अथ पूजा—प्राक् नवमे पटले भुवनेशीविधानोक्तपीठे समावाह्य समर्चयेत् । एकशक्तित्वादावरणादयो न सन्ति । अथ भुवनेश्वरीत्रिगुणितविधानोक्तवत् संपूजयेत् ॥

अथास्य मन्त्रस्य न्यासविधिः—

ऐं ह्रीं श्रीं सुप्रबोधैकनाथश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं रक्ताम्बा-पादश्रीपादुकां पूजयामि । बीजत्रयादि शुक्लाम्बापादश्रीपादुकामित्यादि० निष्कलानन्दनाथ श्रीपादुकेत्यादि० सकलानन्दनाथ श्रीपादुकेत्यादि० नवात्मा-नन्दनाथ श्रीपादुकेत्यादि० अक्रूरानन्दनाथ श्रीपादुकेत्यादि० इति मूर्ध्नि तत्रैव वामे दक्षिणे पूर्वदक्षिणपश्चिमोत्तरेषु विन्यसेत् । सर्वत्र बीजत्रयादि च । पुनः सच्चिदानन्दपरमशिवसंविदे नमः । चिदानन्दपरमशिवसंविदे नमः । आनन्दानन्दपरमशिवसंविदे नमः । इति नाभौ तद्वामे तद्दक्षिणे च बीज-त्रयाद्येवं न्यसेत् ॥ पुनः ईं नमः इति मूलमन्त्रेण नाभिहृदयभ्रूमध्येषु न्यस्त्वा पुनः सपरमार्थात्मकबिन्द्वङ्कितवक्त्रश्रीपादुकां पूजयामि० बिन्दुद्वयाङ्कितस्तनयुगल श्रीपादुकां पूजयामि० सपरमार्थकबिन्दुव्यञ्जितरेखायोनिश्रीपादुकां पूजयामीति बीजत्रयादिमुखस्तनयुगळयोनिषु न्यस्य, पुनर्मूलमन्त्रेण षट्त्रिंशद्वारं प्राणायामं कृत्वा, लिपिन्यास करन्यास व्यापकाङ्गऋष्यादीन्कृत्वा जपेत् ॥

इति प्रपञ्चसारसारसङ्ग्रहे गीर्वाणेन्द्रविरचिते

अष्टादशः पटलः ॥

## ॥ अथैकोनविंशः पटलः ॥

अथ वैष्णवाष्टाक्षरीविधानमुच्यते —

साध्यनारायण ऋषिः । देवीगायत्री छन्दः । परमात्मा देवता । अं बीजम् । आय शक्तिः । क्रुद्धोल्काय स्वाहा हृत् । महोल्काय स्वाहा शिरः । वीरोल्काय स्वाहा शिखा । द्यु(द्यू)ल्काय स्वाहा कवचम् । सहस्रोल्काय स्वाहा अस्त्रम् । पुनरपि मन्त्रवर्णैरेवाष्टाङ्गानि कुर्यात् । ओं हृत् । नं शिरः । मों शिखा । नां कवचम् । रां नेत्रम् । यं अस्त्रम् । णां उदानाय नमः । यं पृष्ठाय नम इति । तत्र न्यास एव अष्टाङ्गविधिः, न तु पूजायाम् ।

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराज-
त्केयूरं कौस्तुभाभाशबलरुचिरहारं सपीताम्बरं च ।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोस्सत्वचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥

ॐ नमो नारायणाय इति मन्त्रः । मोक्षप्रधानोयं मन्त्रः । द्वात्रिंशल्लक्षं जपेत् । तदर्धं वा ॥ अक्षस्रजा वा तर्जनीरहिताभिरंगुलीभिर्वा जपेत् । तत्रातिद्रुतं नातिविळम्बितं च । गौतमोप्याह —

कनिष्ठानामिकांगुष्ठमध्यमाभिर्जपेत्सदा ।

अस्यार्थः — अनामामध्यमूलकनिष्ठामूलमध्याग्रानामाग्रमध्यमाग्रमध्य-मूलपर्यन्तमिति नवसु पर्वसु गणनायां कृतायां नववारं जपो भवति । एवं द्वादशवारमावर्तनेन अष्टोत्तरशतवारं जपो भवति ॥

कुलमूलावतारे —

अंगुलीभिर्जपं कुर्वन् सांगुष्ठांगुलिभिर्जपेत् ।

अंगुष्ठेन विना जप्तं विफलं भवति प्रिये ॥

पर्वभिर्वाङ्गुळीनां तु जपेदनुदिनं प्रिये ।
मध्यमानामिकामध्ये पर्वद्वयमिह प्रिये ॥

मेरुं प्रकल्प्य तं कुर्यात् प्रदक्षिणमनुक्रमात् ।
अनामामूलपर्वादिकनिष्ठानुक्रमेण तु ॥

तर्जन्यग्रादितो देवि मध्यमूलावसानकम् ।
गणयेच्च क्रमेणैवं किञ्चित्सङ्कोचयेत्तलम् ॥

अंगुळीर्न वियुञ्जीत जपकाले महेश्वरि ।
अंगुळीनां वियोगे तु छिद्रेषु स्रवते जपः ॥

अथवा मध्यमामध्यमूलपर्वद्वयं प्रिये ।
मेरुं कृत्वा जपेद्देवि तर्जनीमूलकावधि ॥

अनामामध्यपर्वादिप्रदक्षिणक्रमेण वै ।

अंगुळीजपो रेखाजपः पर्वजपश्च । कनिष्ठाद्यंगुळीगतरेखाभिर्जपो रेखाजपः ।

भैरवीतन्त्रे —

अनामामध्यमारभ्य कनिष्ठानुक्रमेण तु ।
मध्यमामूलपर्यन्ता करमाला प्रकीर्तिता ॥

स्मृतिसारे —

सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते वामरवाण्यापि प्राणायामं समाचरेत् ॥

बहुप्रलापे चाचम्य न्यस्याङ्गानि ततो जपेत् ।

क्षुतेष्वेन तथाऽस्पृश्यस्थानानां स्पर्शने भवेत् ॥

वायवीयसंहितायाम् —

उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गळावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥

असंवृतौ करौ कृत्वा शिरसि प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वाऽशुद्धो भ्रान्तः क्षुधान्वितः ॥

अनासनश्शयानो वा गच्छन्नुत्थित एव वा ।
रथ्यायामशिवस्थाने न जपेत्तिमिरान्तरे ॥

उपानद्गूढपादो वा यानशय्यागतस्तथा ।
प्रसार्य न जपेत्पादावुत्कटासन एव वा ॥

नादीक्षितो निशेज्जातु कृष्णसाराजिने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च स्नातकः ॥

कपिलपञ्चरात्रे —

विक्षेपादथवालस्याज्जपहोमार्चनान्तरा ।
उत्तिष्ठति तदा न्यासं षडङ्ग विन्यसेत्पुनः ॥

अश्वत्थोदुम्बरजाः प्लक्षन्यग्रोधसंभवाः समिधः ।
तिलसर्षपदौग्धघृतान्यष्टद्रव्याणि संप्रदिष्टानि ॥

एतैर्द्रव्यैर्वा सरसिजैर्मधुराप्लुतैर्वा दशांशं जुहुयात् पुरश्चरणाहोमः ।

अथानुष्ठानपद्धत्युक्तप्रकारेणाष्टाक्षरन्यासविधिर्लिख्यते —

तत्र च गुरुवन्दनादिसामान्यन्यासं लिपिन्यासान्तं प्रसिद्धरीत्या

निर्वर्त्य केशवादिन्यासं सप्तमपटलोक्तप्रकारेण, वैष्णवपीठन्यासं सप्तदशपटलोक्तप्रकारेण च कृत्वा, तस्मिन् विष्णुमूर्तये नम इति मूर्तिं संकल्प्य तस्यामावाह्य मानसपूजां कृत्वा तेजोमयं भावयित्वा, करतलपृष्ठपार्श्वेषु मूलेन च व्याप्य, ओं ओं ओं नमः । ओं नं ओं नमः । ओं मों ओं नमः । इत्यादिक्रमेण मूलमन्त्रवर्णैर्दक्षिणतर्जनीमारभ्य, प्रथमपर्वणि प्रथमतारं द्वितीयपर्वणि मन्त्रवर्णं तृतीयपर्वणि द्वितीयतारं अग्रे नमश्चेति क्रमेण वामतर्जन्यन्तं सृष्टिन्यासं कुर्यात् । तर्जनीद्वयादिकनिष्ठान्तं स्थितिः ॥ वामतर्जन्यादिदक्षिणतर्जन्यन्तं संहारन्यासं कृत्वा एवं सृष्टिक्रमेणाङ्गन्यासं कृत्वा अंगुष्ठद्वयादिकनिष्ठद्वयान्तं युगपत्पश्चाङ्गं च न्यस्य ताभ्यां कराभ्यां तारपुटितेन मूलेन देहे त्रिशो व्याप्य, मूलपुटितमातृकान्यासं च, पों नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः इत्यादिसप्तदशपटले गोपालकन्यासविधानोक्तप्रकारेण पञ्चतत्वन्यासं च कृत्वा, मूलमन्त्राक्षराणि मूर्धेक्षणास्यहृदयनाभिगुह्यजानुपादेषु न्यस्य अष्टतत्वानि न्यसेत् ॥

ओं यं नमः पराय पृथिव्यात्मने नमः । ओं णां नमः पराय अब्वात्मने नमः। ओं यं(रं)नमः पराय तेजआत्मने नमः । ओं रं (यं) नमः पराय वाय्वात्मने नमः । ओं नां नमः परायाकाशात्मने नमः । ओं मों नमः पराय अहंकारात्मने नमः । ओं नं नमः पराय महदात्मने नमः । ओं ओं नमः पराय प्रकृत्यात्मने नमः ॥ इति मन्त्रवर्णप्रतिलोमिताष्टतत्वानि पादगुह्यहृद्वदनशिरस्सु पञ्च, हृदि द्वयं, सर्वाङ्गे च न्यसेत् । ओं बिन्द्वात्मने नमः । ओं नादात्मने नमः । ओं अन्तरात्मने नमः । ओं शक्त्यात्मने नमः । ओं परमात्मने नमः । ओं शान्ता(न्त्या)त्मने नमः । ओं ज्ञानात्मने नमः । ओं नमः परायेति पञ्चतत्वानि च संभूय द्वादशतत्वानि । एतेष्वादितश्चतुर्भिः व्यापयेत् । पुनः पूर्वोक्ताष्टस्थानेषु अवशिष्टानि न्यसेत् । पुनः मूलमन्त्रवर्णन्यासं कुर्यात् ॥

आधारहृद्वदनदोःपदमूलनाभौ कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।

कास्येक्षणश्रवणगन्धवहे च दोःपत्सन्ध्यंगुळीषु हृदि धातुषु सानिलेषु ॥

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घापादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्खश्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥

इत्युक्तप्रकारेण दशावृत्त्या न्यासं कृत्वा हृदि धातुषु सानिलेष्वित्यत्र, ओं त्वगात्मने नमः । नं रक्तात्मने नमः । मों मांसात्मने नमः । नां मेदआत्मने नमः । रां अस्थ्यात्मने नमः । यं मज्जात्मने नमः । णां शुक्लात्मने नमः । यं प्राणात्मने नमः । इति धातुमन्त्रः । रां चक्रात्मने नमः । यं शङ्खात्मने नमः । णां गदात्मने नमः । यं पद्मात्मने नमः । इति च चक्रादिषु योज्यम् । एवं मूलमन्त्रवर्णान् न्यस्त्वा, मूर्तिपञ्जरन्यासं प्राक् सप्तदशपटले गोपालकाष्टादशाक्षरीविधाने उक्तेन प्रकारेण कृत्वा, पुनः ओं किरीटकेयूरहारमकरकुण्डलालंकृतशङ्खचक्रगदाब्जहस्तपीताम्बरधरश्रीवत्साङ्कितवक्षस्स्थलश्रीभूमिसहितस्वात्मज्योतिर्द्वयदीप्तिकराय सहस्रादित्यतेजसे परमात्मने नम इति मूर्ध्नि विन्यस्य, पुनर्मूलमन्त्रस्याष्टाङ्गन्यासं पञ्चाङ्गन्यासं च कृत्वा, चक्राय नमः । शङ्खाय नमः । गदायै नमः । पद्माय नमः । इति आयुधानि तत्तत्स्थानेषु विन्यस्य ऋष्यादीन् कृत्वा ध्यात्वा जपेत् ॥

अथास्मिन्नेव प्रपञ्चसारे प्रोक्तप्रकारेणाप्यस्य न्यासविधिर्लिख्यते —

प्रथमं प्राक् सप्तदशे पटले उक्तेन प्रकारेण देहे गुरुभ्यो नमः इत्यादि वैष्णवपीठं न्यस्त्वा, पुनस्सुदर्शनास्त्रेण ताळत्रयदिग्बन्धनादीन् कृत्वा, पुनः प्राक् सप्तमे पटले मातृकान्यासप्रकरणे आधारहृद्वदन इत्याद्युक्तेन प्रकारेण अष्टाक्षरवर्णन्यासं दशकृत्वो न्यस्त्वा, पुनरपि सप्तदशे पटले गोपालकन्यासविधावुक्तेन प्रकारेण मूर्तिपञ्जरन्यासमपि कुर्यात् । तस्य स्थानम् —

ललाटोदरहृत्कण्ठदक्षपार्श्वांसतद्गळे ।
अथ वामत्रये पृष्ठककुदोश्च यथाक्रमम् ॥

द्वादशाक्षरमन्त्रं च मन्त्रवित् मूर्ध्नि विन्यसेत् ।
मूर्धिस्थो वासुदेवस्तु प्राप्नोति सकलान्तरम् ॥

पुनस्तत्प्रतिपत्त्यर्थं किरीटादिमनुं जपेत् ।

किरीटमन्त्रस्तु प्राक् सप्तमे पटले पूजाप्रकरणे पुष्पाञ्जल्यर्थमुक्तः ॥

अथास्य मन्त्रस्य दीक्षाविधिः —

प्रथममासने उपविश्य स्वाङ्गे पीठन्यासं प्राक् सप्तदशे पटले गोपालकविधाने उक्तेन प्रकारेण कृत्वा, गन्धादिभिरात्मानं मानसोपचारैस्संपूज्य, किरीटमन्त्रेण पञ्चवारं त्रिवारं वा पुष्पाञ्जलिं कृत्वा, पुनर्बहि प्राक् नवमे पटले भुवनेशीविधाने प्रोक्तत्रिगुणितयन्त्रमण्डले वैष्णवपीठं संपूज्य, तस्मिन्पीठे पञ्चगव्यैर्वा गोक्षीरैर्वा, षड्विंशतिपटले वक्ष्यमाणधन्वन्तरिविधाने वक्ष्यमाणवैष्णवाष्टगन्धलुलितैरश्वत्थोदुम्बरप्लक्षत्वक्कथितजलैर्वा कलशं तत्रैव वक्ष्यमाणेनापूर्य समावाह्य, वैष्णवाष्टाक्षरमूर्तिमत्र वक्ष्यमाणक्रमेण संपूज्य, प्राक् सप्तमपटलोक्तविधानेन कुण्डं संपाद्य अग्निं समाधाय, अत्रैव पुरश्चरणाहोमोक्तैरष्टद्रव्यैः अष्टाक्षरमन्त्रेण पृथगष्टोत्तरशतं हुत्वा बलिं दत्वा कलशमभिषिच्य शिष्याय मनुं प्रवदेद्गुरुः ॥ एवं दीक्षाविधिः ॥

अथ पूजार्थं वैष्णवपीठविधानमुच्यते —

गुं गुरुभ्यो नमः । गं गणपतये नमः । इत्यादि प्राक् सप्तमे पटले मातृकाविधाने उक्तेन प्रकारेण सामान्यपीठं सर्वं संपूज्य, पुनर्वैष्णवपीठनवशक्तयस्संपूज्याः । ता उच्यन्ते —

विमलायै० उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्व्यै० सत्यायै० ईशायै० अनुग्रहायै० ९ इत्यष्टदलेषु अष्टशक्तीः नवमीं कर्णिकायां च समभ्यर्च्य, ओं नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठा-

त्मने नम इति कर्णिकायां समर्च्य, तस्मिन् विष्णुं समावाह्य समर्चयेत् । अङ्गैर्दळमूले समर्चयेदिति प्रथमावृतिः । पुनर्वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० इति दिग्दळेषु, शान्त्यै० श्रियै० सरस्वत्यै० रत्यै० इत्याग्नेयादि-दळेषु इति द्वितीयावृतिः । चक्राय० शङ्खाय० गदायै० पद्माय० कौस्तुभाय० मुसलाय० खड्गाय० वनमालायै ८ 'रक्ताच्छपीतकनकश्यामळकृष्णधुशुक्लभासस्त्युः' एवमादिवर्णयुक्ता आयुधमूर्तयः । एतैरायुधैस्तृतीयावृतिः । पुनः ध्वजाय० वैनतेयाय० शङ्खनिधये० पद्मनिधये० इति दिक्षु समर्चयेत् । तत्र ध्वजवैनतेयौ देवस्य पृष्ठदेशाग्रदेशस्थदिग्दळयोः वामदक्षिणस्थदळयोः शङ्खपुष्प(पद्म)निधी । पुनः विघ्नाय० आर्यायै० दुर्गायै० विष्वक्सेनाय० इति कोणेषु समर्चयेत् । तत्र देवस्य पाश्चात्यदेशस्थदक्षिणवामकोणदळयोश्च देवस्याग्रदेशस्थदक्षिणवाम-कोणदळयोश्च संयोजयेदिति चतुर्थावृतिः । ध्वजादीनां रोचींष्युच्यन्ते ॥

ध्वजः श्यामः पवीरक्तः निधी शुक्लारुणप्रभौ ।
अरुणश्यामळश्यामपीता विघ्नादयो मताः ॥

इन्द्रादिभिः पञ्चमी ॥

अथास्यैव पूजाविधानान्तरमुच्यते —

अङ्गैः प्रथमावृतिः । वासुदेवादिमूर्तिचतुष्टयेन पूर्वोक्तशक्तिभिस्सह द्वितीया । केशवादिमूर्तिभिस्तृतीया । इन्द्रादिभिश्चतुर्थी ॥

अथास्यैव पूजाविधानान्तरमुच्यते —

वासुदेवादिभिः सशक्तिकैः प्रथमावृतिः । चक्राद्यैर्द्वितीया । ध्वजाद्यै-स्तृतीया । केशवाद्यैश्चतुर्थी । इन्द्रादिभिः पञ्चमी ॥

अस्यैव पूजाविधानान्तरमुच्यते —

वासुदेवादिभिः सशक्तिकैः प्रथमावृतिः । ध्वजादिभिर्द्वितीया । इन्द्रादिभिस्तृतीया ।

इत्युक्तविधिचतुष्के पूजयितुरथैकमपि यथाशक्ति ।
अचिरेण भवति लक्ष्मीः हस्तगता सकलवर्गसिद्धिकरी ॥

केशवादिद्वादशमूर्तीनां नामानि लिख्यन्ते —

केशवाय० नारायणाय० माधवाय० गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० १२ इति ॥

इति गीर्वाणेन्द्रविरचिते प्रपञ्चसारसारसङ्ग्रहे
एकोनविंशः पटलः ॥



## ॥ अथ विंशः पटलः ॥

अनेन विधानेन वैष्णवाष्टाक्षरमूर्तिं संपूज्य, अनया स्तुत्या हरिः स्तोतव्यः ॥

प्रसीद मह्यं भगवन्नज्ञानाऽऽकुण्ठितात्मने ।
तवांघ्रिपङ्कजरजोरागिणां भक्तिमुत्तमाम् ॥

अज प्रसीद भगवन्नमितद्युतिपञ्जर ।
अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥

स्वसंवेद्यस्वरूपात्मन्नानन्दात्मन्ननामय ।
अचिन्त्याधारविश्वात्मन्प्रसीदेश निरञ्जन ॥

प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन ।
प्रसीद स्पष्टगम्भीर गम्भीराणां महाद्युते ॥

प्रसीद व्यस्तविस्तीर्ण विस्तीर्णानामणोरणो ।
*प्रसीदाद्याद्यजातीनां प्रसीदान्तान्तरायिणाम् ॥

गुरोर्गरीयस्सर्वेश प्रसीदानन्य देहिनाम् ।
जय माधव मायात्मन् जय केशव केशिहन् ॥

जय सुन्दर सौम्यात्मन् जय शाश्वत शङ्खभृत् ।
जय शार्ङ्गधर श्रीमन् जय नन्दकनन्दन

जय चक्रगदापाणे जयाव्यय जनार्दन ।
जय रत्नाकराबद्धकिरीटाक्रान्तमस्तक ॥

जय पक्षिपतिच्छायानिरुद्धार्ककराकर ।
नमस्ते नरकाराते नमस्ते मधुसूदन ॥

---

* प्रसीदादर्द्रिजातीनां इति ख, ग, घ, ङ, पाठः

नमस्ते नळिनापाङ्ग नमस्ते नयनाञ्जन ।
नमः पापहरेशान नमस्सर्वभयापह ॥

नमस्संभूतसर्वात्मन् नमस्संभृतकौस्तुभ ।
नमस्ते नयनातीत नमोऽतिक्रान्तवाक्पथ ॥

नमो विभिन्नगेयांश नमः स्मृतिपथातिग ।
नमस्त्रिमूर्तिभेदेन सर्गस्थित्यन्तहेतवे ॥

विष्णवे त्रिदिवारातिजिष्णवे परमात्मने ।
चक्रभिन्नारिचक्राय चक्रिणे शक्रबन्धवे ॥

विश्वाय विश्ववन्द्याय विश्वभूताय ते नमः ।
नमोऽस्तु योगिध्येयाय नमोस्तु ध्यानरूपिणे॥

भुक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ।
नमो वाक्कायचेष्टास्स्युर्ध्यानस्तुतिनमस्क्रियाः ॥

देवेश कर्म सर्वं मे भवेदाराधनं तव ।

इति जपहवनार्चाभेदतो विष्णुपूजा-
निरतहृदयकर्मा यस्तु मन्त्री चिराय ।
स खलु सकलकामान् प्राप्य हृष्टान्तरात्मा
जननमृतिवियुक्तामुत्तमां मुक्तिमेति ॥

एवं वैष्णवाष्टाक्षरमूर्तिं स्तुत्वा पञ्चीकरणमन्त्रैश्च पञ्चपुष्पाञ्जलिमन्त्रैश्च किरीटमन्त्रेण च प्राक् सप्तमपटलोक्तैः पुष्पाञ्जलिं कृत्वा पुनः पूजां समापयेत्॥

इति गीर्वाणेन्द्रविरचिते प्रपञ्चसारसारसङ्ग्रहे
विंशः पटल ॥

## ॥ अथैकविंशः पटलः ॥

अथ मन्त्रदेवताप्रकाशिकोक्तप्रकारेण अष्टाक्षरस्य प्रयोगविशेषा उच्यन्ते–

आदावष्टदळं पद्मं विरचय्य, कर्णिकायां षट्कोणं विलिख्य, तदन्तः प्रणवमध्यस्थसाध्यनामयुक्तं अमिति बीजं विलिख्य, दळमध्येषु अष्टाक्षराणि विलिख्य, दळाग्रेषु "उत्तिष्ठ श्रीकर स्वाहा" इति श्रीकराष्टाक्षरवर्णान् विलिख्य, तद्बहिः षट्कोणं विलिख्य, कोणेषु सुदर्शनषडक्षराण्यालिख्य, तद्बहिर्द्वादशदळानि विलिख्य, दळेषु वासुदेवद्वादशाक्षराणि लिखित्वा, तद्बहिर्द्वात्रिंशद्दळानि रचयित्वा, दळेषु नृसिंहानुष्टुप्वर्णान् विलिख्य, तद्बहिर्नृसिंहैकाक्षरेण वेष्टयेत् ॥ एतद्यन्त्रं जपहोमादिसाधितं समस्तसंपद्रक्षामोक्षकरं भवति ॥

अथ प्रयोगः—

दधिमध्वाज्यसंयुक्ताः चतुरंगुलसम्मिताः ।
गळूचीरयुतं हुत्वा मृत्युमेवातिवर्तते ॥

प्रयोगान्तरम्—

शनैश्चरदिनेश्वत्थं नित्यमालिंग्य पाणिना ।
जपेदष्टशतं शुद्धः म्रियते नापमृत्युभिः ॥

प्रयोगान्तरम्—

पञ्चविंशतिकृत्वस्तु जपेत् शुद्धाः पिबेदपः ।
पुष्पाज्यसमिधो वापि जुहुयादगदो भवेत् ॥

उदकुम्भं नवं पूर्णमुपस्पृश्यायुतं जपेत् ।
तेनाभिषिक्तगात्रस्तु व्याधिभिः परिमुच्यते ॥

अश्नीयादन्वहं विद्वानन्नं सप्ताभिमन्त्रितम् ।

आरोग्यं महदाप्नोति बलं तेजश्च विन्दति ॥

भक्षयेत्सर्वभक्ष्यांश्च सप्तयुक्ताभिमन्त्रितम् ।
तत्सर्वं जीर्यते सम्यक् अपि हालाहलं विषम् ॥

शतमष्टोत्तरं जप्त्वा मन्त्रपूतं जलं पिबेत् ।
अहन्यहनि षण्मासात्ततो मेधाविवर्धनम् ॥

चन्द्रसूर्योपरागेषु विषुवे चायनेषु वा ।
त्रिवारमेकवारं वा समुपोष्य यथाविधि ॥

स्पृशन्नष्टसहस्रं तु जप्त्वा ब्राह्मीरसं शुचि ।
त्रिः पिबेल्लभते मेधां श्रुतवांश्चोपजायते ॥

बिल्वैरयुतहोमेन महाधनपतिर्भवेत् ।
पञ्चतन्तुमयं सूत्रमयुतेनाऽभिमन्त्रितम् ॥

धारयेद्दक्षिणे हस्ते सर्वरक्षा भवेत्सदा ।

अथ वैष्णवाष्टाक्षरादिमन्त्रप्रसङ्गात् मुक्तिप्रदत्वसामान्येन नामत्रयमपि कल्पान्तरोक्तमत्र योग्यतावशाल्लिख्यते —

पाराशर्यव्यासनारदा ऋषयः । विराट् छन्दः । परब्रह्म देवता । अच्युताय नमः, अनन्ताय नमः, गोविन्दाय नमः, इति मन्त्रः । अथवा अच्युतायानन्ताय गोविन्दाय नमः इति मन्त्रः । मोक्षारोग्यप्रधानोयं मन्त्रः । अस्मिन्पक्षे शौनक ऋषिः । छन्दोदेवते तुल्ये । अच्युताय नमः हृत् । अनन्ताय नमः शिरः । गोविन्दाय नमः शिखा । अच्युताय नमः कवचम् । अनन्ताय नमः नेत्रम् । गोविन्दाय नमः अस्त्रम् ॥

ध्यानम् —

सर्वायुधैरुपेतं च गरुडोपरि संस्थितम् ॥

सनकादिमुनीन्द्रैस्तु सर्वदेवैरुपासितम् ।
श्रीभूमिसहितं देवमुदयादित्यसन्निभम् ॥

प्रातरुद्यत्सहस्रांशुमण्डलोपमकुण्डलम् ।
सर्वलोकस्य रक्षार्थमनन्तं नित्यमेव तु ॥

अनन्तवरदानं च प्रयच्छन्तं मुदान्वितम् ।
एवं ध्यात्वा हरिं नित्यं परब्रह्मस्वरूपिणम् ॥

प्रातर्मध्यन्दिने चैव सायाह्ने च विशेषतः ।
अर्चयेद्देवदेवेशं गन्धपुष्पजलादिभिः ॥

अथ प्रयोगविधिः —

विनियोगं प्रवक्ष्यामि यथावत् द्विजसत्तमाः ।
नास्मात्परतरा रक्षा रोगार्तानां विधीयते ।
अष्टोत्तरसहस्रं वा शतं वा जपसंख्यया ॥

रोगार्तान्मार्जयेन्मूर्ध्नि कुशैर्दूर्वाभिरेव वा ।

अयमर्थः — अनेन मन्त्रेण (अष्टोत्तरसहस्रं)अष्टोत्तरशतं(वा) जप्त्वा कुशैर्वा दूर्वया वा साध्यस्य मूर्ध्नि मार्जयेत् । सर्वे रोगा नश्यन्ति ॥

प्रयोगान्तरम् —

अभिषिञ्चेत्तथा मूर्ध्नि रविवारे तथाम्भसा ।
नित्यं चैव पिबेत्तोयमष्टाविंशतिसंख्यया ॥

सर्वरोगविनिर्मुक्तश्शतवर्षाणि जीवति ।

अयमर्थः— प्रत्यर्कवारं कलशं संपूज्य जस्वा अभिषिञ्चयेत् । अष्टाविंशतिसंख्यं नित्यं पिबेच्च । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्—

हुनेत् घृततिलैर्दूर्वागळूचीभिः पृथक् पृथक् ।
लक्षं जपेन्नाममन्त्रं महारोगस्य शान्तये ॥

गळूची-गुळवेल । अयमर्थः—एतैर्द्रव्यैः पृथक् पृथक् सहस्रं हुनेत् । लक्षं जपेच्च । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्—

बिल्वमूले तथाऽश्वत्थमूले वा रोगिणं स्मरन् ।
स्पृशन् जस्वा निरीक्षेत्तमादित्यं मनसा स्मरन् ॥

एवं कृत्वा ततः पुंसो रोगशान्तिर्भविष्यति ।

अयमर्थः— बिल्वं वा अश्वत्थं वा स्पृष्ट्वा रोगिणं स्मृत्वा जस्वा, पुनरादित्यं मनसा ध्यात्वा तं रोगिणं निरीक्षेत । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्—

कन्यार्थी लाजहोमेन श्रीकामो बिल्वपत्रकैः ।
पुत्रार्थी घृतहोमेन चारोग्यार्थी तिलैर्हुनेत् ॥

प्रयोगान्तरम्—

ज्वरग्रहगृहीतं च स्पृष्ट्वा लक्षं जपेज्जले ।
असाध्योपि भवेत्स्वस्थः भस्मना ताडयेद्बुधः ॥

मूर्ध्नि चैव ललाटे च जपेन्मन्त्रत्रयं हृदि ।
आविश्य सर्वं वदति यथेष्टं गच्छति ध्रुवम् ॥

अयमर्थः — ज्वरग्रस्तं वा पिशाचग्रस्तं वा स्पृष्ट्वा पुनर्जले स्थित्वा लक्षं जपेत् । तस्मात् तच्छान्तिर्भवति । अथवा भस्म, साध्यस्य उक्तस्थलेपु मन्त्रं जप्त्वा निक्षिपेत् । तस्मात् भूतपिशाचा आविश्य गच्छन्ति ॥

प्रयोगान्तरम् —

मोक्षकामी जपेन्नित्यमष्टोत्तरसहस्रकम् ।
यावज्जीवं करे तस्य स्थिता मुक्तिर्न संशयः ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च विधवास्तथा ।
गडूचीतिलदूर्वाभिर्घृतबिल्वकुशैश्शरैः ॥

यथाकामी हुनेन्नित्यं तत्तत्कामस्य सिद्धये ।

शरं-दर्भः । अयमर्थः — एतैर्द्रव्यैः पृथक् सहस्रसंख्यं हुनेत् यं कञ्चित्काममुद्दिश्य । तस्मात्तं कामं लभते ॥

प्रयोगान्तरम् —

रविवारे जले स्थित्वा नाभिदघ्ने जपेन्नरः ।
अष्टोत्तरसहस्रं तु ज्वरनाशो भविष्यति ॥

प्रयोगान्तरम् —

ग्रहापस्मारकुष्ठादिपिशाचाः प्रेत एव च ।
लक्षं हुनेत्तु दूर्वाभिः तच्छान्तिस्तु भविष्यति ॥

अयमर्थः — दूर्वया लक्षं हुनेत् । ग्रहापस्मारादिशान्तिः ।

प्रयोगान्तरम् —

स्पृष्ट्वाश्वत्थं जपेद्वर्षं रविमण्डलमध्यगम् ।

ध्यायन्कृष्णं लभेत्कामाननुरूपां कुटुम्बिनीम् ॥

अयमर्थः — रविमण्डलमध्ये श्रीकृष्णं ध्यात्वा अश्वत्थं स्पृष्ट्वा जपेत्। तस्मात् कामांश्चानुकूलां स्त्रियं च लप्स्यति ॥

प्रयोगान्तरम् —

अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगास्सत्यं सत्यं वदाम्यहम् ॥

सर्वे भवन्ति मुक्ताश्च नामत्रयजपान्विताः ।
अगतीनां गतिस्त्वेतन्मन्त्रत्रयमनुत्तमम् ॥

गृहीत्वा वाग्यतो मन्त्रमेकादश्यां सदक्षिणम् ।
यथालाभं जपेन्मन्त्रमर्चयेत्तु विशेषतः ॥

किमत्र बहुनोक्तेन सर्वसिद्धिकरा ह्यमी।
आचार्यात्समभिप्राप्तो ह्यदत्त्वा तस्य दक्षिणाम् ॥

अभ्यस्तोपि महामन्त्रः श्रेयसे नात्र कल्पते ।

अथास्य यन्त्रमुच्यते —

षट्कोणमध्ये प्रणवं तदन्तरे साध्यं पुनश्च प्रणवं लिखेद्बहिः ।
प्रागादिकोणेषु मनोः पदानि नामत्रयं यन्त्रमनुत्तमं तत् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तन्मध्ये प्रणवं विलिख्य तन्मध्ये साध्यनामादीन् विलिखेत्। षट्सु कोणेषु, अच्युतायेति पूर्वकोणे, नम इत्याग्नेयकोणे, अनन्ताय नमः गोविन्दाय नमः एवं षट् पदानि षट्सु कोणेषु विलिख्य, तद्बहिः प्रणवेन वेष्टयेत्। एवं नामत्रययन्त्रमुक्तम्। एतद्विलिख्य धृतेऽभीष्टफलं विशेषतो रक्षाकरं च भवति। इति नामत्रयकल्पस्समाप्तः ॥

अथ वैष्णवद्वादशाक्षरीविधानमुच्यते —

प्रजापति ऋषिः । गायत्री छन्दः । विष्णुर्देवता । अं बीजम् । नमश्शक्तिः । ओं हृत् , । नमश्शिरः । भगवते शिखा । वासुदेवाय कवचम् । ओं नमो भगवते वासुदेवाय अस्त्रम् ॥ ध्यानम् —

हरिमुज्ज्वलचक्रदराब्जगदाकुलदोःपरिघं सितपद्मगतम् ।
चलयाङ्गदहारकिरीटधरं नवकुन्दरुचं प्रणमामि सदा ॥

ओं नमो भगवते वासुदेवाय इति मन्त्रः ॥ मोक्षप्रधानोयं मन्त्रः । द्वादशलक्षजपः ॥

अथाक्षरन्यासं वक्ष्ये —

सपादजानुयुगललिङ्गनाभ्युदरेषु च ।
हृद्दोर्गळास्यदृङ्मस्तशिखास्वक्षरशो न्यसेत् ॥

इति संहारन्यासः ॥

शिखाललाटनेत्रास्यगळदोर्हृदयेष्वपि ।
सकुक्षिनाभिलिङ्गाख्यजानुपादेषु विन्यसेत् ॥

इति सृष्टिन्यासः ॥

हृत्कुक्षिनाभिषु तथा गुह्यजानुपदेष्वथ ।
करकण्ठास्यदृङ्मस्तशिखास्वर्ध्वं च विन्यसेत् ॥

इति स्थितिन्यासः । एतस्य त्रिविधन्यासस्य च फलमुच्यते ॥

संहृतेर्दोषसंहारः सृष्टेश्च शुभपुष्टयः ।
स्थितेश्च शान्तिर्विन्यासास्तस्मात्कार्यास्त्रयो मताः ॥

शुद्धैस्तिलैर्द्वादशसहस्रं पुरश्चरणाहोमः ।

अथ पूजा—

पूर्वोक्तवैष्णवपीठे वासुदेवं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । वासुदेवाय० सङ्कर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० एताश्चतस्रो मूर्तयो दिक्षु । पुनः लक्ष्म्यै० सरस्वत्यै० प्रीत्यै० रत्यै० एता विदिक्षु । एतैर्द्वितीयावृतिः ॥ केशवाय० नारायणाय० माधवाय० गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० १२ एतैस्तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी ॥

अथ प्रयोगः—

समिधामथ दुग्धवृक्षजानां जुहुयादर्कसहस्रकं सदुग्धम् ।
मनसः परिशुद्धये मनस्वी सघृतेनापि पयोन्धसा सितेन ॥

अस्यार्थः— दुग्धवृक्षास्तु अश्वत्थवटोदुम्बरप्लक्षजाः (क्षाः) क्षीरसिक्तै-रेतैरर्कसहस्रं द्वादशसहस्रं जुहुयात् । सघृतेन पयोन्धसा सितेनेति । धवलीकृतेन क्षीरोदनेन घृतसिक्तेन च सहस्रं जुहुयात् । तत्फलायैवेत्यर्थः ॥

अथ सुदर्शनविधानमुच्यते—

अहिर्बुध्न्य ऋषिः । अनुष्टुप् छन्दः । श्रीसुदर्शनो महाविष्णुर्देवता । रं बीजं । हुं शक्तिः । आचक्राय स्वाहा हृत् । विचक्राय स्वाहा शिरः । सुचक्राय स्वाहा शिखा । धीचक्राय स्वाहा कवचम् । संचक्राय स्वाहा नेत्रम् । ज्वालाचक्राय स्वाहा अस्त्रम् । पुनः ऐन्द्रीं दिशं सुदर्शनेन बध्नामि, नमश्चक्राय स्वाहेति पूर्वदिग्बन्धः । आग्नेयीं दिशं चक्रेण बध्नामीत्यादि, अधोदिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा इति बन्धनं कुर्यात् । अथवा ऐन्द्रीं दिशं समारभ्य दिशं त्वधस्तादन्तं इत्यारभ्य, शीर्षे च दिशां प्रबन्धः इत्यत्र दिग्बन्धन-मन्त्रोद्धारे चशब्दनिर्देशात् दिग्बन्धनमन्त्रस्य स्वाहान्ते अस्त्राय फडिति सर्वा-स्वपि दिक्षु संयोज्य दिग्बन्धनं कुर्यात् । अस्मिन्पक्षे अस्त्यत्रोपदेशः । कथं ?

पूर्वोक्तप्रकारेण आचक्राय स्वाहेत्याद्यङ्गं नेत्रान्तं कृत्वा, तत्रैवास्त्रस्थानेतु ऐन्द्रीं दिशं चक्रेण बध्नामि नमो ज्वालाचक्राय स्वाहा अस्त्राय फट्। एवमाग्नेयादिष्वपि । एवं दिग्बन्धनमन्त्रस्यान्ते अस्त्राय फडिति संयोज्याङ्गषट्कं दशदिग्बन्धनरूपेण कुर्यादिति । पुनः ओं त्रैलोक्यं रक्ष रक्ष हुंफट् स्वाहा अनेन अग्निप्राकारमन्त्रेण परितोऽग्निप्राकारं भावयेत् ॥

अस्य मन्त्रस्याक्षरन्यास उच्यते —

तारं तु मूर्ध्न्यथ सितारुणकृष्णवर्णं मध्ये भ्रुवोश्च समथो वदने हकारम् ।
हृद्गुह्यजानुपदसन्धिषु चावशिष्टान् वर्णान् न्यसेदिति तनौ पुनरग्निवर्णान् ॥

अस्यार्थः — अकारउकारमकाराणां सन्धिः किल प्रणवः । तेन सितारुणकृष्णवर्णत्रयस्वरूपं तारं शिरसि न्यसेत् । पुनः सकारादिवर्णान् अग्निवर्णान् ध्यात्वा भ्रूमध्यादिषु स्थानेषु न्यसेत् इति ॥

अभ्याद्भास्करसन्निभाभिरखिलाभाभिर्दिशो भासयन्
भीमाक्षः क्षरदट्टहासविकसद्दंष्ट्राप्रदीप्ताननः ।
दोर्भिश्चक्रदरौ गदाब्जमुसलांस्त्रासांश्च पाशांकुशौ
बिभ्रत्पिङ्गशिरोरुहोऽथ भवतः चक्राभिधानो हरिः ॥

ॐसहस्रार हुंफट् ॥ इति मन्त्रः ॥ रक्षाप्रधानोयं मन्त्रः ॥

सुदर्शनाय विद्महे महाज्वालाय धीमहि । तन्नश्चक्रः प्रचोदयात् ॥

इयं सौदर्शिनी गायत्री । मूलमन्त्रं जपुमिच्छता यथाशक्ति जप्तव्या। अनया सान्निध्यमुद्रां च प्रदर्शयेत् । करतलाभ्यां बद्धोऽञ्जलिः प्रसृतो वा, एषा सान्निध्यमुद्रा । पुनः ओं नमो भगवते महासुदर्शनाय महाचक्राय महाज्वालाय दीप्तिरूपाय सर्वतो रक्ष रक्ष मां महाबलाय स्वाहा ॥

रक्षाकरः प्रसिद्धोयं क्रियमाणेषु कर्मसु ॥

तिलसर्षपाब्जबिल्वाज्यदौग्धैर्द्वादशसहस्रं जुहुयात्पुरश्चरणाहोमः । दौग्धं-पायसम् ॥

अथ कलशपूजार्थं यन्त्रमण्डलं लिख्यते—

भूमौ तण्डुलचूर्णानि विकीर्य तस्मिन् दर्भाग्रेण यन्त्रं विलिखेत् । अयं न्यायस्सर्वत्रकलशविधौ समानः ॥

षट्कोणान्तस्थतारं विवरलिखितमन्त्राक्षरं सन्धिराज-
त्स्वाङ्गं बाह्ये कलाकेसरमुदरगताष्टाक्षरं चाष्टपत्रम् ।
पद्मं वर्णैर्विराजद्विकृतिदळलसत्षोडशार्णं त्रिवीतं
व्योमान्त्यार्णं स्वनाम्ना विरचितगुणपाशांकुशं चक्रयन्त्रम् ॥

अस्यार्थः— प्रथमं षट्कोणं विलिख्य तदन्तः प्रणवं विलिख्य, तस्मिन् जीवसाध्यनामादीन् विलिख्य, षट्कोणेषु सुदर्शनषडर्णान् विलिख्य, कोणद्वन्द्वस्य सन्धौ षडङ्गानि विलिखेत् । तत्र षष्ठाङ्गे पूर्वोक्तपक्षविशेषे सर्वा दिशश्चक्रेण बध्नामि नमो ज्वालाचक्राय स्वाहा अस्त्राय फडिति विलिखेत् । एवं षडङ्गानां मध्ये षष्ठं दिग्बन्धनमन्त्रेण सार्कं विलिख्य, पुनस्तद्बाह्ये अष्टपत्रं विलिख्य तद्दळमूले स्वरान् द्वौ द्वौ विलिख्य, तन्मध्ये वैष्णवाष्टाक्षरस्यैकैकमक्षरं विलिखेत् । तद्बहिष्षोडशपत्रं पद्मं विलिख्य तद्दळमूले कादिवर्णान् भागशस्संलिखेत् । पुनर्दळमध्ये सुदर्शनषोडशार्णं, "ओं नमो भगवते महासुदर्शनाय हुं फट्" इत्यस्यैकैकमक्षरं विलिखेत् । पुनर्बहिर्वृत्तत्रयं विलिख्य, पूर्ववृत्ते हं हं इत्यनेनावृत्त्या वेष्टयेत् । द्वितीये वृत्ते क्षं क्षं इत्यनेनावृत्त्या वेष्टयेत् । तृतीये वृत्ते स्वनाम्ना सह विरचितगुणपाशांकुशं गुणः प्रणवः । प्रथमं प्रणवं, ततो नाम्नः प्रथममक्षरं ततः पाशं ततो नामद्वितीयाक्षरं ततोंकुशं विलिखेदित्यर्थः ॥

अथवा प्रथमवृत्तवीथ्यां सबिन्दुकं हकारं विलिख्य, ततस्साध्यनामाक्षर-

स्यैकैकमक्षरं विलिख्य, ततः क्षकारं पुनरपि हकारं, पुनस्साध्यनामद्वितीयाक्षरं, एवं हकारक्षकाराभ्यां साध्यनामाक्षराणि पुटित्वा विलिखेत् । पुनस्तद्बाह्ये वृत्ते प्राग्भागे पाशाक्षरमालिख्य तस्य दीर्घांशरेखया यन्त्रमभितस्समावेष्टयेत् । पुनस्तद्बाह्ये वृत्ते प्राग्भागे अंकुशाक्षरमालिख्य तद्दीर्घांशरेखया अभितो वेष्टयेदिति ॥ तत्र आं इति पाशः । क्रों इत्यंकुशः । एवं मण्डलप्रकारः ॥

अस्मिन्मण्डले पुरश्चरणाकलशं क्षीरद्रुमत्वक्काथोदकैर्वा, दुग्धेन वा, पञ्चगव्यैर्वा पशोः (गो)मूत्रैर्वा संपूर्य वैष्णवपीठे समावाह्य समर्चयेत् चक्रहरिक्रमेण । अङ्गैः प्रथमावृतिः । तत्र पूर्वोक्तषडाङ्गमन्त्रैः पक्षविशेषे सर्वा दिशश्चक्रेण बध्नामि नमो ज्वालाचक्राय स्वाहा अस्त्राय फडिति योजयेत् । चक्राय० शङ्खाय० गदायै० पद्माय० मुसलाय० धनुषे० पाशाय० अंकुशाय० ८ एतेषां रोचींषि पीतरक्तसितश्यामा द्विशस्त्विमा इति, चक्रपद्मे पीतवर्णे, मुसलांकुशौ रक्तवर्णौ, शङ्खगदे सिते, धनुःपाशौ श्यामौ, एतैरायुधैर्द्वितीयावृतिः । लक्ष्म्यै० सरस्वत्यै० रत्यै० प्रीत्यै० कीर्त्यै० कान्त्यै० तुष्टयै० पुष्टयै० ८ इति तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी ॥

अथ चक्रहोमप्रयोगः —

पीताभा कर्णिका स्यादरुणतरमरं श्यामळं चान्तराळं
नेमिः श्वेता च बाह्ये विरचितशिखिरेखाकुलं पार्थिवान्तम् ।
चक्रं द्वन्द्वं लिखित्वा विशदमतिरथो सौम्ययाम्यं च मन्त्री
कुम्भं संपूर्य सौम्ये प्रचयतु तथा दक्षिणे होमकर्म ॥

अस्यार्थः — प्रथमं कर्णिकावृत्तं यथेष्टविशालेन विलिख्य, तद्बहिः कर्णिकाविशाले षष्ठांशमानेन वृत्तं कृत्वा, तद्बहिस्ततो द्विगुणमानेन वृत्तं कृत्वा, तद्बहिः कर्णिकावृत्तषष्ठांशमानेन वृत्तद्वयं विधाय, कर्णिकावृत्तमध्यं पीतवर्णैर्हरिद्राचूर्णादिभिरापूर्य, तद्बाह्यवृत्तवीथीं च पीतवर्णैरेवापूर्य, तद्बाह्यवृत्तवीथ्यां अष्टदळानि कृत्वा, इतरेतरदळयोरन्तराळमेकांगुलप्रमाणं यथा भवेत्तथाऽष्टदळानि

विलिख्य, तद्दळानां मध्यं रक्तवर्णैरापूर्य, दोपारजःक्षारसंयुक्तं रक्तमुच्यते। पुनर्दळयोर्दळयोरन्तराळाष्टकं श्यामाकारैर्बिल्वपत्रचूर्णादिभिरापूर्य, तद्बाह्यं वृत्तं नेम्याख्यं श्वेतवर्णैस्तण्डुलचूर्णादिभिरापूर्य, तद्बाह्यवृत्तमध्येपि कृष्णवर्णैर्दग्धकुलाकचूर्णैरापूरयेत्। तदुक्तं चास्मिन्नेव शास्त्रे प्राग्दीक्षापटले—

रजांसि पञ्चवर्णानि पञ्चद्रव्यात्मकानि च।
पीतशुक्लारुणसितश्यामान्येतानि भूतशः॥

हारिद्रं स्याद्रजः पीतं ताण्डुलं च सितं भवेत्।
तथा दोपारजःक्षारसंयुक्तं रक्तमुच्यते॥
कृष्णं दग्धपुलाकोत्थं श्यामं बिल्वदळादिकम्॥ इति॥

पुनस्तस्या एव वृत्तरेखाया बहिरग्निज्वालाकाराभिस्त्रिभङ्गिरूपाभिरनेकाभिः रेखाभिः परितो वेष्टयेत्। पुनर्बहिश्चतुरश्रं विलिख्य पुनरस्य पद्मस्य सर्वतो बहिः दक्षिणतो वामतश्च एवमेव चक्राब्जद्वन्द्वं विलिख्य, उत्तरचक्रमध्ये कुम्भं निधाय, दक्षिणचक्रमध्ये होमकर्म कुर्यात्॥ क्रूरकर्मण्येवम्। शान्तिकर्मणि तु दक्षिणतः कुम्भः, उत्तरतो होम इति सर्वत्र न्यायः। तत्र पूर्वं कलशं रक्तोदेन संपूर्य संपूज्य, पुनर्होमद्रव्यैर्जुहुयात्। घृतापामार्गकेध्माक्षतैस्सद्राजितिलपायसैश्च सकलैर्द्रव्यैर्घृताक्तैः क्रमादिति होमद्रव्याण्युक्तानि।

अयमर्थः— घृतैश्च, अपामार्गैश्च, इध्मैश्च, अक्षतैश्च, राजीभिश्च तिलैश्च, क्षीरपायसैश्च, पञ्चगव्यं सर्वं मिळित्वा तेन च, पुनरपि घृतेन च, क्रमेण हुनेदिति। अपामार्गेध्मं = आधाडा। राजी – मोहर्या। एतैरष्टद्रव्यैरेकैकैः षड्विंशत्युत्तरशतं जुहुयात्। एतेषां द्रव्याणां हुतशेषं दशांशं कलशे प्रक्षिपेत्। पुनः प्रस्थार्धान्नकृतं पिण्डं कलशजले निक्षिपेत्। पुनः कुम्भहोमस्थानस्थितचक्रयोः मध्यचक्रे साध्यं संस्थाप्य, तेन कुम्भेन, चतुर्विंशतिपटले "ओं स्थाने हृषीकेश" इत्यादिवक्ष्यमाणमन्त्रेण तं नीराज्य, पुनस्तं घटं

सद्रव्यकं बहिरारात् साध्यस्य अष्टमे राशिस्थाने निक्षिपेत् । घटस्य दक्षिणे भागे अग्न्यादिकं सर्वं च निक्षिपेत् ॥

तत्राष्टमराशिस्थानमुच्यते—

प्राच्यां मेषवृषौ । आग्नेय्यां मिथुनम् । दक्षिणतः कटकसिंहौ । नैर्ऋते कन्या । पश्चिमे तुलावृश्चिकौ । वायव्ये चापः । उत्तरे मकरकुम्भौ । ऐशान्यां मीनं च सदा सुस्थितम् । एतेषु रोगिणोऽष्टमे राशौ कुम्भं विनिक्षिपेत् । हुतावशिष्टान्नेन बलिं तत्र दद्यात् अनेन मन्त्रेण ॥

नमो विष्णुगणेभ्यः सर्वशान्तिकरेभ्यः बलिं गृह्णन्तु शान्तये नमः । इति बलिं तत्र दद्यात् ॥

अस्य चक्रहोमकर्मणः फलश्रुतिः—

ज्वरादिकां रोगपरंपरां वा विस्मृत्यपस्मारभवां रुजं वा ।
रक्षःपिशाचग्रहवैकृतं वा विधिस्त्वयं मंक्षु हरेद्विकारम् ॥

प्रयोगान्तरम्—

पालाशैर्वा स्तनजद्रुमजैर्वा पञ्जरे कृते फलकैः ।
संपूर्य पञ्चगव्यैः तत्र तु संस्थाप्य शुद्धमपि गदिनम् ॥

पूर्वाद्यष्टसु दिक्षु च सजपं जुहुयुः पृथक् द्विजा वशिनः ।
द्रव्यैस्सदक्षिणं तानभ्यर्च्य च मुच्यते रुजो जन्तुः ॥

स्तनजद्रुमाः-अश्वत्थवटोदुम्बरप्लक्षाः । अस्यार्थः—उक्तेष्वेकेन दारुणा पञ्जरं संपाद्य, तत्र भूमौ पूर्ववत् सुदर्शनचक्राब्जस्वरूपं विलिख्य, तदुपरि फलकपञ्जरपूरित पञ्चगव्यमध्ये साध्यं संस्थाप्य, तत्परितः अष्टसु दिक्षु तथैव चक्राणि विलिख्य, तेषु वा केवलं स्थण्डिलेषु वा, अष्टभिर्ब्राह्मणैः

पृथक् पालाशसमिद्भिश्च क्षीरद्रुमचतुष्टयसमिद्भिश्च पञ्चगव्यैश्चेत्येवं षड्भिरपि द्रव्यैस्साध्यं स्पृष्ट्वा जपपूर्वकं सर्वे ब्राह्मणा जुहुयुः । इति महाचक्रहोमः ॥

प्रयोगान्तरम् —

विप्रक्षीरद्रुमत्वङ्मलयजमुरकाश्मीरकुष्ठत्रियामा-
विल्वापामार्गराजीतिलतुळसियुगक्रान्तिदूर्वायवार्कैः ।
लक्ष्मीदेवीकुशागोमयकमलवचारोचनापञ्चगव्यैः
सिद्धेऽग्नौ कुम्भसिद्धं मनुजपमहितं भस्म सर्वार्थदायि ॥

लक्ष्म्यायुष्करमतुलं पिशाचभूतापस्मारादिकमचिरेण नाशयेच्च ।
क्षुद्रादीनपि विविधानथोपसर्गानितस्मान्न परतरा समस्तरक्षा ॥

अस्यार्थः — विप्रद्रुमः - पलाशः । क्षीरद्रुमाः – अश्वत्थवटोदुम्बरप्लक्षाः । एतेषां त्वक् चर्म । मलयज – चन्दनसारम् । मुरं-मुरसंज्ञमेव । काश्मीरं-कुंकुमम् । कुष्ठं–कोष्ठम् । त्रियामा–हळगुण्ड । अपामार्गं–आधाडा । राजी–मोहर्या । तुळसीयुगं-कृष्णतुळसी श्यामतुळसी च । क्रान्ति-विष्णुक्रान्ति । अर्कं-रुयी । लक्ष्मी-श्रीताल । देवी-सहदेवी । वचा वेखण्ड । रोचना गोरोचन । अन्यान्यौषधानि स्पष्टार्थानि । एतान्यौषधानि घटस्थपञ्चगव्ये प्रक्षिप्य अग्नौ पक्वं कृत्वा सर्वं शोषयित्वा, यदा यदा दग्ध्वा भस्मरूपं भवति, तदा तस्मिन्नेव घटाग्नौ शतसंख्याकामाज्याहुतिं हुत्वा, सर्वं शोषयित्वा, तद्भस्मोद्धृत्य धृते उक्तफलं भवति ॥

प्रयोगान्तरम् –

अथ गुग्गुलुगुलिकायास्सहस्रमपि साष्टकं हुनेन्मन्त्री ।
त्रिदिनं चतुर्दिनं वा सकलोपद्रवनिवारणं भवति ॥

गुग्गुलु–गुग्गुलु-குங்கிலியக்கட்டி.

प्रयोगान्तरम् –

घनमञ्जर्यास्समिधामयुतं वा मन्त्रवित्तमो जुहुयात् ।
ज्वरभूतामयविस्मृत्यपस्मृतीः शमयितुं नियतचित्तः ॥

घनमञ्जरी=अपामार्ग ।

आज्याक्तैर्जुहुयात् श्रियै सरसिजैर्दूर्वाभिरप्यायुषे
मेधायै द्विजभूरुहैश्च कुसुमैश्श्वेतैस्तथा वाससे ।
शुद्धाज्यैः पशवेप्युदुम्बरभवैः पुत्राय चाश्वत्थजै-
रेकाब्दं विधिवत्सहस्रसुमितैरष्टोत्तरं मुक्तये ॥

अश्वत्थं तु सहस्रसंमितमेकाब्दं हुनेत् ॥

अथास्य यन्त्रमाह –

मध्ये तारं तदनु च मनुं वर्णशः कोणषट्के
बाह्ये चाङ्गं लिखतु कनके रूप्यके वाथ ताम्रे ।
पाषाणे वा विधिवदभिजप्याथ संस्थापितं तत्
चक्रं चोरग्रहरिपुभयध्वंसि रक्षाकरं च ॥

*अस्यार्थः – प्रणवं कर्णिकायां, सुदर्शनषडर्णान् कोणषट्के कोणयोरन्तरालेषु* षडङ्गानि विलिखेदिति ॥

*अथ मन्त्रत्रयं मिलित्वा जपविधानमुच्यते* —

*स्थानेहृषीकेशविदर्भितं च साष्टाक्षरं चाप्यभिजप्तमेतत् ।*
*रक्षां ग्रहादेस्सततं विधत्ते मन्त्रं सुगुप्तं च मनुत्रयेण ॥*

अस्यार्थः – प्रथमं श्रीमदष्टाक्षरमन्त्रे आदितो ह्यक्षरं, अथ सुदर्शनप्रथमाक्षरं, ततः गीतात्रिष्टुभः प्रथमद्वितीयाक्षरे, ततस्सुदर्शनमन्त्रे द्वितीयाक्षरं, ततस्त्रिष्टुभः तृतीयचतुर्थाक्षरे, ततस्सुदर्शनमन्त्रे तृतीयं, ततस्त्रिष्टुभः पञ्चमषष्ठे,

इत्येवं क्रमेण त्रिष्टुप्प्रथमपादान्त्याक्षरपर्यन्तं संयोज्य, अन्त्याक्षरस्यैकस्यान्ते अष्टाक्षरतृतीयचतुर्थाक्षरे पञ्चमषष्ठाक्षरे च युङ्क्त्वा, ततस्सुदर्शनाष्टाक्षरं त्रिष्टुब्द्वितीयपादाद्ये द्वयमित्येवं क्रमेण चतुष्पादेषु संयोज्य, एकवारं त्रिष्टुभो जपेत्। सुदर्शनमन्त्रस्य चतुर्वारम्। श्रीमदष्टाक्षरमन्त्रस्य द्विवारं चावृत्तिर्भवति। तत्र विदर्भशब्देन, सुदर्शनमन्त्रस्य योगः। साष्टाक्षरमित्युक्त्या अष्टाक्षरस्य योगः। विदर्भादिशब्दाभावात् अष्टाक्षरस्य त्रिष्टुभः पादानामाद्यन्तेषु द्विद्वि-क्रमेणाक्षराणां योजनं संप्रदायादागतम्। अक्षरद्वयद्वयान्तरान्तरा एकैकं संयुक्तं विदर्भितमित्युच्यते। स्थानेहृषीकेशविदर्भितमित्यादिश्लोकोक्तमर्थं व्याख्यानेन लिखित्वा, मन्त्रत एवेदानीं लिख्यते—

ओं न ओं स्थाने स हृषी ह केश स्रा तव र प्रकी हुं र्त्या फट् मो नाराय ओं जग (स) त्प्रहृ(ह)ष्यत्य स्रा नुर र ज्यते हुं च फं (फट्) णाय। ओं न ओं रक्षां स सिभी ह तानि स्रा दिशो र द्रव हुं न्ति फट् मो नाराय ओं सर्वे स नम ह स्यन्ति स्रा च सि र द्धसं हुं घाः फट् णाय ॥

एवं स्थानेहृषीकेशविदर्भितमित्यनेन श्लोकेनोक्तं मन्त्रत्रयम्॥ अस्य सुदर्शनोक्तवदङ्गादीनि। अनेन रक्षादौ जपः कार्य इति। पुनरनेन मन्त्र-त्रयेण सप्तकोष्ठयन्त्रविधानमस्ति। तदुच्यते—

अष्टाक्षरान्तरितपादचतुष्ककोष्ठं कोष्ठत्रयालिखितसाध्यसुदर्शनं च।
रेखाभिरप्युभयतः श्रुतिशः प्रबद्धं तत्सप्तकोष्ठमिति यन्त्रमिदं प्रसिद्धम्॥

भूर्जे वा क्षौमपट्टे तनुमसृणतरे कर्पटे वास्य यन्त्रं
मन्त्री सम्यक् लिखित्वा पुनरथ गुळिकीकृत्य लाक्षाभिवीतम्।
कृत्वा भस्मादिहोमप्रविहितघृतसंपातपातात्तशक्ति
जप्तं सम्यङ्निबध्यात् प्रतिशममुपयान्त्येव सर्वे विकाराः॥

अस्यार्थः—प्रथमं दक्षिणवामतः अष्टौ रेखा विलिख्य, तासु एकस्मिन्पार्श्वे आरभ्य पूर्वरेखाग्रं स्वस्य पञ्चमरेखाग्रेण अर्धचन्द्राकृत्या

नीत्वा बध्नीयात् । पुनस्ततोऽप्यधस्स्थितरेखाग्रमपि ततः पश्चमरेखाग्रेण बध्नीयात् । एवं सर्वरेखाग्रमपि संबध्नीयात् । पुनरितरपार्श्वमप्येवं बध्नीयात् । पुनः पूर्वकोष्ठे वैष्णवाष्टाक्षरमन्त्रस्य प्रथमाक्षरद्वयमुत्तरपार्श्वे विलिख्य, कोष्ठस्य मध्यप्रदेशे स्थाने हृषीकेश इत्यस्य प्रथमपादं पंक्तिशो विलिख्य, तद्दक्षिण-पार्श्वेऽपि अष्टाक्षरस्य तृतीयचतुर्थाक्षरे विलिखेत् । पुनः सर्वतः पश्चिमस्थित-कोष्ठेऽपि तथैव दक्षिणत आरभ्य पूर्वप्रातिलोम्येन क्रमः ॥

तत्र दक्षिणपार्श्वे अष्टाक्षरस्य पञ्चमषष्ठाक्षरे विलिख्य, ततः गीता-त्रिष्टुभः द्वितीयपादाक्षराणि विलिख्य, तदुत्तरपार्श्वेपि अष्टाक्षरस्य सप्तमाष्टाक्षरे विलिखेत् । पुनस्सर्वस्मात्प्राक् कोष्ठस्याधस्स्थितकोष्ठेऽपि पूर्ववदष्टाक्षरप्रथम-द्वितीयाक्षरे विलिख्य, गीतात्रिष्टुभः तृतीयपादं विलिख्य, अष्टाक्षरस्य तृतीयचतुर्थाक्षरे विलिख्य, पुनस्सर्वतः पश्चिमस्थितकोष्ठात्प्राक्कोष्ठेपि पूर्ववत् प्रथममष्टाक्षरस्य पञ्चमषष्ठाक्षरे विलिख्य, गीतात्रिष्टुभश्चतुर्थपादं विलिख्य, अष्टाक्षरस्य सप्तमाष्टाक्षरे विलिखेत् । पुनर्मध्यस्थितकोष्ठेषु त्रिषु पूर्वं प्राक्कोष्ठे सुदर्शनषडर्णांश्च साध्यनाम च वर्णशो विदर्भरूपेण विलिख्य, पुनस्तदधः कोष्ठद्वयेऽपि तथैव विलिखेत् ॥

अथवा एतेषु त्रिषु कोष्ठेषु प्रथमं पूर्वकोष्ठस्य उत्तरपार्श्वे सुदर्शनप्रथमा-क्षरं विलिख्य, पश्चात्साध्यनाम यावत्परिसमाप्ति विलिख्य, पुनस्सुदर्शनस्य द्वितीयाक्षरं विलिखेत् । अवशिष्टकोष्ठद्वयेपि अवशिष्टसुदर्शनाक्षराण्यपि एवमेव साध्यनामयुक्तानि विलिखेत् । अयं क्रमस्तु पूर्वकोष्ठलिखितन्यायानुसारात् समीचीनः पक्षः । एवं सप्तकोष्ठयन्त्रलेखनप्रकारः । एवं भूर्जपट्टे(पत्रे) वा क्षौमपट्टे वा मसृणतरकर्पटे वा लिखित्वा गुळिकीकृत्य लाक्षयाभिवीतं कृत्वा धृतं उक्तफलं भवति । भूर्जपत्रं-भुजपत्र । क्षौमं-श्वेतताम्र । मसृणतरकर्पटं-पिवळातापूता (कापूस)- மஞ்சள் பட்டு. ॥ लाक्षा-लाखा ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
एकविंशः पटलः ॥

## ॥ अथ द्वाविंशः पटलः ॥

अथ सुदर्शनकल्पोक्तप्रयोगविधिः --

अथ वक्ष्यामि रक्षार्थं दुर्गस्य नगरस्य च ।
ग्रामस्य चाथ राष्ट्रस्य रक्षां सौदर्शनीं पराम् ॥

यस्मिन्प्रदेशे रक्षा तु विधेया मन्त्रिणस्सदा ।
तत्रैवैनां प्रकुर्वीत ऋद्धिदां शौर्यवर्धिनीम् ॥

अष्टदिक्षु खनेत्कुण्डान्हस्तमात्रप्रमाणकान् ।
मध्ये च लक्षणोपेतान् चतुरश्रांस्त्रिमेखलान् ॥

कर्णिकायोनियुक्तांश्च शुभान्दृष्टिमनोहरान् ।
पूर्वादीशानपर्यन्तं दिक्षु कुण्डेषु च क्रमात् ॥

अग्निमाधाय विधिवत्परिस्तीर्य कुशांकुरैः ।
वटवृक्षोद्भवो वह्निरत्र ग्राह्यश्च सूरिभिः ॥

मन्त्री कुर्यात्क्रमेणैव संस्कारान्षोडश क्रमात् ।
वह्नेः पश्चात् घृतेनैव जुहुयादष्टकं शतम् ॥

प्रत्येकं च क्रमाद्ध्यात्वा अन्तेऽग्नौ विधिवत्पुनः ।
सौदर्शनं महाचक्रं ताम्रपट्टे लिखेत् शुभम् ॥

पुटितं मण्डलं वह्नेः लिखित्वा नाम कर्मवित् ।
तद्बहिर्वृत्तमालिख्य तद्रन्ध्रेष्वङ्गषट्ककम् ॥

तद्बहिः पद्ममालिख्य हेतिबीजं च तत्र वै ।

तत्र हेतिबीजमिति फट्कारः । अथवा चक्राद्यायुधाक्षराणि सबिन्दुकानी-त्यर्थः । तद्बहिष्षडरं (षडारं) विलिख्य, तद्बीजं तत्र विन्यसेत् । तद्बीजमिति रंकारः । तद्बहिः षोडशदळपद्मं संलिख्य, देशिकः तत्र तेषु दळेषु ओं नमो भगवते महासुदर्शनाय हुं फट् इत्यस्य वर्णान् विलिखेत् ॥

मध्ये जीवं प्रतिष्ठाप्य दिक्षु मध्ये खनेच्च तान् ।
समीकृत्य ततः कुण्डान् तदूर्ध्वेषु हुनेत्सदा ॥

अग्निमाधाय विधिना घृतेन जुहुयात्पुनः ।
पृथक् सहस्रमात्रं तु हुत्वा मध्ये च संयुतम् ॥

ब्राह्मणान्भोजयेन्मध्ये त्रितयं च यथेप्सितम् ।
सहस्रं त्रिदिनं वापि भक्तियुक्तः सदक्षिणम् ॥

पश्चात्समाविशेत्स्वामी नो चेत्तन्न शुभावहम् ।
भूतपूर्वमथान्यद्वा रक्षाहीने न संविशेत् ॥

यस्मिन्प्रदेशे रक्षेयं कृता भवति वृद्धिदा ।
तत्रैव वर्धते लक्ष्मीः शौर्यसत्ये च नित्यशः ॥

अरयश्च न बाधन्ते तं देशं वीक्षितुं क्षमाः ।
भूतप्रेतपिशाचाश्च परकृत्याश्च नित्यशः ॥

चोरव्याघ्रमृगाणां च बाधा तत्र न विद्यते ।
तस्माद्यत्नेन मतिमान् रक्षामेनां च कारयेत् ॥

आचार्याय ततो दद्यात् गोभूम्यादींश्च हाटकान् ।
आचार्यं तोषयेद्यत्नात् तस्मिन् तुष्टे शुभं भवेत् ॥

प्रयोगान्तरम्—

भूय एव प्रवक्ष्यामि क्षुद्रकर्मप्रतिक्रियाम् ।
भस्मसाध्यविधानेन साधितेनैव भस्मना ॥

ब्राह्मे मुहूर्तेऽमायां समुत्थायाचम्य वाग्यतः ।
सितपद्मस्य पत्रेण कपिलागोमयं शुचि ।
भूम्यामपतितं गृह्य शुचौ देशे विनिक्षिपेत् ॥

त्रिरात्रमेकरात्रं वा यावत् शुष्कं भवेच्छकृत् ।
तावन्निधाय तद्गृह्य कृमिकीटविवर्जितम् ॥

सौरवारे समादाय गोष्ठे देवालयेऽपि वा ।
शुचिना गोमयेनैव मण्डलं चतुरश्रकम् ॥

कृत्वा निधाय तन्मध्ये संस्पृशेद्वामपाणिना ।
अष्टोत्तरसहस्रेण मन्त्रयित्वाऽग्निना दहेत् ॥

सम्यग्दग्धं समादाय सितभस्म सुनिर्मलम् ।
आलोड्य वर्जयेद्दोषान् पूर्ववद्भस्म साधयेत् ॥

तेनापस्मारयक्षादीनपमृत्युं च नाशयेत् ।
इत्येवमाह भगवान् गार्ग्यो नाम महामुनिः ॥

प्रयोगान्तरमत्रैव पुनरेव विधीयते ।
पञ्चगव्यशकृद्दोषाक्रान्त्यपामार्गरोचनाः ॥

क्षीरवृक्षपलाशत्वग्बिल्वपद्मदळादिकम् ।
लक्ष्मीदेवीकुशादूर्वासरसातिलराजिकाः ॥

चन्दनं कुङ्कुमं कुष्ठं वचार्कतुळसीपुरम् ।

घटस्थैरीदृशैर्द्रव्यैः साधितं भस्ममन्त्रितम् ॥

क्षुद्रोगश्रमपापघ्नं रक्षाकीर्त्यायुषः परम् ।
गोबालगर्भिणीग्रस्तव्याध्यादिषु च शस्यते ॥

तत्र दोपेति-हळवुण्ड மஞ்சள் । क्रान्ति-विष्णुक्रान्ति । पुरं-द्रव्यविशेषः குங்கிலியம் सरसा-दूर्वा-(अशुष्कदूर्वा) चोन्यादूर्वा । इतरत्पूर्वोक्तभस्मविधानस्थले स्पष्टार्थम् ।

एवमेवापरं कल्पं पुनरत्र विधीयते ।

ब्रह्मक्षीरतरुत्वचं च सरसादूर्वावचारोचना-
लक्ष्मीचन्दनविल्वकुङ्कुमकुशापामार्गराजीतिलान् ।
देवीगुग्गुलुपद्मकुष्ठतुलसीक्रान्तानिशागोमया-
नेकीकृत्य घटेन गव्यमथितं भस्मात्मरक्षाप्रदम् ॥

आत्मनश्चात्मनाथानां रक्षणार्थमयं विधिः ।
एवमादीनि मेध्यानि नवभाण्डे विनिक्षिपेत् ॥

प्रणवेनाग्निमाधाय तमभ्यर्च्य यथाविधि ।
अग्नौ निधाय तद्भाण्डं क्षीरकाष्ठैश्च निर्दहेत् ॥

सर्वमौषधजातं तद्यावद्भस्म भवेद्बुधः ।
मृतभस्मनि कर्पूरचूर्णं तत्र विनिक्षिपेत् ॥

सहस्रमयुतं वापि स्पृशंस्तत्र जपेद्बुधः ।
सर्वशक्तिकरं ह्येतत्सर्वरक्षाकरं परम् ॥

श्रीकरं सुखदं वश्यं सर्वरोगनिवारणम् ।
सर्वकृत्याप्रशमनं सर्वपापविनाशनम् ॥

यस्मिन्देशे स्थितं भस्म स देशो निरुपद्रवः ।
धनधान्यसमृद्धिश्च सर्वदा सुखदं भवेत् ॥

यो नित्यं धारयेदेतत्सर्वत्र विजयी भवेत् ।
सर्वमायुरवाप्नोति पापेभ्योपि विमुच्यते ॥

तत्र ब्रह्मतरुः – पलाशः । इतरत् पूर्वोक्तस्थले स्पष्टार्थम् । प्रयोगान्तरम्–

कृष्णाष्टम्यां रवौ मेषसिंहचापगते खनेत् ।
क्षेत्रमध्येऽभिजित्काले शिलां श्वेतामुदङ्मुखः ॥

गव्ये निक्षिप्य जप्त्वा तां क्षेत्रद्रोहं विनश्यति ।

अथ सुदर्शनविधाने स्थाने हृषीकेशेति प्रयोगप्रसङ्गात् स्थाने हृषीकेशेति गीतात्रिष्टुप्मन्त्रोपि लिख्यते –

अर्जुन ऋषिः त्रिष्टुप्छन्दः । विश्वरूपधरो विष्णुर्देवता । मन्त्रपादैः व्यस्तैस्समस्तैश्च पञ्चाङ्गानि ॥

अग्नीषोमात्मकमरिगदाशार्ङ्गखड्गैस्सशङ्ख-
स्फुद्बाहुं हलमुसलशूलैस्सदण्डैस्सकुन्तैः ।
शक्त्या पाशाङ्कुशकुलिशटङ्काग्निभिश्चार्कवह्नि-
द्योतद्वक्त्राङ्घ्रिकरसरसिजं तप्तकार्तस्वराभम् ॥

विष्णुं भास्वत्किरीटं मणिकनकतटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासिदिव्याङ्गरागम् ।
विश्वाकाशावकाशं विततमयुतादित्यनीकाशमुद्य-
द्बाहुग्रव्यग्रनानायुधनिकरकरं विश्वरूपं नमामि ॥

स्थाने हृषीकेशेत्यादिगीतात्रिष्टुप्मन्त्रः ॥ रक्षाप्रधानोयं मन्त्रः ॥

अथ सुदर्शनयन्त्रे चोरग्रहरिपुभयध्वंसिचोरनिवृत्तिफलोक्तिप्रसङ्गात् चोरनिवृत्त्यादिप्रयोजनकः कार्तवीर्यमन्त्रोपि मन्त्रसारोक्तो योग्यतावशादत्र लिख्यते —

दत्तात्रेय ऋषिः । अनुष्टुप् छन्दः । श्रीकार्तवीर्यार्जुनो देवता । कृतवीर्यसुतः हृत् । राजा शिरः । सहस्रभुजमण्डनः शिखा । अवतीर्णः कवचम् । हरिस्साक्षात् नेत्रम् । पालयेत्सकलं मम अस्त्रम् ॥ ध्यानम् —

बाहासाहस्रराजद्बहुळतरशिखोद्दामकल्पान्तवह्नि-
क्रूराकारप्रदीप्तांकुशकलितमहाध्वान्तदन्तावळेन्द्रम् ।
क्रूरं क्रूराट्टहासाकुलविधृतमृगस्तेनवेताळभूत-
व्याळाद्यं स्यन्दनस्थं विबुधमुनिनुतं कार्तवीर्यं नमामि ॥

कृतवीर्यसुतो राजा सहस्रभुजमण्डनः ।
अवतीर्णो हरिस्साक्षात्पालयेत्सकलं मम ॥

इति द्वात्रिंशदर्णो मन्त्रः ॥ नष्टद्रव्याकर्षणरक्षाप्रधानोयं मन्त्रः ।

ध्यानमात्रेण रक्षा स्यात्सुमहत्सु भयेष्वपि ।
चोरैर्हृतं तथा द्रव्यं सद्यो याति प्रकाशताम् ॥

लक्षजपः । रक्तकमलैः त्रिमधुरसिक्तैः दशांशं पुरश्चरणाहोमः । अ
पूजा —

वैष्णवपीठे समावाह्य समर्चयेत् । प्रथमं पुरतो दत्तात्रेयं यजेत् । अस्य वामपार्श्वे गर्गं यजेत् । पुनरङ्गैः प्रथमावृतिः । ऋषिभ्यो नमः । अप्सरोभ्यो नमः । सिद्धेभ्यो नमः । गन्धर्वेभ्यो नमः । चारणेभ्यो नमः । विद्याधरेभ्यो नमः । किंपुरुषेभ्यो नमः । किन्नरेभ्यो नमः । ८ इति द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी । अथ प्रयोगः —

सहस्रममृताकाण्डैः जुहुयात्क्षीरलोळितैः ।

आरोग्यायायुषे कान्त्यै धनधान्यसमृद्धये ॥

अमृता-गुळवेळि ॥ प्रयोगान्तरम्—

अपामार्गसमिद्भिस्तु महिषाज्यपरिप्लुतैः ।
नष्टद्रव्यस्य लाभाय सहस्रं जुहुयान्निशि ॥

अपामार्गः-आघाडा । प्रयोगान्तरम्—

घृतलोलितैर्वटेध्मैः सहस्रसंख्यं जुहोतु संपूज्य ।
शत्रुक्षयाय लक्ष्म्यै तस्करनाशाय सर्वरक्षायै ॥

प्रयोगान्तरम्—

विभीतकद्रुमेध्मैश्च माहिषाज्यविलोलितैः ।
तस्करादिविनाशाय हुनेदष्टोत्तरं शतम् ॥

विभीतक-ताडी । प्रयोगान्तरम्—

दोर्भिः पञ्चशतैरपि युगपद्बाणान् क्षिपन्तमनुचिन्त्य ।
प्रजपेन्मन्त्रं मन्त्री रिपुचोराद्यान् क्षणेन नाशयितुम् ॥

अस्य यन्त्रम्—

षट्कोणकर्णिकामध्ये क्ष्रौंबीजं साध्यसंयुतम् ।
कोणेषु चक्रमन्त्रस्य क्रमेणैकैकमक्षरम् ॥

आचक्राद्यङ्गमन्त्रांश्च कोणसन्धिषु तद्बहिः ।
केसरेष्वष्टपत्रस्य स्वरयुग्मं दळोदरे ॥

चतुरश्चतुरो वर्णान् मन्त्रस्यास्य यथाक्रमम् ।
आवेष्टय व्यञ्जनार्णैश्च भूपुराश्रिषु तद्बहिः ॥

क्ष्रौंबीजमालिखेदेवं यन्त्रमेतदुदीरितम् ।

तत्र चक्रमन्त्रस्येति, सुदर्शनमन्त्रस्येत्यर्थः । आचक्राद्यङ्गमिति सुदर्शनस्याङ्गमित्यर्थः ॥

अथ कार्तवीर्यार्जुनमन्त्रान्तरम् —

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
तस्य संस्मरणादेव हृतं नष्टं च लभ्यते ॥

इति मन्त्रः । नष्टद्रव्याकर्षणप्रधानोयं मन्त्रः॥ कार्तवीर्यार्जुनो हृत् । नाम राजा शिरः । बाहुसहस्रवान् शिखा । तस्य संस्मरणादेव कवचम् । हृतं नष्टं च नेत्रम् । लभ्यते अस्त्रम् । ऋष्यादिध्यानजपपूजादि पूर्ववत् ॥

अथ प्रयोगः —

चोरैर्हृतस्य द्रव्यस्य स्थानं स्पृष्ट्वा जपेन्मनुम् ।
सद्यः प्रकाशतां याति त्रिदिनाद्वशमेति च ॥

नष्टद्रव्यस्य सिद्धिस्स्याज्जपमात्रेण तत्क्षणात् ।
चोरैर्हृतस्य द्रव्यस्य विनष्टस्याथवा शतम् ॥

तल्लाभाय जपेदेवं कार्तवीर्यं मनुं स्मरन् ।

अथ कल्पान्तरोक्तः कार्तवीर्यमन्त्रोपि प्रसङ्गाल्लिख्यते —

दत्तात्रेय ऋषिः । अनुष्टुप् छन्दः । कार्तवीर्यार्जुनो देवता । कार्तवीर्यार्जुनो नाम हृत् । राजा बाहुसहस्रभृत् शिरः । तस्य संस्मरणादेव शिखा । हृतं नष्टं च लभ्यते कवचम् । सर्वैरस्त्रम् । ध्यानम् —

*सहस्रबाहुं सशरं सचापं रक्ताम्बरं रत्नकिरीटकुण्डलम् ।

* अस्मिन् श्लोके पूर्वार्धोत्तरार्धयोः छन्दोवैलक्षण्यमेव दृश्यते ।

चोरारिदुष्टभयनाशनमिष्टदं तं ध्यायेन्महाबलविजृंभितकार्तवीर्यम् ॥

ओं कं कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् । ह्रीं तस्य संस्मरणादेव हृतं नष्टं च लभ्यते क्रीं सहस्रार हुंफट् क्रौं ह्रीं ओं इति मन्त्रः ॥

अनेन मन्त्रेण नष्टद्रव्यशेषं वा तदवस्थितस्थलं वा स्पृष्ट्वा जपेत् । तस्मादेतद्द्रव्यं च तच्चोरश्च लभ्यते । द्रव्ये नष्टे सति तदानीमारभ्य नवघटिकायाः पूर्वमेवारम्भणीयो जपः । नो चेन्न फलतीति शिष्टोक्तिः । तद्यन्त्रमपि लिखित्वा तस्य पुरतस्स्थित्वा जप्ते नष्टद्रव्यसिद्धिः ॥

अथ कार्तवीर्यार्जुनस्य मन्त्रान्तराणि लिख्यन्ते —

दत्तात्रेय ऋषिः । विराट् छन्दः । कार्तवीर्यार्जुनो देवता । ध्रों बीजम् । नमः शक्तिः । सर्वार्थसिध्यर्थे जपे विनियोगः । छ्रां हृत् । छ्रीं शिरः । छ्रूं शिखा । छ्रैं कवचम् । इत्याद्यङ्गानि । ओं ध्रों श्रीकार्तवीर्यार्जुनाय सर्वार्थसिद्धिं नमः । चोरस्तम्भनकरः ॥

दत्तात्रेय ऋषिः । त्रिष्टुप् छन्दः । श्रीकार्तवीर्यार्जुनो देवता । ध्रों बीजम् । श्रीं शक्तिः । वसुहारिचोरस्तम्भनार्थे विनियोगः । छ्रां हृत् । छ्रीं शिरः । इत्याद्यङ्गानि । ओं छ्रों छ्रीं कार्तवीर्यार्जुनाय वसुहारिचोरान् स्तम्भय स्तम्भय नमः ॥ एतयोर्मन्त्रयोर्ध्यानम् ॥

अव्यात्सर्वभयात्प्रभाकरनिभः प्रद्योतनोद्योतित-
स्वर्णस्रक्परिवीतकन्धरधरो रक्तांशुकोष्णीषवान् ।
नानारत्नविभूषितः करसहस्रार्धात्तचापाशनो
बाणात्तार्धसहस्रबाहुरनिशं भूवल्लभो नः प्रभुः ॥

लक्षजपः ॥ अस्य यन्त्रम् —

आशापत्रे सरोजे दळमनु विलसत्तस्य गायत्रिवर्णान्
तिस्रो भूस्वार्णवृत्तं सकलसुखकरं यन्त्रमानुष्टुभाख्यम् ।

अर्णं मातृकार्णम् । कार्तवीर्याय विद्महे सहस्रकराय धीमहि । तन्नोर्जुनः प्रचोदयात् ॥

सर्वरोगप्रयोगेषु जप्तव्यैषा हितार्थिना ।
गायत्रीजपमात्रेण मन्त्रवीर्यं प्रसाधयेत् ॥

आनुष्टुभो जपादेवि नष्टद्रव्यं च सिध्यति ।
मृताश्चोरा भविष्यन्ति तत्तथा न तदन्यथा ॥

तद्यन्त्रस्थापनान्नृणां सर्वरक्षा प्रजायते ।

ओंह्रोंछ्रींक्लींछ्रूंआंह्रींक्रोंहुंफट् श्रींऐंक्ष्मांकार्तवीर्यार्जुनाय सर्वार्थसिद्धिं नमः ॥
* इत्यानुष्टुभो मन्त्रः ॥

अथ कार्तवीर्यार्जुनमालामन्त्रस्य(न्त्रः) --

दत्तात्रेय ऋषिः । गायत्री छन्दः । कार्तवीर्यार्जुनो देवता । दत्तात्रेयप्रियतमाय हृत् । माहिष्मतीनाथाय शिरः । रेवानदीजलक्रीडातृप्ताय शिखा । हेहयाधिपतये कवचम् सहस्रबाहवे अस्त्रम् ॥

ध्यानम् —

दोर्दण्डेषु सहस्रसम्मिततरेष्वेतेष्वजस्रं लस-
त्कोदण्डैश्च शरैरुदग्रनिशितैरुद्यद्विवस्वत्प्रभः ।
ब्रह्माण्डं परिपूरयन्स्वनिनदैर्गण्डद्वयान्दोलित-
द्योतत्कुण्डलमण्डितो विजयते श्रीकार्तवीर्यो विभुः ॥

* इति सप्तविंशत्यर्णो मन्त्र इति युक्तः पाठः ।

ओं नमो भगवते कार्तवीर्यार्जुनाय हैहयाधिपतये सहस्रकवचाय सहस्रकरसदृशाय सर्वदुष्टान्तकाय सर्वशिष्टेष्टाय सर्वत्रोदधेरागन्तुकान् अस्मद्वसुलुंपकान् चोरसमूहान् स्वकरसहस्रैर्निवारय निवारय *रुन्ध रुन्ध पाशसहस्रैर्बन्ध बन्ध अंकुशसहस्रैराकुण्डाकुण्ड स्वचापोद्गतबाणसहस्रैर्भिन्त भिन्त स्वहस्तोद्गतखड्गसहस्रैश्छिन्त छिन्त स्वहस्तोद्गतमुसलसहस्रैर्मर्दय मर्दय स्वशङ्खोद्गतनादसहस्रैर्भीषय भीषय स्वहस्तोद्गतचक्रसहस्रैः कृन्तय कृन्तय त्रासय त्रासय गर्जय गर्जय आकर्षयाकर्षय मोहय मोहय मारय मारय उन्मादयोन्मादय तापय तापय विदारय विदारय स्तम्भय स्तम्भय जृम्भय जृम्भय मारय मारय वशीकुरु वशीकुरु उच्चाटयोच्चाटय विनाशय विनाशय दत्तात्रेय श्रीपादप्रियतम कार्तवीर्यार्जुन सर्वत्रोदधेरागन्तुकामान् अस्मद्वसुलुम्पकान् चोरसमूहान् समग्रमुन्मूलयोन्मूलय हुंफट् स्वाहा ॥

अनेन मन्त्रराजेन सर्वकर्माणि साधयेत् ।
त्रिसहस्रं जपः प्रोक्तः (मालामन्त्रस्य सिद्धये) ॥

मालामन्त्रजपाच्चोरान् मारीं चापि विशेषतः ।
क्षपयेत् क्षोभयेच्चैवोच्चटयेन्मारयेत्तथा ॥

वशयेत्तत्क्षणादेव त्रैलोक्यमपि मन्त्रवित् ।

अथ श्रीकराष्टाक्षरविधानमुच्यते —

वामदेव ऋषिः । पङ्क्तिश्छन्दः । हरिर्देवता । भीषय भीषय हुं हृत् । त्रासय त्रासय हुं शिरः । प्रमर्दय प्रमर्दय हुं शिखा । प्रध्वंसय प्रध्वंसय हुं कवचम् । रक्ष रक्ष हुं अस्त्रम् ॥ अथाक्षरन्यासः —

---

* रुन्धरुन्धेत्यत्र रोधय रोधयेति, बन्धबन्धेत्यत्र बन्धय बन्धयेति, आकुण्डाकुण्डेत्यत्र आकुण्ठयाकुण्ठयेति, भिन्त भिन्तेत्यत्र भिन्धि भिन्धीति च पाठो युक्तस्स्यादिति भाति ॥

मूर्धाक्षिकण्ठहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु स्वदेहे ।
विप्रादिकान् मुखकरोरुपदेषु वर्णान्
चक्रादिकानपि करेषु ततस्तदस्त्रात् ॥

अस्यार्थः—पूर्वं मूर्धाक्षीत्याद्युक्तस्थानेषु अष्टौ वर्णान् क्रमेण न्यस्त्वा, पुनर्विप्रादिकानित्यस्यायमर्थः । उं ब्राह्मणेभ्यो नमः । तिं क्षत्रियेभ्यो नमः । ष्ठं वैश्येभ्यो नमः । श्रीं शूद्रेभ्यो नमः । इति मुखकरोरुपदेषु, कं चक्राय नमः । रं शङ्खाय नमः । स्वां गदायै नमः । हां पद्माय नमः । इति चतुर्भुजमात्मानं ध्यात्वा तत्तत्करेषु न्यसेदिति ॥

दुग्धाब्धिद्वीपवर्यप्रविलसितसरोद्यानकल्पद्रुमाधो
भद्राम्भोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः ।
दोर्भिर्बिभ्रद्रथाङ्गं सदरमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रियै वो मुकुन्दः ॥

उच्चिष्ठ श्रीकर स्वाहा इति मन्त्रः । ऐश्वर्यप्रधानोयं मन्त्रः । अष्टलक्षजपः ।

श्रीदुग्धवृक्षोत्थसमिद्भिरब्जैः साज्येन दौग्धेन च सर्पिषा च ।

साज्येन दौग्धेनेति आज्यसिक्तेन क्षीरान्नेनेत्यर्थः । श्रीवृक्षं-बिल्वम् । एतैरष्टद्रव्यैर्दशांशं पुरश्चरणाहोमः ।

अथ पूजाविधिः—

वैष्णवपीठे समावाह्य समर्चयेत् । श्रियै० मत्यै० धृत्यै० कान्त्यै० इति दिक्पत्रेषु, वासुदेवाय० सङ्कर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० इति कोणगेषु पत्रेषु समर्चयेत् । देवस्य वामदक्षिणयोः पार्श्वयोः शङ्खनिधये० पुष्प(पद्म)निधये० इति, विष्वक्सेनं च देवस्य वामपार्श्वे । पुनरिन्द्रादीन् संयजेत् ॥

अथ प्रयोगः --

दूर्वां घृतप्रसिक्तां जुहुयादयुतं नरस्तु हुतशिष्टैः ।
आज्यैश्चरुमुपयुञ्ज्याद्द्याद्गुरवे च दक्षिणां शक्त्या ॥

परिभोजयेच्च विप्रान् तेषु दिनेषु स्वशक्तितो भक्त्या ।
अपमृत्युरोगपापान् विजित्य स तु दीर्घमायुराप्नोति ॥

दूर्वाभिराज्यैश्चरुणा च हुत्वा तत्संपातमुपयुञ्ज्यादित्यर्थः ॥

प्रयोगान्तरम् —

अनुदिनमादित्यमुखः प्रजपेदूर्ध्वीकृतस्वबाहुयुगः ।
तस्य गृहेऽन्नसमृद्धिश्चिराय सञ्जायते सुपुष्टतरा ॥

अथ श्रीकराद्याक्षरमन्त्रप्रसङ्गात् श्रीकरलक्ष्मीनारायणमन्त्रोपि लिख्यते-

ब्रह्मा ऋषिः । गायत्री छन्दः । लक्ष्मीनारायणो देवता । श्रामित्यादि षडङ्गम् । अथवा, ओं लं पुण्डरीकाक्षपरमेश्वराय नमः हृत् । ओं क्ष्मीं सकलसुखसौभाग्यनिधये शिरः । ओं नां वाञ्छितसिद्धिप्रदाय नमः शिखा । ओं रां अखिलदुःखशमनाय नमः कवचम् । ओं यं आनन्दसुन्दरलक्ष्मीपतये नमः नेत्रम् । ओं नां लक्ष्मीनारायणाय नमः अस्त्रम् । ध्यानम् —

लक्ष्मीचारुकुचद्वन्द्वकुंकुमाङ्कितवक्षसे ।
नमो लक्ष्मीपते तुभ्यं सर्वाभीष्टप्रदायिने ॥

ध्यानान्तरम् —

हस्तैर्बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्यां
पश्चादर्शौ कनककलशं मेघविद्युद्विलासम् ।

वामोत्तुङ्गस्तनमविरलाकल्पमाश्लेषमोहात्
एकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्योः ॥

ओं ऐं श्रीं ह्रीं क्लीं लक्ष्मीनारायणाय नमः इति चतुर्दशाक्षरो मन्त्रः । ऐश्वर्यप्रधानोयं मन्त्रः ॥

अथ वराहमन्त्रविधानमुच्यते —

भार्गव ऋषिः । अनुष्टुप छन्दः । श्रीवराहो देवता । हुं बीजम् । स्वाहा शक्तिः । एकशृङ्गाय हृत् । व्योमोल्काय शिरः । तेजोधिपतये शिखा । विश्वरूपाय कवचम् । महादंष्ट्राय अस्त्रम् । अथवा मन्त्रवर्णैरेवाङ्गानि कुर्यात् । ओं नमो भगवते हृन् । वराहरूपाय शिरः । भूर्भुवस्स्वःपतये शिखा । भूपतित्वं मे कवचम् । देहि मे दापय स्वाहा अस्त्रम् । ध्यानम् —

जानोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानुनाभेः
कण्ठादानाभिवह्निप्रभमथ शिरसश्चागलं नीलवर्णम् ।
मौळेर्व्योमाभमाङ्कं करलसदरिशङ्खासिखेटं गदाख्या-
शक्तीष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ॥

ध्यानान्तरम् —

सजलाम्बुवाहनिभमुद्यतदोःपरिघं धराधरसमानतनुम् ।
सितदंष्ट्रिकाधृतभुवं त्वथवा प्रविचिन्तयेत्सपदि कोलममुम् ॥

ध्यानान्तरम् —

हेमप्रख्यं पार्थिवे मण्डले वा नीहाराभं नीरजेऽग्नेस्तदाभम् ।
वायोः कृष्णं द्युप्रभं वा दिविस्थं क्रोडं व्याप्तं सत्यसंस्थं यजेद्वा ॥

अस्यार्थः — पार्थिवमण्डलं चतुरश्रम् । तस्मिन् वराहमूर्तिं स्वर्णप्रभारूपं वा ध्यायेत् । आप्ये अर्धचन्द्राकारे हिमाभं वा वराहं ध्यायेत् । अग्नेर्मण्डले

त्रिकोणे अग्न्याभं वा ध्यायेत् । वायोर्मण्डले षट्कोणे कृष्णवर्णं वा ध्यायेत् । आकाशमण्डले वृत्ताकारे धूम्रभं वा ध्यायेत् ॥ इति ॥

ओं नमो भगवते वराहरूपाय भूर्भुवस्स्वःपतये भूपतित्वं मे देहि * ददापय स्वाहा । इति मन्त्रः । लक्षजपः । त्रिमधुरसिक्तैः पद्मैः दशांशं पुरश्चरणाहोमः । घृतमधुगुडमिश्रं त्रिमधुरसंज्ञं भवति ॥

ध्यानादपि धनसिद्धिः मन्त्रजपाच्चाधनो भवेत्सधनः ।
जपहुतपूजाविधिभिः मंक्षु नरो धनधरेन्द्रिरावान्स्यात् ॥

अथ पूजाविधिः —

अष्टपत्रमथ पद्ममुद्धरेत्कर्णिकं विधिवदारचय्य च ।
मण्डले रविसहस्रसंनिभं सूकरं यजतु तत्र सिद्धये ॥

अस्यार्थः — प्रथममष्टपत्रं पद्मं, तत्कर्णिकामध्ये हूं इति, तदन्तस्साध्यनाम विलिखेत् । केसरेषु स्वरद्वन्द्वं, दळमध्ये वराहमन्त्रस्य चतुरश्चतुरो वर्णान् अन्त्ये पञ्च च, तद्बहिः कादिवर्णैर्वेष्टयेत् । तद्बहिश्चतुरश्रं तत्कोणेषु हूं इति वराहबीजम् । हकारषष्ठस्वरबिन्दुभिः वाराहं बीजम् । अस्मिन्मण्डले वैष्णवपीठं संपूज्य तत्र समावाह्य सूकरमूर्तिं यजेत् । प्रथमं चतुर्भिरङ्गैः चतसृषु दिक्षु अस्त्रैर्विदिक्षु च, ऊर्ध्वमधश्च संयजेत् । इति प्रथमावृतिः । चक्राय० शङ्खाय० कृपाणाय० खेटाय० गदायै० शक्त्यै० वराय० अभयाय० ८ इति द्वितीयावृतिः । इन्द्रादिभिस्तृतीया ॥

पुनः कोलस्यावयवस्थितान् देवान्परिपूजयेत् । दंष्ट्रायां तु सशैलवननगराण्यापगायै श्रीवसुधायै नमः इति पूजयेत् । पुनर्देवस्य हुंकृतौ वागीश्वर्यै

* ददधातोरपि अनिटि सेटि वा ददापय इति रूपसिद्धिः चिन्तनीया । अतः देहि दापय इत्येव पाठो युक्त इति भाति ॥

नमः इति पूजयेत् । श्वसिते अनिलाय नम इति, रवये शशिने इति दक्षिण-वामयोर्बाह्वोः, अष्टभ्यो वसुभ्यो नम इति कुक्षौ ॥ तत्रतु,

धरःध्रुवस्तथा सोम आपोग्निर्वायुरेव च ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ समीरिताः ॥

पूर्वदिग्भ्यो नम इति श्रुतिपथे । अश्विभ्यां नम इति दृशोः । ब्राह्मणेभ्यो नम इति पादयोः । हरये नम इति हृदये । शङ्कराय नम इति मुखे । एवं संपूजयेद्वराहम् ॥

अथ फलविशेषावाप्त्यर्थं ध्यानविशेष उच्यते —

ध्यातस्सन्भूगृहेसौ ध्रुवमतुलतरां वारुणे शान्तिमुच्चै-
राग्नेये वश्यजूर्त्यादिकमनिलपुरस्थोयमुच्चाटनादीन् ।
रक्षां व्योम्नोरिभूतग्रहविषदुरितेभ्योऽनिलाग्न्योस्तु पीडां
युध्दे वह्नीरयोर्भे जयमपि सुतरां संविधत्ते वराहः ॥

अस्यार्थः — भूगृहे ध्यातो वराहो ध्रुवं दद्यात् । वारुणमण्डले ध्यातः शान्तिं दद्यात् । आग्नेयमण्डले वश्यजूर्त्यादिकं, अनिलपुरस्थो ध्यातः उच्चाटनादिफलं दद्यात् । व्योममण्डले ध्यातः अरिग्रहविषदुरितेभ्यो रक्षां दद्यात् । अनिलाग्न्योश्च पीडां दद्यात् । अनिलाग्निमण्डलषट्कोणबहिस्त्रिकोणवह्नीरयोर्युद्धे विजयं दद्यात् । वह्नीरयोर्मण्डलं त्रिकोणबहिष्षट्कोणम् । तत्र, जूर्तिरिति रोगः ॥

अथ प्रयोगान्तरम् —

हरिस्थेऽर्केष्टम्यामथ सितरुचौ कोलवपुषः
सितां गन्धैस्सर्वैर्युजमयुतजप्तामपि शिलाम् ।
उदग्वक्त्रो मन्त्री मनुजपरतः स्थापयतु ता-
मयं नः क्षेत्रेषु द्रुतमरिनिरोधं शमयति ॥

सितां गन्धैरिति, दशपलमितां बिल्वादिपत्रस्थामित्यपि योज्यम् । अस्यार्थः -- सिद्धमासे, शुक्लाष्टम्यां शुक्लां शिलामादाय कोलवपुषं स्वात्मानं ध्यात्वा, पञ्चगन्धैर्युतामयुतं वराहमन्त्रेण तच्छिलां जप्त्वा उदग्वक्त्रो मन्त्री मनुं जप्त्वा स्थापयेत् क्षेत्रेषु । शत्रुणा क्षेत्रविरोधो न क्रियते ॥

प्रयोगान्तरम् —

भौमे वारेऽथ भानूदयमनु जपवान्संगृहीत्वा मृदंशं
कालात्मा वैरिरुद्धादपि च कुतलतस्तं च कृत्वा गुणांशम् ।
एकं जातौ विलिप्यात्पुनरपरतरं पानपात्रे तथान्यत्
तोये तस्मिन्सदुग्धे प्रतिपचतु हविस्संस्कृते हव्यवाहे ॥

आराध्य चाष्टोर्ध्वशतप्रमाणं साज्येन मन्त्री हविषाऽथ तेन ।
सप्तारवारं जुहुयाद्यथावत् क्षेत्रोत्थितापत्प्रशमं प्रयाति ॥

अस्यार्थः — अङ्गारकवारे सूर्योदयादनन्तरं शत्रुनिरुद्धक्षेत्राद्वा कुक्षेत्राद्वा वराहमन्त्रं जपन् मृदं गृहीत्वा स्वात्मानं कोलरूपं ध्यात्वा, तां मृदं त्रिधा विभज्य एकांशं जातौ पाकस्थले विलिम्प्यात् । अपरांशं पाकपात्रे विलिम्प्यात् । तृतीयांशं तोये विनियोजयेत् । तेन तोयेन सदुग्धेन हविः संस्कृतेऽग्नौ पचतु । तेन हविषा आज्ययुक्तेन अष्टोर्ध्वशतप्रमाणेन सप्तभौमवारं जुहुयात् । क्षेत्रोत्थितापत्प्रशमं शत्रुनिरुद्धक्षेत्रे तच्छान्तिं च प्राप्स्यतीत्यर्थः ॥

प्रयोगान्तरम् —

भृगुवारे च सुक्षेत्रः संगृह्य मृदं हविस्समापाद्य ।
जुहुयादीरितविधिना बलिमपि दद्यान्महीविरोधेषु ॥

हुतक्रियैवं दिवसैश्च सप्तभिः प्रणाशयेद्भूमिविवादसङ्कटम् ।
परेतवेताळपिशाचडाकिनीसमुत्थितां वा विकृतिं विधिस्स्वयम् ॥

अस्यार्थः — शुक्रवारे उदयकाले साध्यक्षेत्रात् मृदं संगृह्य पूर्ववत् तद्विलोलितं हविः सम्पाद्य, वराहमन्त्रेण जुहुयात् । शत्रुभिः भूमिवादपीडा न जायते । अनेनैव पिशाचादिनिवृत्तिश्च ॥ प्रयोगान्तरम् —

विलोड्य तामेव मृदं च दुग्धे हुनेत् घृते वाऽप्ययुतं सहस्रम् ।
द्विमण्डलादेव मही महार्घ्या स्यान्मन्त्रिणोऽस्यैव तु निस्सपत्ना ॥

अस्यार्थः — साध्यक्षेत्रात् मृदं गृहीत्वा दुग्धे वा घृते वा विलोड्य तेनाष्टोत्तरसहस्रं जुहुयात् । एवं मण्डलद्वयं हुनेत् । तेन साध्यमही महार्घ्या निस्सपत्ना च अस्यैव साधकस्य वशीभवति ॥

प्रयोगान्तरम् —

नृपतरुसमिधामयुतं मन्त्रेणानेन यो हुनेन्मन्त्री ।
गृहयात्राऽस्य न सीदेत् क्षेत्रादिकमपि च वर्धयेत् क्रमशः ॥

नृपतरु-கொன்றை.

प्रयोगान्तरम् —

अष्टोर्ध्वशतं मन्त्री दिनशो यो वा जुहोति शालीभिः ।
स तु वत्सरेण रुचिरं विराजते व्रीहिपुञ्जपूर्णगृहः ॥

शाली-धान्यविशेषः ॥

प्रयोगान्तरम् —

मन्त्रेणानेन सर्पिर्जुहुत दशशतं मण्डलात्स्वर्णसिद्धिः
स्याद्रक्तेनाञ्जलिन्या अपि कुसुमसहस्रेण वा वाससां च ।

अञ्जलिनी-ஆளைவணங்கி. स्वादु-त्रिमधुरम् ॥

लाजानां कन्यकाया अपि च मधुमतां होमतो वाञ्छितायाः
सिद्धीरक्तोत्पलानामपि मधुरयुजां स्याद्धुताच्छ्रीस्समग्रा ॥ इति ॥

तत्र मधुरयुजां मधुसिक्तानामित्यर्थः ॥ केवललाजानां होमतः कन्यकायाः सिद्धिः । रक्तोत्पलं पुष्पविशेषः । अयमपि होमः सहस्रसंख्याकः ॥

अथ वराहयन्त्रविधानमुच्यते —

हूं इति वराहबीजम् ॥

तारेऽमुमपि लिखित्वा तद्बाह्येऽनलपुरं समापुटितम् ।
तद्बाह्यके चतुर्दलमब्जं स्यात्तद्बहिस्तथाष्टदळम् ॥

बाह्ये षोडशपत्रं मण्डलमाखण्डलीयमपि बाह्ये ।
सूकरबीजे साध्यक्षेत्राख्यां चक्रमन्त्रमश्रिषु च ॥

रन्ध्रेष्वङ्गमनूनपि दलमूलेऽष्टार्णकेसराणि लिखेत् ।
अष्टावष्टौ दलमनु सूकरमन्त्रस्य चाक्षरान् क्रमशः ॥

अन्त्येऽवशिष्टमक्षरमथाष्टपत्रे स्वराढ्यकिञ्जल्के ।
वर्णांश्चतुरश्चतुरस्तथाष्टमे पञ्च चालिखेत्पत्रे ॥

व्यञ्जनकिञ्जल्केऽन्त्ये द्वौ द्वौ त्रयमन्त्यके दले विलिखेत् ।
तारमहीकालार्णैः प्रवेष्टयेत्साध्यवर्णपरिपुटितैः ॥

तद्बाह्ये मनुवर्णैर्विदर्भिताभिश्च साध्यपदलिपिभिः ।
क्ष्माबिम्बचतुष्कोणे गर्भकसाध्याक्षरं च भूबीजम् ॥
अष्टसु शूलेषु तथा वाराहं वासुधेन संपृक्तम् ॥

अस्यार्थः-प्रणवं विलिख्य तस्योदरे हुं इति विलिखेत् । पुनस्तारस्य बहिः षट्कोणं विलिखेत् । तद्बहिश्चतुर्दलं विलिखेत् । तद्बहिरष्टदलं, तद्बहिः षोडशदलं, तद्बहिर्वृत्तचतुष्टयं, तद्बहिः चतुरश्रं विलिखेत् । पुनः प्रणवान्तास्स्थित-

हूंपदस्योदरे साध्यक्षेत्रस्य नाम, एतत्क्षेत्रपतित्वं मे कुर्विति (देहीति) विलिखेत् । साध्यक्षेत्रस्यानुदेशे भूपतित्वं मे कुर्विति (देहीति) विलिखेत् । कोणद्वन्द्वस्यान्तराले सूकरमन्त्रस्याङ्गानि पञ्च विलिखेत् । पुनश्चतुर्दळमूले वैष्णवाष्टाक्षराणि द्वौ द्वौ विलिखेत् । दळमध्ये सूकरमन्त्रस्य अष्टाक्षराणि अष्टशो विलिखेत् । पुनरवशिष्टमेकमक्षरमपि चतुर्थे दले विलिखेत् । पुनरन्त्ये षोडशपत्रे दलमूले कादिवर्णान् द्वौ द्वौ विलिखेत् । अवशिष्टं मा लिखेत् । पुनर्दलमध्ये सूकर(मन्त्र) वर्णान् द्वौ द्वौ विलिखेत् । अवशिष्टमेकमक्षरमपि अष्टमे दले विलिखेत् । बहिर्वृत्तचतुष्टयं विलिख्य, प्रथमे वृत्ते प्रणवं साध्यनामाक्षरद्वन्द्वैः पुटित्वा वेष्टयेत् । द्वितीये वृत्ते ग्लौं इत्यनेन महीबीजेन साध्याक्षरपुटितेन वेष्टयेत् । तृतीये वृत्ते हूं इत्यनेन कोलबीजेन साध्याक्षरपुटितेन वेष्टयेत् । चतुर्थे वृत्ते मन्त्रवर्णैः साध्यक्षेत्रनामानि पुटित्वा विलिखेत् । पुनस्तद्बहिश्चतुरश्रकोणेषु ग्लौं इति बीजं विलिख्य एतस्योदरे साध्यनाम विलिखेत् । पुनश्चतुरश्रकोणाग्रे अष्टशूलानि विलिखेत् । तेषां चतुर्णामुदरे वासुधं बीजं विलिखेत् ॥

अथ लेखनद्रव्यं लेख्यपट्टविशेषश्चोच्यते —

लाक्षाचन्दनकुङ्कुमलघुकर्पूरैः सरोचनैर्विलिखेत् ।
गोशकृदम्भोयुक्तैर्लेखिन्या हैमया दिने प्रवरे ॥

अस्यार्थः — लाक्षादिद्रव्यैर्मिळितैर्विलिखेत् । लाक्षा-जतु । क्षौमाख्ये शुभ्रदुकूले चेदेतैर्द्रव्यैः विलिखेत् । स्वर्णादिपट्टे चेत् स्वर्णलेखिन्या उक्तद्रव्यसिक्तया विलिखेत् ॥

अथ स्वर्णादिपट्टविशेषश्च तस्मिन् लिखिते फलविशेषश्चोच्यते —

सौवर्णे राज्यसिद्धिं रजतकफलके ग्रामसिद्धिं च ताम्रे
साहस्रस्वर्णसिद्धिं भुजदळलिखितं चाशु संहारयालाम् ।

क्षौमे लाभं धरायाः पिचुतरुफलके कार्यसिद्धिं निजेष्टां
यन्त्रं संजप्तिक्लृप्तं घृतहुतघृतसंपातपातं करोति ॥

अस्यार्थः — भुजदळं काकसवत्पत्रविशेषः। पिचुतरुः निम्बः। क्षौमं-शुभ्रताफता। उक्तपट्टविशेषे लिखित्वा जप्त्वा मन्त्रेणाज्याहुतिं यथाशक्ति कृत्वा तत्संपातेन पट्टं संसिञ्चेत्। तस्मात् उक्तफलं भवतीत्यर्थः ॥

यन्त्रस्थापनप्रकार उच्यते —

मन्त्री समास्थाय वराहरूपं साध्यप्रदेशे निखनेच्च यन्त्रम्।
स्थिराख्यराशावभिवाह्य कोलमङ्गानि दिक्षु क्षिपतां यथावत् ॥

अस्यार्थः — साधकः स्वमात्मानं वराहरूपं ध्यात्वा साध्यक्षेत्रस्य स्थिरराशिस्थाने निखनेत्। तत्र आवाहनं च कृत्वा यन्त्रस्य दिक्षु विदिक्षु च मन्त्रस्याङ्गानि कुर्यात् शरीरे यथा। तत्राङ्गचतुष्टयं दिक्षु पञ्चमं विदिक्षु कुर्यात् ॥

अस्यैव मन्त्रस्य प्रयोगान्तरम् —

यन्त्रममुं रक्षायै रोगग्रहवैकृतेषु जन्तूनाम्।
संजप्य शिरसि बध्यात् सतु नीरोगस्त्वयत्नतो भवति ॥

अथ मन्त्रदेवताप्रकाशिकोक्तप्रकारेण वाराहमन्त्रस्य पुरश्चरणादिविधि-र्लिख्यते —

बिल्ववृक्षं स्पृशन्नित्यं जपेन्मासं सहस्रकम्।
दशांशं जुहुयादब्जैः पुरश्चरणवान्भवेत् ॥

अथ प्रयोगः —

विवादक्षेत्रमासाद्य तस्य जन्मदिने दिने।
तत्रासीनो जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥

एवं कृतव्रतस्तस्य भूविवादो विनश्यति ।

प्रयोगान्तरम्—

आत्मानं मेरुसदृशं वराहं चिन्तयन् जपेत् ।
अङ्गारवारे यः क्षेत्रं सप्तकृत्वः प्रदक्षिणम् ॥

कृत्वा मृदं तु संप्राश्य तस्य क्षेत्रं भविष्यति ।

प्रयोगान्तरम्—

नित्यं भूमिं स्पृशन्मन्त्रं जपेदष्टसहस्रकम् ।
विन्दते महतीं भूमिमसपत्नामकण्टकाम् ॥

पंगुवारे तथा प्रोक्तं रविवारे विशेषतः ।
जपेत्प्रतिष्ठाकामस्तु महतीं भूमिमाप्नुयात् ॥

नित्यमष्टसहस्रं तु यो जपेद्धरिमर्चयन् ।
महतीं श्रियमाप्नोति भुवो राजा भविष्यति ॥

प्रयोगान्तरम्—

हस्तयोस्तु जलं गृह्य जपेदक्षरसंख्यया ।
मुखे तु प्रक्षिपेन्नित्यं मुखश्रीश्च भविष्यति ॥

अथ वराहमन्त्रप्रसङ्गात् कल्पान्तरोक्तः तत्प्रयोगविशेषोपि लिख्यते—

लक्षहोमो जपान्ते स्याद्गव्यैश्चैव सपायसैः ।
सप्तद्वीपानवाप्नोति नात्र कार्या विचारणा ॥

अस्यार्थः—पञ्चगव्यैः पायसैश्च हुनेदिति ॥

प्रयोगान्तरम्—

दधिमध्वाज्यसिक्ताश्च चतुरंगुलसंमिताः ।

गळूचीरष्टसाहस्रं हुनेद्व्याधिर्विनश्यति ॥

आम्रपर्णैः हुनेन्नित्यं ज्वरशान्तिर्भविष्यति ।

एते महावराहोक्ताः प्रयोगाः ॥

अथ वराहाष्टाक्षरविधिः कल्पान्तरोक्तोत्र लिख्यते—

ब्रह्मा ऋषिः । जगती छन्दः । वराहो देवता । ओं हृत् । भू शिरः । वराहाय शिखा । नमः कवचम् । ओं भूवराहाय नमः अस्त्रम् । ध्यानम्—

कृष्णाङ्गं त्वतिनीलरक्तनळिनं पद्मस्थित स्वाङ्कग-
क्षोणीशक्तिमुदारबाहुभिरथो शङ्खं गदामम्बुजम् ।
चक्रं बिभ्रतमुग्रकान्तिमनिशं देव वराह भजे
भूलक्ष्मीरतिकान्तिभिः परिवृतं चर्मासिसन्दीप्तिभिः ॥

ओं भूवराहाय नमः । इति मन्त्रः । ऐश्वर्यप्रधानोय मन्त्रः । पूजादिकं महावराहप्रोक्तवत् ॥

अथ वराहैकाक्षरमन्त्रोपि कल्पान्तरोक्तोत्र लिख्यते—

भार्गव ऋषिः । गायत्री छन्दः । वराहो देवता । हां हृत् । हीं शिरः । इत्याद्यङ्गानि । हूं इति मन्त्रः । हकारषष्ठस्वरबिन्दुभिरयं मन्त्रः । ध्यानजपपूजादिक पूर्ववत् ॥

अथ वराहमन्त्रप्रसङ्गात् भूलाभफलप्रदत्वसामान्यात् क्षेत्रस्य पतिनेत्यस्य मन्त्रस्य यन्त्रमपि कल्पान्तरोक्तमत्र लिख्यते—

कर्णिकायां कोलगर्भं तार साध्यसमन्वितम् ।
चक्रमन्त्र कोणषट्के तदङ्गानि च सन्धिषु ॥

अष्टपत्रे केसरोद्यदष्टार्णद्वयवर्णके ।
क्षेत्रस्येत्यादिसूक्तस्याप्यर्धमर्धमृचां क्रमात् ॥

धरामन्त्रेण संवेष्ट्य बाह्ये मातृकयाऽपि च ।
भूपुराश्रिषु भूबीज दिक्षु हूंबीजमालिखेत् ॥

क्षेत्रस्येत्यादिसूक्तस्य यन्त्रमेतत् शुभे दिने ।
ताम्रपट्टे समालिख्य स्वर्णसूच्या यथाविधि ।
स्थापित भवने यद्वा क्षेत्रे वा नगरेऽपि वा ॥

देशे वा तत्र वर्धन्ते दिनशस्सर्वसम्पदः ।
गजाश्वधेनुमहिषीवृषमेषखरादिभिः ॥

धनधान्यधराध्यक्षग्रामोरत्नविभूषणैः ।
आह्लादयन्ती विभवैरन्यैश्च स्यात्सदा रमा ॥

अस्यार्थः — प्रथम षट्कोण विलिख्य तन्मध्ये प्रणवं तन्मध्ये हूमिति वराहबीज तन्मध्ये साध्यनामादि, षट्सु कोणेषु सुदर्शनषडर्णं कोणसन्धिषु सुदर्शनषडङ्गानि, तद्बहिरष्टदळं पद्मं विलिख्य, तस्य केसरेषु वैष्णवाष्टाक्षरस्यैकैकमक्षरं च, प्रागुक्तवराहाष्टाक्षरस्य एकैकमक्षरं च विलिखेत् । पुनर्दळमध्येषु प्रागुक्तवराहमन्त्रस्य वर्णान् चतुरश्चतुरो विलिख्य अवशिष्टमेकमष्टमे विलिख्य, तद्बहिष्षोडशदळ पद्मं विलिख्य तेषु क्षेत्रस्य पतिनेत्यादिसूक्तस्य अर्धमर्धमृचां विलिख्य, तद्बहिर्वृत्तद्वय विलिख्य, प्रथमे वृत्ते ओं ह्रीं ग्लौं नमो भगवत्यै धरण्यै धरणिधरे धरे स्वाहा ग्लौं ह्रीं ओं ॥ इत्यनेन धरामन्त्रेण वेष्टयेत् ॥ द्वितीये वृत्ते मातृकया संवेष्ट्य, तद्बहिश्चतुरश्रकोणेषु ग्लौंबीजं दिक्षु वाराहं बीजं हूमिति विलिखेत् इति ॥

अथ वराहमन्त्रप्रसङ्गात् स्वप्नवाराहीमन्त्रोऽपि कल्पान्तरोक्तोत्र लिख्यते–

ईश्वर ऋषिः। अनुष्टुप् छन्दः। श्रीस्वप्नवाराही देवता। ऐं बीजम्। ह्रीं शक्तिः। ठठठ स्वाहा कीलकम्। ऐं हृत्। नमो वाराहि शिरः। अघोरे शिखा। स्वप्ने कवचम्। ठठठ नेत्रम्। स्वाहा अस्त्रम्। एतैरेव पदैः कटिकण्ठगण्डश्रोत्रनेत्रमूर्धसु न्यसेत्। ध्यानम्—

नीलाञ्जनगिरिश्यामां मणिरत्नविभूषिताम्।
अश्वारूढां च वाराहीं पाशांकुशधरां शिवाम्॥

कामरूपां महादेवीं खड्गखेटकधारिणीम्।
चतुर्भुजां तीक्ष्णदंष्ट्रां दंष्ट्राग्रस्थवसुन्धराम्॥

दुष्टसंहरणोद्युक्तां साधकानां वरप्रदाम्।
चिरं निरन्तरं भक्त्या समुपासे सनातनीम्॥

ऐं ह्रीं नमो वाराहि अघोरे स्वप्ने ठठठ स्वाहा॥

इति अष्टादशार्णो मन्त्रः॥

शृणु नारद तत्वेन साधना यादृशी भवेत्।
सोपवासश्शुचिर्भूत्वा कृष्णस्यैकतमे तिथौ॥

पूजयेद्देवदेवेशीं नैवेद्यं च निवेदयेत्।
ततो जपं प्रकुर्वीत अष्टोत्तरसहस्रकम्॥

समाहितमना भूत्वा ततस्सिद्धश्च साधयेत्।
भूतं भव्यं भविष्यच्च सर्वं सा वक्ति तस्य च॥

सा दापयति साध्यस्य स्वप्नेपूक्त्वा मनोगतम्।

प्रार्थनाप्रकारः—

नमस्ते स्वप्नवाराहि स्वप्ने कथय मे रिपोः ।
महाभयं च जनय भक्ते मयि कृपां कुरु ॥

प्रसह्य पीडयेत् क्षिप्रं यो यथा साध्यते मया ।
पाशबद्धं नुद क्षिप्रं चित्तमाकर्षयांकुशात् ॥

दुःखं वारय खेटेन मदीयमतिदुस्तरम् ।
छिन्धि नः खड्गतो मृत्युं कथयस्व शुभाशुभम् ॥

स्वयमागत्य नः साध्यः प्रणम्याज्ञां करोत्वयम् ।
इति प्रार्थनाप्रकारः ॥

अथ प्रयोगः —

भूर्जे वा ताम्बूलदळे वा विद्यामुन्मत्तरसेन वशपदसहितां लिखित्वा हृदये विन्यस्य पुष्पादिनाऽभ्यर्च्य प्राणप्रतिष्ठां कृत्वा महाज्वालाप्रयोगेण तन्मयं कृत्वा वामपादेनाक्रम्य त्रिसन्ध्यमष्टोत्तरशतं च जपेत्। दिनसप्तकात् वश्यं भवति ।

स्त्रियो(नारी)वा पुरुषो वापि प्राणैरपि धनैरपि ।
यावज्जीवं साधकानां वशीभवति दासवत् ॥

महाभस्माकृतिं वामपादेनाक्रम्य संजपेत् ।
प्रयच्छस्वामुकस्येदं स्त्रीरत्नं ग्रामपूर्वकम् ॥

राजानं मोहनं कृत्वा वशयेदवधीरयेत् ।
महाभस्माकृतिं कृत्वा हृदि वामांगुळिर्जपेत् ॥

अष्टोत्तरसहस्रं च स्वप्ने तं भीपयत्यलम् ।
दास्यति ह्यमुकस्येदं सर्वैरपि मनोरथम् ॥

अथ श्रीवाराहीमन्त्रप्रसङ्गात् महावाराहीमन्त्रोऽपि मन्त्रसारोक्तोत्र लिख्यते —

धरणीवराह ऋषिः । बृहती छन्दः । वाराही देवता । ग्लौं बीजम् । ऐं शक्तिः । ह्रीं कीलकम् । ओं ऐं ग्लौं ओं नमो भगवति वार्तालि- वार्तालि हृत् । वाराहि वाराहि वराहमुखि शिरः । अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः शिखा । भञ्जे भञ्जिनि नमः मोहे मोहिनि नमः कवचम् । सर्वदुष्टप्रदुष्टानां सर्वेषां वाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भं कुरु कुरु नेत्रम् । शीघ्रं वश्यं कुरु कुरु अस्त्रम् । ठठठठ हुंफट् स्वाहा इति दिग्बन्धः ॥

ध्यानम् —

वन्दे वाराहवक्त्रां वरमणिमकुटां विद्रुमश्रोत्रभूषां
हारग्रैवेयतुङ्गस्तनभरनमितां पीतकौशेयवस्त्राम् ।
देवीं दक्षोर्ध्वहस्ते मुसलमथ वरं लाङ्गलं वा कपालं
वामाभ्यां धारयन्तीं कुवलयकलितां श्यामलां सुप्रसन्नाम् ॥

ओं ऐं ग्लौं ओं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः भञ्जे भञ्जिनि नमः स्तम्भे स्तम्भिनि नमः मोहे मोहिनि नमः सर्वदुष्टप्रदुष्टानां सर्वेषां वाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भं कुरु कुरु शीघ्रं वश्यं कुरु कुरु ठठठठ हुंफट् स्वाहा ॥ इति मन्त्रः । निग्रहस्तम्भनप्रधानोयं मन्त्रः ॥ मध्यरात्रौ लक्षं जपेत् पुरश्चरणार्थम् ॥

अथ प्रयोगार्थे पूजा —

क्रों क्रोधिन्यै नमः । स्तं स्तम्भिन्यै नमः । क्ष्रौं चण्डोच्चण्डाय इति पार्श्वयोः पुरतश्च समर्चयेत् ॥

पुनर्मातृकाभिस्समर्चयेत् । अथ प्रयोगः —

नारिकेलफलं छित्वा तन्मध्ये तिलसंचयम् ।
क्षिपेत्तदास्ये बन्धूककुसुमानि च निक्षिपेत् ॥

मण्डलस्थतिलौघे तु संस्थाप्य तदनन्तरम् ।
अस्त्रमन्त्रं समुच्चार्य प्रोक्षयेदस्त्रवारिणा ॥

सर्वेषां तु पदं कृत्वा साध्यनामोपबृंहितम् ।

मूलमन्त्रे सर्वेषामिति पदे (पदस्य स्थाने) साध्यनाम संयोजयेदित्यर्थः ॥

मन्त्रं समुच्चरेत्सम्यगखिलाक्षरशोभितम् ।
हलेनाकृष्य वै कण्ठं वैरिणं क्रुद्धचेतसम् ॥

मुसलेन समाताड्य तर्पयेन्नालिकाम्भसा ।
त्रिसप्तसर्वरात्रेषु चैव सन्तर्पिता प्रिये ॥

स्तम्भयेदचिरादेव सप्ताहान्नात्र संशयः ।

प्रयोगान्तरम्--

नालिकेरपयोभिर्वा निजयुक्तजलेन वा ।
त्रिसप्तरात्रं सन्तर्प्य तत्क्रोधस्तम्भनं भवेत् ।
नमोन्तं यजने होमे स्वाहान्तं सुरसुन्दरि ॥

जपतर्पणयोः कुर्यात् साधकस्तु नमःपदम् ।
स्तम्भनायेशदिग्भागे निग्रहाय च याम्यके ॥

होमाय विधिवत्कुर्यात् कुण्डं लक्षणयोजितम् ।

प्रयोगान्तरम्--

देवदारुतिलान् लाजान् जुहुयात्स्तम्भहेतवे ।

त्रिसप्तस्वर्धरात्रेषु प्रत्येकं साष्टकं शतम् ॥

हुनेच्च साधकेन्द्रो वै मध्ये लीनारिनामकम् ।
ततस्तु किङ्करीभूतः सपत्नो भवति ध्रुवम् ॥

प्रयोगान्तरम्—

सपत्नवेषं संकल्प्य मृदा वा लोहकेन वा ।
संस्थाप्य याम्यकुण्डे तं हुनेल्लाजरजःकणैः ॥

अयुतं संजपेन्मूलं त्रिसप्तक्षणदां बुधः ।
त्वङ्मांसरक्तमेदोस्थिमज्जाशुक्लानि वैरिणः ॥

योगिन्यो भक्षयन्त्याशु पञ्चमीपादसेविनः ।

अथ यन्त्रम्—

प्रणवं प्रणवेनैव विपरीतं तु वेष्टयेत् ।
ऐभ्यां ग्लौभ्यां ससाध्याभ्यां ठकारेण च वेष्टयेत् ॥

अष्टभिः कुलिशैर्विद्वान् ग्लौं क्ष्रौं वज्रपुटद्वये ।
वज्राष्टकाग्रे तारं च लिखेन्मूलं च तद्बहिः ॥

भूमण्डलं लिखेद्बाह्ये मां च कोणेषु निक्षिपेत् ।
झण्डीशेन समावेष्ट्य चतुष्कैरंकुशैश्च तत् ॥

निरुद्धे तन्निशापिण्डे निक्षिप्यान्तर्गतं यथा ।
संपूज्य निखनेद्रात्रौ गुप्तदेशेषु देवताम् ॥

वाचं क्रोधं रिपुं गर्भं गमनं स्तेनमायतम् ।
दिव्यग्रहनदीसेनां स्तम्भयेत्प्रकटानपि ॥

अस्यार्थः—प्रथमं प्रणवं विलिख्य तद्बहिः विपरीतलिखितप्रणवेन संवेष्ट्य तद्बहिर्वाग्भवद्वयेन अन्तस्साध्यनामयुक्तेन च तद्बहिर्भूबीजद्वयेन साध्यनामयुक्तेन च प्रणववेष्टनोक्तरीत्या संवेष्ट्य, तद्बहिरमृतबीजेन वेष्टयेत् । तद्बहिः परितः वज्रायुधाष्टकं विलिख्य तस्य पुटद्वये अन्तरालद्वये ग्लौं इति भूबीजं क्ष्रौं इति नृसिंहबीजं च एकैकमेकैकस्मिन् पुटे विलिख्य, वज्राष्टकाग्रे प्रणवं च बहिर्मूलमन्त्रेण संवेष्ट्य, तद्बहिश्चतुरश्रकोणेषु श्रीबीजं च तद्बहिरेकादशस्वरेण एकारेणावेष्ट्य, तद्बहिः क्रों इत्यंकुशचतुष्टयेन वृत्तचतुष्टये संवेष्टयेत् । एवं विलिख्य 'हरिद्रापिण्डे निक्षिप्य संपूज्य निखनेदिति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
द्वाविंशः पटलः ॥



# अथ त्रयोविंशः पटलः ॥

अथ नृसिंहानुष्टुभो विधानमुच्यते—

ब्रह्मा प्रजापतिर्वा नारदो वा ऋषिः। अनुष्टुप् छन्दः। श्रीनृसिंहो महाविष्णुर्देवता हं बीजम्। ईं शक्तिः। उग्रं वीरं हृत्। महाविष्णुं शिरः। ज्वलन्तं सर्वतोमुखं शिखा। नृसिंहं भीषणं कवचम्। भद्रं मृत्युमृत्युं नेत्रम्। नमाम्यहं अस्त्रम् ॥

ध्यानम्—

जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद्बाहुसंस्पृष्टकेशः
चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमभिवहन् पातु वो नारसिंहः ॥

सात्विकध्यानम् ॥ ध्यानान्तरम्—

उद्यद्भास्वत्सहस्रप्रभमशनिनिभत्रीक्षणं विक्षरन्तं
वह्नीनह्नाय विद्युत्ततिविततसटाभीषणं भूषणैश्च।
दिव्यैरादीप्तदेहं निशितनखलसद्बाहुदण्डैरनेकैः
संभिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥

इति क्रूरध्यानम् ॥

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

इति मन्त्रः ॥ रक्षायुःप्रधानोयं मन्त्रः ॥

सशिरोललाटदृग्युगमुखकरपदसन्धिकेषु साग्रेषु ।
उदरहृद्दोर्गळपार्श्वेष्वपरे ककुदि क्रमान्न्यसेद्वर्णान् ॥

द्वात्रिंशत्सहस्रजपैरधिकारो भवति ॥ अधिकृतिः पूर्वसेवा । द्वात्रिंशदयुतैः पुरश्चरणं भवति । द्वात्रिंशल्लक्षं जपैः सिद्धिर्भवति ॥ द्वात्रिंशत्सहस्रमाज्यसिक्तैर्दुग्धान्नैः पुरश्चरणहोमः ॥

प्रतिपत्तिरस्य चोक्ता प्रसन्नता क्रूरता विशेषेण ।
द्विविधा प्रसन्नया स्यात्साधनपूजाऽन्यया प्रयोगविधिः ॥

अस्यार्थः— अस्य नृसिंहस्य प्रसन्नता स्वभावः । क्रूरता विशेषेण । तत्र पूजायां प्रसन्नरूपं ध्यायेत् । निग्रहविधौ क्रूररूपं ध्यायेत् । अथ पूजा—

पूर्वं मनसा पूजयेत् । तत्कथम्? प्रणामार्घ्यपाद्याचमनगन्धपुष्पधूपदीपनैवेद्यनृत्यगीतैः प्रपूजयेत् ॥ अथवा बाह्यपूजा ॥

वैष्णवे पीठे समावाह्य नृहरिं समर्चयेत् । अङ्गैः प्रथमावृतिः । गरुडाय० अनन्ताय० शर्वाय० कमलोद्भवाय० प्राक्प्रत्यक्क्रमशशिनां दिक्षु समर्चयेत् । श्रियै० ह्रियै० रत्यै० पुष्ट्यै० इत्याग्नेयादिषु समर्चयेत् । इति द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । अथ प्रयोगः—

विधाय तद्बीजविशिष्टकर्णिकं चतुश्चतुर्वर्णलसद्दळाष्टकम् ।
सुलक्षणं मण्डलमन्यलक्षणैः विधाय तस्मिन् कलशैः प्रपूर्य च ॥

यथोक्तमार्गेण समर्च्य साष्टकं सहस्रसंख्यं प्रजपेन्मनुं ततः ।
निरुच्चरन्मन्त्रमथाभिषेचयेत् यमेन मृत्योः परिवर्तते मुखात् ॥

अस्यार्थः— नृसिंहबीजं कर्णिकायां विलिख्य, अष्टदलेषु चतुरश्चतुरो मन्त्रवर्णान् विलिख्य, तद्बहिर्मातृकावर्णैर्वेष्ट्य, तद्बहिश्चतुरश्रद्वयपुटितकोणेषु

नृसिंहबीजं विलिखेत्। तस्मिन् दुग्धवृक्षचर्मकथितकषायजलैः कलशं संपूर्य अष्टोत्तरसहस्रं जप्त्वा अभिषेचयेद्यं स मृत्युमुखात् प्रमुच्यते इति। क्ष्रौं इति नृसिंहबीजम् ॥

प्रयोगान्तरम्—

दूर्वात्रिकैरष्टसहस्रसंख्यैराराध्य मन्त्री जुहुयादथाप्सु।
शान्तिं प्रयान्त्येव तथोपसर्गा आपो हि शान्ता इति च श्रुतिः स्यात्॥

उत्पाते सति महती ह्युपद्रवाणां होमोऽयं भवति च शान्तिदो नराणाम्।
यद्वान्यं निजमनसेप्सितं च कामं तच्चाप्नोत्यखिलनृणां प्रियश्च भूयात्॥

अयमर्थः–तिस्रस्तिस्रो दूर्वाः संयोज्य अष्टोत्तरसहस्रं घटस्थाप्सु जुहुयात्। शत्रुपीडाद्युपद्रवशान्त्यर्थं चोत्पातशान्त्यर्थं च, अन्यदपि मनसोऽभीष्टार्थं च। अस्मिन्नर्थे आपो हि शान्ता इति श्रुतिः प्रमाणम्॥

प्रयोगान्तरम्—

दुस्स्वप्नेष्वपि दृष्टेष्ववशिष्टा जाग्रता निशा नेया।
जपमानमन्त्रशक्त्या सुस्वप्नो भवति तत्क्षणादेव॥

अयमर्थः— दुस्स्वप्ने दृष्टे नृसिंहबीजं जपता अवशिष्टा रात्रिर्नेया। तस्मात्स एव दुस्स्वप्नः सुस्वप्नो भवति॥

प्रयोगान्तरम्—

चरन्वने दुष्टमृगाहिचोरव्याळाकुले मन्त्रमिमं जपेद्यः।
असाधितं साधितमेव तस्य न विद्यते भीर्बहुरूपजाता॥

इमं मूलमन्त्रमित्यर्थः। प्रयोगान्तरम्—

जप्तेनाष्टसहस्रं कलशेनाप्यभिविषार्तमभिषिञ्चेत्।

अतिविषमेण विषेणाप्यसौ विमुक्तस्सुखी भवति ॥

अस्यार्थः — अष्टोत्तरसहस्रं कलशं जप्त्वा अभिषिञ्चेत् । विषं नश्यति ॥

प्रयोगान्तरम् —

मूषिकलूतावृश्चिकबहुपाद्याद्युत्थितं विषं शमयेत् ।
अष्टोत्तरशतजापात् मनुरयमभिमन्त्रितं च भस्माद्यम् ॥

सशिरोक्षकण्ठहृद्गलकुक्षिरुजाज्वरविसर्पवमिहिक्काः ।
मन्त्रौषधाभिचारिककृतान्विकारानयं मनुश्शमयेत् ॥

अयमर्थः — अनेन मन्त्रेणाष्टोत्तरशत जप्ते मूषिकादिविषशान्तिः । अनेन मन्त्रेण भस्म जप्त्वा धृते शिरोवेदनादिउक्तरोगा नश्यन्ति ॥

प्रयोगान्तरम् —

नरहरिवपुषात्मना गृहीत हरिणशिशुं निजवैरिणं विचिन्त्य ।
क्षिपतु गगनतः क्षितौ सुदूरं यमनुदिनं प्रतिचाल्यते स मासात् ॥

यां च दिशं प्रति मनुना क्षिप्तोऽसौ तां दिशं प्रयात्यचिरात् ।
पुत्रकलत्रधनादीन् त्यक्त्वा त्वपुनर्निवृत्तये सहसा ॥

अयमर्थः — आत्मानं नृहरिरूपं ध्यात्वा शत्रुं हरिणशिशुं च ध्यात्वा आत्मना तं गृहीतं च ध्यात्वा, तं शत्रुं गगनतः क्षितौ दूरतः क्षिप्तं च नित्यशो ध्यात्वा जपेत् । एवं मासे कृते यस्यां दिशि क्षिप्तः तस्यामेव दिशि स पुत्रकलत्रादींश्च त्यक्त्वा शत्रुर्गच्छति ॥

प्रयोगान्तरम् —

नरहरिवपुषात्मना निजारिं नखरखराग्रसमग्रभिन्नदेहम् ।

क्षणमिव निहतं विचिन्त्य खादन्निव जपतां मनुमेष नाशमेति ॥

अयमर्थः — नरहरिरूपेणात्मना नखाग्रैर्भिन्नं शत्रुं निहतं ध्यात्वा तं भक्षयन्निव जपेत् । तस्मात् शत्रुर्नाशमाप्नोति ।

प्रयोगान्तरम् —

पूर्वतरे मृत्युपदे निधाय निजसाध्यनाम मन्त्रितमः ।
क्रूरेण चक्षुषा तं दहन्निवालोक्य जपतु सप्तदिनम् ॥

दिनशोऽष्टोर्ध्वसहस्रं म्रियते रिपुरस्य नात्र सन्देहः ।

अयमर्थः -- मृत्युमृत्युमित्यत्र पूर्वमृत्युपदं त्यक्त्वा तत्र शत्रोः नाम संयोज्य देवदत्तमृत्युं नमाम्यहमिति जपेत् । क्रूरदृष्ट्या तं शत्रुं दहन्निव निरीक्ष्य अष्टोर्ध्वसहस्रं नित्यशः सप्तदिनं जपेत् । तस्मात् शत्रुर्मरिष्यति ॥

अथ प्रयोगान्तरम् —

मारणकर्म न शस्तं क्रियते यद्ययुतमथ जपेत् शान्त्यै ।

प्रयोगान्तरम् —

वश्याकृष्टिद्वेषणमोहोच्चाटादिकानि यदि वाञ्छेत् ।
तदर्हया प्रतिपत्त्या तत्तत्कर्म प्रसाधयेन्मन्त्री ॥

दिनमनु दिननाथं पूजयित्वा दिनादौ
नरहरिमपि सम्यक् प्रोक्तमार्गेण मन्त्री ।
तदनु तदनुमत्या भस्मना मन्त्रितेन
प्रतिरचयतु राज्ञे वाप्यभीष्टाय रक्षाम् ॥

अयमर्थः — प्रातःकाले सूर्यं तदुक्तविधानेन संपूज्य, पुनर्नरहरिमपि

तदुक्तविधानेन संपूज्य तदनन्तरं नरहरेरनुमत्या भस्म गृहीत्वा जप्त्वा राज्ञे वा इष्टाय वा दद्यात् । रक्षाकरं भवति ॥

प्रयोगान्तरम् —

न्यासोक्तस्थानेषु प्रविन्यसेद्भस्मना समन्त्रार्णम् ।
अखिलोपद्रवशान्त्यै संपत्त्यै वाञ्छितार्थसिध्द्यै च ।

अयमर्थः — नृसिंहमन्त्राक्षरन्यासोक्तस्थानेषु सभस्म मन्त्रार्णं न्यसेत् । तस्मादुक्तफलं भवेत् ।

प्रयोगान्तरम् —

अथ परराष्ट्रजयेच्छोः राज्ञः कुर्यात्प्रयोगविधिमेवम् ।
नरहरिमपि विधिना तं हिरण्यकशिपुद्विपं समभ्यर्च्य ॥

तस्य पुरस्ताद्विधिवत् निधाय वह्निं विभीतशरकाष्ठैः ।
उज्ज्वलिते तु ज्वलने ममूलतूलैः शरेध्मदशशतकैः ॥

खादन्निरोचरेन्मनुमरींश्च भिन्दन्निव क्षिपेत्समिधः ।
हुत्वा परराष्ट्रेभ्यः पृतनां सन्नाह्य च पुरस्तस्याः ॥

निघ्नन्तं रिपुसेनां स्मरेन्नृसिंहं पुरेव दितितनयान् ।
यावज्जितारिरेष्यति नृपतिस्तावज्जपेत्स्मरन्देवम् ॥

सेन्द्रसुरासुररक्षोयक्षानपि जयति का कथा मनुजान् ।

विभीतकं – तानि । अथ परराष्ट्रजयेच्छोरित्यादिग्रन्थानामयमर्थः । प्रथमं नरहरिं समभ्यर्च्य तस्य पुरतः विभीतककाष्ठेन शरान् संपाद्य, तच्छरकाष्ठैरग्निं निधाय, तस्मिन्नग्नौ विभीतैनैव शरान् अष्टोत्तरसहस्रम् संपाद्य, अरीन् खादन्निव मन्त्रं जप्त्वा, अरीन् भिन्दन्निव हुनेत् शरसमिधः ॥

अथवा विभीतेन शरेण च काष्ठं संपाद्य, तस्मिन्नग्नौ समूलतूलशरान् जुहुयात्। शरं-कौंस। एवं हुत्वा शत्रोः राज्ञः सेनां समाविश्य तां निहत्य तत्पुरतः स्थितं नृसिंहं स्मरेत्। एवं स्मृत्वा जपेत्। साधकराजा यदा जयं कृत्वा आगमिष्यति तावदेवमेव ध्यात्वा जपेत्। एवं कृते इन्द्रादीनपि जयति ॥

प्रयोगान्तरम् —

श्रीकामः श्रीप्रसूनैः दशकमथ शतानां हुनेत् बिल्वकाष्ठैः
तत्पत्रैर्वा प्रसूनैः सुमतिरथ समिद्भिः फलैर्वा तदीयैः ।

अयमर्थः — श्रीप्रसूनं-श्रीतालिपुष्पमेव । बिल्वकाष्ठं-बिल्वशकलम्। श्रीपुष्पैर्वा बिल्वकाष्ठैर्वा बिल्वपत्रैर्वा तत्पुष्पैर्वा तत्समिद्भिर्वा सहस्रं हुनेत् लक्ष्म्यर्थम् ॥

पुत्रेप्सुः पुत्रजीवेन्धनकृतदहने तत्फलैर्वा सहस्रं
दूर्वाभिस्त्वायुषेच्छाभिमतमखिलं प्राप्नुयान्मन्त्रजापी ॥

पुत्रजीवं–पुत्रजीवमेव। अयमर्थः — पुत्रार्थी पुत्रजीवेन्धनेनाग्निं संपाद्य पुत्रजीवसमिद्भिर्वा तत्फलैर्वा सहस्रं हुनेत्। आयुषे चेद्दूर्वया हुनेत्। अभीष्टमर्थं प्राप्नुयात् ॥

प्रयोगान्तरम् —

ब्राह्मीं वचां वाष्टशताभिजप्तां प्रातस्समद्यान्नृहरिं विचिन्त्य।
संप्राप्य मेधां स तु वेदशास्त्रनिष्णातधीस्स्यादपि वत्सरेण ॥

अयमर्थः — ब्राह्मीं वचां वा पिष्ट्वा अष्टोत्तरशतसंख्यं जप्त्वा प्रातस्समद्यात् संवत्सरम्। तस्मादुक्तफलं भवति ॥

अथ नृसिंहबीजविधानं कल्पान्तरोक्तप्रकारेण लिख्यते —

अत्रिः ऋषिः। जगती छन्दः। नृसिंहो देवता। अथवा ब्रह्मा ऋषिः। गायत्री छन्दः। नृसिंहो देवता। ओं बीजम्। पं शक्तिः। ध्यानादिकं पूर्ववत्। अथवा क्षकारो बीजम् औकारश्शक्तिः। क्षां हृत्। क्षीं शिरः। इत्याद्यङ्गानि॥

किरीटकौस्तुभोत्तुङ्गहारकेयूरनूपुरैः।
भूषितं पुण्डरीकाक्षं प्रसन्नवदनं हरिम्॥

भुजद्वयेनाधस्थेन वैरिवक्षोविदारणम्।
भुजद्वयेन चोर्ध्वेन दैत्येन्द्राकर्षणे रतम्॥

दोर्भिश्चतुर्भिर्लसितं मध्ये चक्रादिधारिणम्।
चन्दनागरुकर्पूरकुङ्कुमाद्यैर्विभूषितम्॥

वनमालादिशोभाढ्यं स्फुरन्मकरकुण्डलम्।
देवस्य तस्य चाङ्केषु(प्यङ्के) हिरण्यकशिपुं स्मरेत्॥

क्ष्रौं इति मन्त्रः॥

अथ नृसिंहमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तनृसिंहानुष्टुप्न्यासविधिश्च प्रयोगाश्च लिख्यन्ते—

ओं उं उग्ररूपाय उग्रायै नमः। ओं ग्रं महादंष्ट्राय दंष्ट्रायै नमः। ओं वीं जयाय स्थिरायै नमः। ओं रं विजयाय वीरायै नमः। ओं मं महाबलाय बलिष्ठायै नमः। ओं हां महोत्साहाय सर्वमङ्गलायै नमः। ओं विं जयन्ताय अनन्तायै नमः। ओं ष्णुं अपराजिताय अनन्तविजयायै नमः॥ ओं ज्वं ज्वालामालिने ज्वालिन्यै नमः। ओं लं दीप्तदंष्ट्राय ज्वलनात्मिकायै नमः। ओं तं अग्निनेत्राय दीप्तजिह्वायै नमः। ओं सं असुरान्तकाय विरूपायै नमः। ओं र्वं व्योमगर्भाय विश्वयोन्यै नमः। ओं तों विश्वमुखाय विभाव्यै नमः। ओं मुं व्योमरूपिणे विमलायै नमः। ओं खं

विदारणाय विशुद्धायै नमः। ओं नृं नृकेसरिणे जयायै नमः। ओं सिं दिव्यसिंहाय विजयायै नमः। ओं हं भीमाय त्रैलोक्यमोहिन्यै नमः। ओं भीं वज्रनखाय भीमायै नमः। ओं षं विदीर्णास्याय भीषिण्यै नमः। ओं णं भीषणाय श्रियै नमः। ओं भं श्रीनिधये सुखावहायै नमः। ओं द्रं श्रीपतये प्रीत्यै नमः। ओं मृं यमान्तकाय आह्लादिन्यै नमः। ओं त्युं कालरूपिणे लक्ष्म्यै नमः। ओं मृं विशोकाय मृतसंजीविन्यै नमः। ओं त्युं विश्वभावनाय ध्रुवायै नमः। ओं नं मृत्युञ्जयाय पूर्णायै नमः। ओं मां जगत्पतये पूर्णामृतायै नमः। ओं म्यं भक्तरक्षाकराय कामदायिन्यै नमः। ओं हं हरये संविदे नमः। इत्यक्षरन्यासं कुर्यात् पूर्वोक्तवर्णन्यासस्थानेषु ॥

अथ नृसिंहसान्निध्यकरा दशविधन्यासा उच्यन्ते। तत्रांगुलिन्यासः कथ्यते —

करद्वयांगुष्ठादिदशांगुळीषु प्रत्येकमाद्यन्तपर्वणोः सर्वांगुळौ च त्रिंशदक्षराणि सबिन्दुकानि विन्यस्य अवशिष्टमक्षरद्वयं करतलयोः विन्यसेत्।

अथ देहे अक्षरन्यासः —

मूर्ध्नि शिरसि ललाटे भ्रूमध्ये नेत्रयोः श्रोत्रयोः कपोलयोः कर्णमूलयोः चुबुके उत्तरोष्ठे अधरोष्ठे कण्ठे नासिकायां दक्षिणभुजे वामभुजे हृदये सर्वतनौ नाभ्यां दक्षिणकरतले कटिस्थाने मेढ्रे ऊर्वोः जान्वोः जङ्घयोः गुल्फयोः पादमध्ययोः पादांगुळीषु सर्वसीम्नि रोमकूपेषु रक्तास्थिमज्जासु ३२ न्यसेत् ॥

अथाक्षरन्यासोऽन्यः —

पद्गुल्फजङ्घाजानूरुकटिनाभिहृदि न्यसेत्।
बाह्वोः कण्ठे च चुबुके दन्ते चोष्ठे कपोलयोः ॥

कण्ठास्ये च (न्तास्ये) तथा नासापुटे नेत्रे च मूर्धनि।

अथ पदन्यासः —

मुखे मूर्ध्नि तथा नासाचक्षुःश्रोत्रे च विन्यसेत् ।
आस्ये च हृदये नाभौ कटिजानुपदेष्वपि ॥

अथ चतुरक्षरन्यासः —

नासाग्रे नेत्रे श्रवणे नाभौ हृदि मूर्ध्नि बाह्वोः पादयोः ८ एतेषु स्थानेषु चतुरश्चतुरो वर्णान् न्यसेदित्यर्थः ॥

अथ पादन्यासः —

मूर्ध्नि हृदि नाभौ सर्वाङ्गे ॥

अथार्धन्यासः —

मूर्धादिहृदयपर्यन्तं पादादिहृदयपर्यन्तम् ॥

अथोग्रन्यासः —

मुखे शिरसि घ्राणयोः चक्षुश्श्रोत्रयोः केसरस्थाने हृदये नाभौ कट्यादिपादाग्रपर्यन्तं ९ इत्येतेषु नवसु स्थानेषु उग्रमुग्रं नमाम्यहम् वीरमुग्रं नमाम्यहम् इत्यादिक्रमेण न्यसेत् ॥ अथैतेष्वेव स्थानेषु उग्रं वीरं नमाम्यहम् वीरं वीरं नमाम्यहम् इत्यनेन वीरन्यासः । अथ पुनः तेषु स्थानेषु उग्रं सिद्धं नमाम्यहम् वीरं सिद्धं नमाम्यहम् इत्यनेन क्रमेण न्यासः ।

इति हृदयादिन्यासः ॥

अथ हरिन्यासः —

तत्राद्यवर्णं मूलाधारे तदादिनाभिपर्यन्तं वर्णत्रयम् । तदादिहृदयपर्यन्तं वर्णचतुष्टयम् । तदादिभ्रूपर्यन्तं वर्णषट्कम् । ततो वर्णत्रयं नेत्रत्रये । ततो वर्णद्वयं मूर्ध्नि । ततो वर्णदशकं बाहुद्वयांगुलीषु । ततो वर्णद्वयं पादद्वये । ततोन्त्यवर्णं मूर्धादिपादपर्यन्तं विन्यसेदित्येवं सर्वस्थानेषु सर्ववर्णानन्तरे विन्यसेत् ॥

अस्य हरिन्यासस्य साक्षात् हरिसारूप्यादिप्रापकस्य माहात्म्यं हरिरेव जानाति । मनुष्यो वक्तुं न समर्थः ॥

अथ प्रयोगविशेषा लिख्यन्ते —

लक्ष्मीकामस्तु मन्त्रज्ञः सैवन्तीकुसुमैर्हुनेत् ।
अयुतं मधुरा(ना)युक्तैर्दरिद्रो न भवेत् कुले ॥

सैवन्ती-सेवन्तीपुष्पम्

औदुम्बरसमिद्धोमात् धान्यसिद्धिर्भविष्यति ।
अपूपलक्षहोमेन धनदेन समो भवेत् ॥

क्रुद्धस्य सन्निधौ राज्ञो जपेदष्टोत्तरं शतम् ।
सद्यो नैर्मल्यमाप्नोति प्रसादं चाधिगच्छति ॥

कुन्दप्रसूनहोमेन महोदयमवाप्स्यति ।
कदळीफलहोमेन सर्वविघ्नं प्रशाम्यति ॥

तुळसीपत्रहोमेन कीर्तिं याति न संशयः ।
सक्तुहोमेन शालेस्तु वशीकरमिदं भवेत् ॥

हरिद्राखण्डहोमेन स्तम्भनं भवति ध्रुवम् ।
मधूकपुष्पहोमेन इष्टसिद्धिर्भविष्यति ॥

मधूकं-मोहाचें फूल् ॥

दधिमध्वाज्यमिश्रास्तु गडूचीश्चतुरंगुलाः ।
जुहुयादयुतं योऽसौ शतं जीवति रोगजित् ॥

शनैश्चरदिनेश्वत्थं स्पृष्ट्वा चाष्टोत्तरं शतम् ॥

जपेत् जित्वा सोपमृत्युं शतं वर्षाणि जीवति ॥

श्रीकामस्सततं ध्यायेत् पूर्वोक्तनृहरिं सितम् ।
नामाङ्कस्थितया लक्ष्म्याऽऽलिङ्गितं पद्महस्तया ॥
विषमृत्युशत्रुरोगादि(रोग)सर्वोपद्रववारणम् ॥

अथ नृसिंहमन्त्रप्रसङ्गात् कल्पान्तरोक्तप्रकारेण नृसिंहमन्त्रेण प्रतीकारबलिप्रकारो लिख्यते —

प्रथमं नृसिंहानुष्टुप् ऋष्यादीन्विन्यस्य उग्रं वीरं + नमाम्यहम् ॥

नरसिंह महासिंह ज्वालामालोज्ज्वलानन ।
ग्रहानशेषान्सर्वेश खादखादाग्निलोचन स्वाहा ॥

यदि यस्तस्य वै व्याधिरिन्द्रियाणां च धातुषु ।
स आदाय बलिं शश्वत् सिंहस्सत्येन मुञ्चतु ॥

इति प्रजप्य गोमयेन स्थण्डिलमुपलिप्य, स्वदक्षभागे गणपतिपूजां विधाय, तण्डुलरजसा षट्कोणं बहिस्त्रिवृत्तोपेतं विधाय, तद्बहिः प्राक् प्रत्यक् दक्षिणोदगग्राणि स्थलत्रितयानि कृत्वा, तदग्रेषु प्रतिदिशं शूलद्वितयं विधाय, तन्मण्डलस्य निर्ऋत्यां एतादृशं मण्डलं विधाय, प्राक्तनमण्डलस्याग्नेये स्वस्तिकं विधाय, पूर्वपाश्चात्यदक्षोत्तरकोष्ठद्वये यथाक्रमं तण्डुलरजः रजनीरजश्चापूर्य, पुनरुत्तरदिशि प्राक् प्रत्यक् दक्षिणोदक् च एकादशसूत्राण्यास्फाल्य, अष्टदिक्स्थसूत्राणि बहिराकृष्य अष्टचतुरश्रखण्डानि विधाय, सर्वेषामेषां मण्डलानां अन्तरालानि पञ्चवर्णरजसा एकविंशपटले सुदर्शनविधाने प्रोक्तेन पूरयित्वा, स्वस्तिके रक्तोदपात्राणि स्थापयित्वा, कृतस्वगुरुगणपत्यादिवन्दनो नृसिंहास्त्रमन्त्रेण तालत्रयदिग्बन्धनाग्निप्राकारान् विधाय, प्रणवकृतप्राणायामषडङ्गादीन् निर्वर्त्य, शङ्खं संपूर्याग्निमानाय्य तूष्णीं क्रव्यादाग्निं विहाय, प्रणवेन मध्यषट्कोणेऽग्निं

निधाय, अग्नितो हस्तमविश्लेपयन्नेव शुष्कं निक्षिप्य "चितिपिङ्गळ हन हन दह दह पच पच सर्वज्ञ आज्ञापयति स्वाहा" इति दीपयित्वा दीप्ते सति घृताक्तपुष्पेणाग्निमध्ये समाराध्य,

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥

इत्यनेनोपस्थाय, परिषेचनादिकं कृत्वा, दर्भैः परिस्तरणं विधाय, वैष्णवपीठपूजां कृत्वा नृसिंहमावाह्य व्यापकत्रयं षडङ्गऋष्यादींश्च तस्मिन्विन्यस्य, अर्घ्यपाद्यादिकं शङ्खजलेन कल्पयित्वा, आग्नेयादिषु हृदयादिचतुष्टयं दिक्ष्वस्त्रं पुरतो नेत्रं च संपूज्य, वैनतेयाय नमः । अनन्ताय० शर्वाय० ब्रह्मणे० श्रियै० ह्रियै० रत्यै० पुष्ट्यै० पुनरिन्द्रादीन् वज्रादींश्च पूर्वाद्यष्टदिक्षु अग्नौ जलगन्धपुष्पादिभिः संपूज्य, आज्यं संस्कृत्य स्रुवं संमार्ज्य, "वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा" इति पञ्चदशाहुतीर्हुत्वा, पुनरुग्रं वीरमिति मन्त्रेण यथाशक्त्याहुतिं विधाय, घृताप्लुतेन हविषा अष्टोत्तरशतं हुत्वा, अग्निनिर्ऋतिमध्यदक्कोणे साध्यं संस्थाप्य शङ्खजलं संप्रोक्ष्य तालत्रयदिग्बन्धनाग्निप्राकारान् विधाय, नृसिंहमन्त्रऋष्यादिषडङ्गं न्यस्त्वा भस्मना स्नापयेत् । तद्यथा —

उग्रं वीरं महाविष्णुं ऋग्वेदात्मने पृथिव्यात्मने नमः ज्वलन्तं सर्वतोमुखं यजुर्वेदात्मने अबात्मने नमः । नृसिंहं भीषणं भद्रं सामवेदात्मने अग्न्यात्मने नमः । मृत्युमृत्युं नमाम्यहं अथर्ववेदात्मने वाय्वात्मने नमः । मन्त्रं सर्वमुक्त्वा सर्ववेदात्मने आकाशात्मने नमः । (इति) प्रपदगुह्यहृदयवदनशिरस्सु भस्मना सह न्यसेत् ॥

उग्रं नमः । वीरं नमः । महाविष्णुं ज्वलन्तं सर्वतोमुखं० नृसिंहं० भीषणं० भद्रं० मृत्युमृत्युं० नमामि नमः । अहं नमः ॥ एतानि पदानि नमोन्तानि शिरो-भ्रूमध्य-दृग्द्वय-वदनां-सद्वय-हृदय-गुह्य-जानु-प्रपदेषु न्यसेत् ॥

*ओं उं नमः । ओं ग्रं नमः । इत्याद्यक्षराणां न्यासं शिरोललाट-भ्रूमध्य-दृग्द्वय-वदनांसद्वयोरु-गुह्य-दृग्युग-वदन-दोः पत्संधि गुह्य हृदय-गळपार्श्व-द्वय पृष्ठ-ककुत्सु कुर्यात् ॥

एवं त्रिरक्षरन्यासं कृत्वा मन्त्रस्य त्रिपादान्ते त्वग्धातुषु त्वगगनमृत्युं नाशय नाशय मृत्युमृत्युं नमाम्यहं इति जपन् अक्षरन्यासस्थानेषु द्वात्रिंशत्सु भस्म क्षिपेत्। पुनस्त्रिरक्षरन्यासं विधाय असृक्धातुन्यासः ॥ एवमन्यानपि विन्यसेत्। (रस)त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रप्राणशक्त्यात्मानो दशधातवः। एवं भस्मना स्नापयित्वा अग्नेर्दक्षिणतः उत्तराभिमुखं कश्चित् ब्राह्मणं स्थापयित्वा वकुळपत्राणि कार्पासबीजानि कुलुत्थबीजानि गृहधूममर्षपाणि व्रीहिखण्डानि सूरण-भल्लातकमोदकलाजास्समूलतूलापामार्गलोणपिण्डानि एतानि सर्वाणि संमिश्रय तस्योपर्युपरि परिस्तरणं विधाय, साध्यस्य हृदि उग्रमन्त्रेण भस्मना संताड्य अग्नेरसिभिः परिस्तरणं कृत्वा पूर्वस्यां दिशि चतुर्षु स्वस्तिकेषु चत्वारि पीठानि स्थापयित्वा तेष्वेकैकं कदलीपत्रं तेष्वेकैकमानं तण्डुलं तदुपर्येकैकं रक्तवसनं तदुपरि नाळिकेरक्रमुकनागवल्लीपत्राणि उत्तराग्राणि खड्गानि च निधाय, पुष्पैस्समभ्यर्च्य परिस्तरणाद्बहिः दीर्घाणि कदलीपत्राणि स्थापयित्वा तदुपरि एकैकं कदलीस्तम्भं निधाय बह्वीश्शलाकावर्तीः संज्वाल्य साध्यं नीराज्य कदलीस्तम्भेषु रोपयित्वा दक्षिणहस्तेन करवाळं गृहीत्वा सशलाकदीपं रक्तोद-क्रमुकपत्रं साश्वत्थपत्रं तदुपरि स्थितपिण्डदीपसहित वामहस्तेन दधानः असि-ताङ्गभैरवाय नमः इति साध्यं नीराज्य दक्षिणेन कदलीस्तम्भस्य बहिः पूर्वस्यां दिशि कदलीपत्रे स्थापयेत्। एवमेव रुरुप्रभृतिभिः नीराज्य अग्न्यादिषु,

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ।
कपाली भीषणश्चेति संहारश्चाष्टभैरवाः ॥

---

* अत्र मन्त्राक्षराणा अङ्गाना च संख्यावैषम्यं दृश्यते । अतः प्राज्ञैरक्षरन्यासोक्त-स्थानान्यनुसंधेयानीति भाति ॥

पुनरुग्रमन्त्रेण साध्यहृदि भस्मना सन्ताड्य,

नरसिंह महासिंह ज्वालामालोज्वलानन ।
ग्रहानशेषान् सर्वेश खाद खादाग्निलोचन स्वाहा ॥

इति वकुळपत्रादिभिः पूर्वोक्ताभिः साध्यं नीराज्य तज्जुहुयात् । पुनः क्रमुकपलपात्रस्थरक्तोदेऽश्वत्थपत्रं, तदुपरि लिङ्गाकृतिपिण्डं, तदुपरि च ज्वलितवर्तीः निधाय, साध्यं,

यदि यस्तस्य वै व्याधिः इन्द्रियाणां च धातुषु ।
स आदाय बलिं शश्वत् सिंहसत्येन मुञ्चतु ॥

इति नीराज्य, पूर्वोक्ताष्टोत्तरशतखण्डेषु ईशानादि स्थापयेत् ॥

तदा दक्षिणतः स्थितेन विप्रेणापि, किञ्चिदन्नं सदीपं यदि यस्तस्य मन्त्रेण साध्यं नीराज्य स्वस्तिकस्थरक्तोदे क्षेप्तव्यम् । पुनरुग्रेण पूर्ववत् भस्मताडनं, नारसिंहेन पूर्ववत् नीराज्य, होमश्च, यदि यस्तस्य इत्यनेन बलिदानं, तस्य *पूर्ववदनजपश्च । एवमष्टोत्तरशतं वामहस्तेन करवालं दधान एव हुत्वा, रक्तोदमिश्रान्नेनैव असिताङ्गभैरवाय नमः इत्यादिभिः, बहिरुग्रमन्त्रेण करवालं साध्यस्य हस्ते दत्वा बलिं दत्वा, अस्त्रमन्त्रेण साध्यस्य रक्षां कृत्वा, उग्रेण करवालं साध्यस्य हस्ते दत्वा, ततः ग्रेष्ठाऽग्निस्थं देवं हृदयकमले समुद्वास्य, अग्न्यादिकं चतुष्पथे वा, साध्याष्टमराशौ वा पूर्ववदेव स्थापयित्वा, अष्टदिक्षु सर्वेभ्यो भूतेभ्यो नम इति केवलान्नेन बलिं विकीर्य, स्वस्य रक्षां कृत्वा, तत्सर्वमवीक्ष्य शीघ्रमागच्छेत् । एवं तिसृषु रात्रिषु हुत्वा, तुर्यदिने पायसेनाष्टोत्तरसहस्रं हुनेत् ॥

इति प्रतीकारबलिविधिस्समासः ॥

---

* पूर्ववत् इति ङ पाठः ।

अथ नृसिंहषडक्षरीविधानमुच्यते —

स्वयंभूः ऋषिः । पंक्तिः छन्दः । नृसिंहो देवता । क्ष्रौं बीजम् । ह्रीं शक्तिः । ओं हृत् । ह्रीं शिरः । क्ष्रौं शिखा । क्रों कवचम् । हुं नेत्रम् । फट् अस्त्रम् ।

ध्यानम् —

अव्यान्निर्व्याजरौद्राकृतिरतिविकृतास्योल्लसत्तीक्ष्णदंष्ट्रः
चक्रं शङ्खं च पाशांकुशकुलिशगदां दारुणाख्यां दधानः ।
रक्ताकारश्च नाभेरध उपरिसितो दिव्यभूषाविशेषो
देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥

ओं ह्रीं क्ष्रौं क्रों हुं फट् ॥ इति मन्त्रः ॥ रक्षाप्रधानोयं मन्त्रः ॥ लक्षजपः ।

अथ पूजायां मण्डलविधानमुच्यते —

हृल्लेखान्तस्थसाध्यं दहनपुरयुगाश्रस्थमन्त्रार्णमन्तः
सिंहानुष्टुप्चतुर्वर्णकलसितदलाढ्यं कलाकेसरं च ।
वृत्तोद्यद्व्यञ्जनावेष्टितमवनिपुराश्रस्थचिन्तोपलं त-
द्यन्त्रं रक्षःपिशाचामयविपरिपु(वि)ध्वंसनं नारसिंहम् ॥

अस्यार्थः —षट्कोणं विलिख्य तन्मध्ये भुवनेशीं विलिखेत् । तदन्तः साध्यनामादीन् विलिखेत् । षट्कोणेषु नृसिंहषडक्षरीमन्त्रवर्णान् विलिखेत् । बहिरष्टदळं विलिख्य तत्केसरेषु कलाद्वन्द्वं विलिखेत् । तन्मध्ये नृसिंहानुष्टुभो वर्णान् चतुरश्चतुरो विलिखेत् । बहिः कादिलिपिभिः वेष्टयेत् । तद्बहिः चतुरश्रकोणेषु चिन्तामणिं सप्तविंशपटले वक्ष्यमाणं विलिखेत् । अस्मिन् यन्त्रमण्डले दीक्षाकलशं क्षीरद्रुमचर्मकाथोदकैः संपूर्य वैष्णवपीठं संपूज्य तस्मिन्नावाह्य नृहरिं समर्चयेत् । अङ्गैः प्रथमावृतिः । चक्राय० शङ्खाय०

पाशाय० अंकुशाय० कुलिशाय० गदायै० कृपाणाय० खेटाय० ८ कृपाणखेटौ तु ययोः करयोः दारुणमुद्रे तयोः करयोरित्यभिप्रायः। इति द्वितीयावृतिः। तत्र दारुणमुद्रा—हिरण्यकशिपुवक्षस्स्थलविदारणेन सर्वतो विस्तृताः करयुगळांगुलयो दारुणमुद्रेत्युच्यते। इन्द्रादिभिस्तृतीया। वज्रादिभिश्चतुर्थी। एवं संपूज्य पुनरमिपिश्चेदुक्तसंख्यं जपेच। केवलघृतेन षट्सहस्रं पुरश्चरणाहोमः॥

अथ प्रयोगः—

खरमञ्जरीसमिद्धं जुहुयादथ मञ्जरीसहस्रतयम्।
प्रस्नातपञ्चगव्यं सप्तदिनं भूतशान्तये मन्त्री॥

अस्यार्थः — खरमञ्जरी अपामार्गम्॥ तस्या मञ्जरीः पञ्चगव्ये सिक्त्वा सप्तदिनं सहस्रशो हुनेत्। मन्त्रजप्तपञ्चगव्यं प्राशयेच। तेन पैशाचनिवृत्तिः॥

अथ प्रयोगान्तरम्—

छिन्नरुहां समिधां त्रिसहस्रं यश्च जुहोति चतुर्दिनमात्रम्।
दुग्धयुतं नचिरान्मनुजानां होमविधिर्ज्वरशान्तिकरः स्यात्॥

अस्यार्थः — छिन्नरुहसमिधा गुळवेळ (சீந்தில்) चतुर्दिनं नित्यशः त्रिसहस्रं दुग्धसिक्तं हुनेत्। ज्वरशान्तिर्भवेत्॥

प्रयोगान्तरम्—

रक्तोत्पलैः प्रतिदिनं मधुरत्रयाक्तैः
यो वा जुहोति नियमेन सहस्रसंख्यैः।
मासेन वाञ्छितमवाप्स्यति मन्त्रजापी
स्याद्वत्सरेण धनधान्यसमृद्धगेहः॥

अयमर्थः — रक्तोत्पलं—रक्तोत्पलमेव (செங்கழுநீர் பூ) मधुरत्रय-

सिक्तैः त्रिसहस्रं नित्यशो मासं हुनेत् । अभीष्टं लप्स्यति । वत्सरमेवं हुते धनधान्यसमृद्धो भवति ॥

प्रयोगान्तरम् —

आरक्तैस्तरणिसहस्रकं प्रफुल्लैरम्भोजैस्त्रिमधुरसंयुतैर्जुहोतु ।
लक्ष्मीः स्यादतिमहती महत्तथायुः संप्राप्या सकलजगत्प्रियश्च भूयात् ॥

अयमर्थः — रक्तकमलैः त्रिमधुरसिक्तैर्द्वादशसहस्रं जुहुयात् । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम् —

लाजाभिस्त्रिमधुरसंयुताभिरह्नोमासार्धं प्रतिजुहुयान्मुखे सहस्रम् ।
कन्यार्थी प्रतिलभते वरोऽथ कन्यां कन्या वा भवति वरार्थिनी वराढ्या ॥

अयमर्थः — अर्धमासमह्नो मुखे उदयकाले नित्यशः सहस्रसंख्यं त्रिमधुरसिक्ताभिः लाजाभिः कन्यार्थी वरो वा वरार्थिनी कन्या वा हुनेत् । उभयोरपि इतरेतरसिद्धिः ॥

प्रयोगान्तरम् —

तिलैस्सराजीखरमञ्जरीसमिद्धविर्घृतैश्च द्विसहस्रसंख्यैः ।
प्रजुह्वतो नैव रुजो ग्रहोद्भवाः न चाभिचारक्षतिरस्य जायते ॥

अस्यार्थः — राजी-கடுகு खरमञ्जरी-आघाडा । तिलैः सर्षपैः खरमञ्जर्या च हविषा घृतेन प्रत्येकं द्विसहस्रं हुनेत् । ग्रहदोषरोगाश्च आभिचारव्याधयश्च न भवन्ति ।

प्रयोगान्तरम् —

दशाधिकशतैः पयोघृतयुतैश्च दूर्वात्रयैः
हुनेद्दिनमुखे विभुं नरहरिं विचिन्त्यानले ।
अवाप्य स तु दीर्घमायुरखिलैर्विमुक्तो गदैः
सुखी भवति मानवो निजकळत्रपुत्रादिभिः ॥

अयमर्थः — सहस्रसंख्यं पयोघृतसिक्तैः दूर्वात्रिकैर्हुनेदिति ॥

इति गीर्वाणेन्द्रविरचिते प्रपञ्चसारसारसङ्ग्रहे
त्रयोविंशः पटलः ॥



# अथ चतुर्विंशः पटलः ॥

अथ नृसिंहमन्त्रप्रसङ्गात् कल्पान्तरोक्तनृसिंहमन्त्रान्तरमुच्यते —

नरसिंह महासिंह ज्वालामालानलानन ।
रोगानशेषान्सर्वेश खाद खादाऽग्निलोचन ॥

इति मन्त्रः । अनुष्टुब्वदङ्गऋष्यादि ॥

अथ नृसिंहमन्त्रप्रसङ्गात् कल्पान्तरोक्तं नृसिंहसन्ध्यावन्दनमत्र योग्यतावशाल्लिख्यते —

शिवं गुरुं गणेशं च प्रणम्य परदेवताम् ।
करोमि नृहरेस्सम्यक् मन्त्राराधनपद्धतिम् ॥

तत्र श्रीमान्साधकेन्द्रः ब्राह्मे मुहूर्ते उत्थाय, प्रक्षालित पाणिपादमुखः प्राङ्मुख उदङ्मुखो वा उपविश्य, गुर्वादिवन्दनपूर्वकं प्राणानायम्य सकलीकृत्य देवतां ध्यायेत् । मनसा संपूज्य गतदिवसकृत्यं सर्वं भगवतः पादमूले समर्प्य तस्मिन्दिने करिष्यमाणस्यानुज्ञां लब्ध्वा नृसिंहस्तोत्रपुरस्सरं स्नानार्थं बहिर्निर्गत्यावश्यकशौचाचमनपूर्वकं अस्त्रेण मृदं खनित्वा, हृदयेनादाय, शिरसा जलशोधिते तीरे निधाय, शिखया शर्करादिकमुध्दृत्य, कवचेन त्रेधा विभज्य, नेत्रेण निरीक्ष्य, तत्रैकेन भागेन पाणिपादमुखानि प्रक्षाळ्य, अपरेण सर्वाङ्गान्यालिप्य निमज्य, मूलं शक्तितोऽनुसन्धाय, तीरमागत्य, अपरमृद्भागं त्रेधा विभज्य, अस्त्राङ्गमूलैरभिमन्त्र्यास्त्रजप्तं दिक्षु रक्षार्थं निक्षिप्य, अङ्गजप्तं हृदयाद्यङ्गेषु विन्यस्य, मूलजप्तं हृदयेनादाय, तीर्थनमस्कारपूर्वकं जले अवतीर्य, तां मृदं जले मूलेनालोड्य नरसिंहतीर्थरूपं तज्जलं ध्यात्वा निमज्य, मूलमष्टकृत्व आवर्त्य, तीरमागत्यास्त्रप्रोक्षितं वासः परिधाय, वैदिकसन्ध्यावन्दनानन्तरं नृसिंहसन्ध्यावन्दनमुपासीत ॥ तद्यथा —

गुर्वादिवन्दनपूर्वकं सकलीकृत्यात्मानं नृसिंहरूपं ध्यात्वा, मूलास्त्रमन्त्राभ्यां जलमभिमन्त्र्य, शिरसा धेनुमुद्रां प्रदर्श्य, शिखया गालिनीमुद्रां प्रदर्श्य, धेनुगालिनीमुद्रे पूर्वं सप्तमे पटले पूजासामान्यविधौ प्रोक्ते। पुनः कवचेनावकुण्ठ्य, नेत्रेण निरीक्ष्यास्त्रेण दिशो बध्वा, तज्जलं हृदयेनादाय, प्रणवेन वामहस्ते निधाय, तदंगुळीविवरनिस्सृतेन जलेन समूलेन शिरसि सप्तवारं मार्जयित्वा, शेषं जलं दक्षिणहस्तेन संगृह्य वामनासापुटमानाय्य देहान्तरिडया प्रविश्य, अस्त्रमन्त्रं जपन् —

महापातकपश्चाङ्गं पातकोपाङ्गसंमितम् ।
उपपातकरोमाणं कुक्षिस्थं पापपूरुषम् ॥

शोधयित्वा दक्षिणेन नासापुटेन दक्षिणहस्ते विरेचयन् पापपूरुषं तत्र समागतकज्जलाभं ध्यात्वा, पुरःकल्पितवज्रशिलायां चूर्णीकुर्यात्। इत्यघमर्पणविधिः ॥

ततो हस्तं प्रक्षाळ्य मूलजप्तजलेन त्रिवारं प्राश्य, प्रणवेनाङ्गानि संमृज्याञ्जलिनार्घ्यं गृहीत्वा नृसिंहगायत्रीमुच्चार्य सूर्यमण्डलस्थिताय नृसिंहगायत्र्या त्रिवारमर्घ्यं दत्वा, वर्णपदपादमूलव्यूहस्तुतिमन्त्रैः सकृत्सकृत् सन्तर्प्य,दशवारं गायत्रीं नारसिंहीं संजप्य जप समर्प्य, मालामन्त्रेणोपस्थाय, पूर्ववदाचम्य उपसंहरेत् इति सन्ध्यावन्दनविधिः ॥

ओं नृसिंहाय विद्महे वज्रनखाय धीमहि ।
तन्नः सिंहः प्रचोदयात् ॥ *इति नृसिंहगायत्री ॥

अस्य नृसिंहगायत्रीमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः। नृसिंहो देवता। इदं तु सन्ध्यात्रयेऽपि समानम्। अत एवोक्तं परमेश्वरेण —

सन्ध्यालोपो न कर्तव्यः शंभोराज्ञैवमेव हि ।

* वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो नारसिंहः प्रचोदयात् ॥ इति वैदिको नृसिंहगायत्रीमन्त्रः ॥

दीक्षितः सन्ध्यया हीनो न दीक्षाफलमश्नुते ॥ इति ॥

अथ नृसिंहसन्ध्यावन्दनप्रसङ्गात् नृसिंहभस्मस्नानविधिरपि अत्र योग्यतावशाल्लिख्यते —

ब्रह्मायशेषगुरुपारंपर्यक्रमेण स्वगुरुनाथ पादाम्बुजं यावत्तावत्प्रणौमि इति गुरुं नत्वा, गणपतिदुर्गादीनपि वन्देत । सुदर्शनेन तालत्रयदिग्बन्धनादीनपि कृत्वा । [1] हहहहः सैं ह्स्रौः इति मन्त्रोदयं कृत्वा, ओं ह्रीं क्ष्रौं हंसः, उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । ओं ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्धय बन्धय [2] खादय खादय (घातय घातय) हुंफट्, नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्, ओं सहस्रार हुंफट्, क्ष्म्यूं, नमः शिवाय, क्षिप ओं स्वाहा, सोहं क्ष्रौं ह्रीं इति मूलमुच्चार्य, दक्षिणनाड्या नववारं रेचकं विधाय, अष्टादशवारं इडया मूलमापूर्य, षट्त्रिंशद्वारं कुम्भकं कृत्वा, मूलमन्त्रेण व्याप्य, पों नमः परायेत्यादीनि पञ्चतत्वानि पञ्चस्थानेषु विन्यस्य, कोपतत्वेन च व्याप्य, वैष्णवपीठन्यासं कृत्वा, पञ्चोपचारैर्मानसपूजां कृत्वा, मूलेन प्राणायामं कृत्वा, तच्चैतन्यमञ्जलौ संगृह्य मूलेन करतळपृष्ठानि व्याप्य, नृसिंहाऽघोर-सुदर्शनानां पृथक् पृथक् करन्यासं कुर्यात् ॥

उग्रं वीरं अंगुष्ठाभ्यां० महाविष्णुं तर्जनीभ्यां० ज्वलन्तं सर्वतोमुखं मध्यमाभ्यां० नृसिंहं भीषणं भद्रं अनामिकाभ्यां० मृत्युमृत्युं कनिष्ठिकाभ्यां० नमाम्यहं करतलकरपृष्ठाभ्यां० स्फुर स्फुर अंगुष्ठाभ्यां इत्यादि । आचक्राय स्वाहा अंगुष्ठाभ्यां इत्यादिना च करन्यासं कृत्वा मूलेन सकृद्व्याप्य, एतेषां मन्त्राणां पृथक् पृथक् अङ्गानि विन्यसेत् उग्रं वीरं इत्यादि ॥

---

१. हहह ह्स्रौः इति ख, ग, घ, ङ, मातृकापाठः ।

२. घातय घातय इति ख, ङ मातृकापाठः ।

ह्रीं स्फुर स्फुर हृदयाय० प्रस्फुर प्रस्फुर शिरसे० घोरघोरतरतनुरूप शिखा० चट चट प्रचट प्रचट कवचाय० कह कह वम वम नेत्रं० बन्धय बन्धय खादय खादय (घातय घातय) हुंफट् अस्त्रम् ॥ आचक्राय स्वाहेत्यादि। तत्तदङ्गान्ते ऋषिछन्दोदेवता न्यसेत् ॥

ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। श्रीनारसिंहो देवता। अघोर ऋषिः। त्रिष्टुप् छन्दः। अघोररुद्रो देवता। अहिर्बुध्न्य ऋषिः। अनुष्टुप् छन्दः। सुदर्शनो महाविष्णुर्देवता। जान्वोरासक्त इत्यादि, कालाभ्राभं इत्यादि, अध्याद्भास्कर इत्यादि ध्यात्वा, मूलेन द्वादशवारं वा एकपञ्चाशद्वारं वा जप्त्वा, अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्। अर्कस्त्रिधातू रजसो विमानो जस्रो धर्मो हविरस्मि नाम॥ इति भस्म आदाय, अग्निरिति भस्म। जलमिति भस्म। स्थलमिति भस्म। व्योमेति भस्म। सर्वं ह वा इदं भस्म। मन इत्येतानि चक्षूंषि भस्मानीति भस्माभिमन्त्र्य, शन्नो देवीरिति भस्मनो दोषानपास्य, पञ्चाक्षरेण पञ्चवारं भस्माभिमन्त्र्य, पञ्चाक्षरेण भस्मना सकृद्व्याप्य, भस्मना पञ्चाक्षरस्याक्षरन्यासं पञ्चतत्वस्थानेषु न्यस्य, मूलेन भस्मना सकृद्व्याप्य ॥

उग्रं वीरं महाविष्णुं ऋक्पृथिव्यात्मने नमः। ज्वलन्तं सर्वतोमुखं यजुरन्वात्मने० नृसिंहं भीषणं भद्रं सामाग्न्यात्मने० मृत्युमृत्युं नमाम्यहं अथर्वाङ्गिरसवाय्वात्मने० उग्रं वीरं + नमाम्यहं इतिहासपुराणाभ्यां प्रणवात्मने नमः इति पादनाभिहृत् नेत्रशिरस्सु भस्मना करद्वयेन न्यस्य, उग्रं वीरं + नमाम्यहं इति पादादिशिरोन्तं व्याप्य, ओं उग्रनारसिंहाय नमः। ओं क्रुद्धनारसिंहाय नमः। ओं वीरनारसिंहाय नमः। ओं विलंबनारसिंहाय नमः। ओं कोपनृसिंहाय नमः। इति शिरोनासिकाहृज्जानुपादेषु करद्वयेन भस्मना न्यस्य, नृसिंहमन्त्रेण केशादि व्याप्य, ओं उग्रं नमः, ओं वीरं नमः ओं महाविष्णुं नमः, ओं ज्वलन्तं नमः, ओं सर्वतोमुखं नमः, ओं नृसिंहं

नमः, ओं भीषणं नमः, ओं भद्रं नमः, ओं मृत्युमृत्युं नमः, ओं नमामि नमः, ओं अहं नमः, इति शिरो-ललाट-नेत्रद्वय-मुख-कण्ठ-हृन्नाभि-कटि-जानु-जङ्घा-पादेषु, भस्मना पदानि न्यसेत् ॥

नृसिंहेन व्याप्य, ओं उं ओं नमः इत्यादिना नृसिंहा(ष्टमन्त्रा)क्षरेण,

सशिरोललाटदृग्युगमुखकरपदसन्धिकेषु साग्रेषु ।
उदरहृद्गोगलपार्श्वेष्वपरे ककुदि क्रमान्न्यसेद्वर्णान् ॥

ओं ह्रीं स्फुर स्फुर ओं नम इत्याद्यघोरैकादशपदानि, शिरो-ललाट-(नेत्रद्वय) मुख-कण्ठ-हृन्नाभि कट्यूरु-जानु जङ्घा-पादेषु न्यस्य, सुदर्शना-(न मन्त्रा) क्षराणि, शिरो-वदन-हृद्गुह्य जानु-पादेषु न्यस्य, वामहस्ते भस्म निधाय; ओं ह्रीं क्ष्रौं हंसः साध्यमुच्चार्य पालय पालय उग्रं वीरं + मुखं, ओं ह्रीं स्फुर + हुंफट्, नृसिंहं भीषणं भद्रं, मम त्वग्गतमृत्युं नाशय नाशय, मृत्युमृत्युं नमाम्यहं, ओं सहस्रार हुंफट्, क्ष्म्यौं, (ग्रूं ग्रूं ओं) नमः शिवाय, क्षिप ओं स्वाहा, सोहं क्ष्रौं ह्रीं ओं ॥ इति तद्भस्म दक्षिणहस्तेन स्पृष्ट्वाऽभिमन्त्र्य, अं अच्युताय रोगनाशनाय हरये अमृताय नमः, सं अनन्ताय रोगनाशनाय अमृताय नमः, ठं अमृताय रोग० अमृताय नमः, एं गोविन्दाय रोग० अमृताय नमः, वं विष्णवे रोग० अमृताय नमः, इति पञ्चामृतमन्त्रेण भस्मना व्यापयेत् । नृसिंहाक्षरन्यासं च अघोरपदन्यासं च सुदर्शनाक्षरन्यासं च भस्मना विधाय, मूलेन साध्यनामसहितं असृग्गतमिति भस्मनाभिमन्त्र्य पञ्चामृतेन व्यापयेत् । एवमेव मांसगत मेदोगतास्थिगत-मज्जागत शुक्रगत सर्वगत इत्यूह्यम् ॥

पञ्चाक्षरेण भस्मना व्याप्य, पञ्चाक्षराणि विन्यस्य पञ्चाक्षरेण व्याप्य, मूलेनाभिमन्त्र्य जलेनालोड्य, अग्निरित्यादिसप्तभिर्मन्त्रैः शिरो-ललाट हृदय दक्षांस वामांस पृष्ठ ककुत्सु त्रिपुण्ड्रं कृत्वा, योगनृसिंहभावेन स्थित्वा,

मूलं सकृत् जप्त्वा, नृसिंहाघोरसुदर्शनानां करन्यासाङ्गन्यासऋषिछन्दोदेवताङ्गन्यासानि च विधाय, तालत्रयदिग्बन्धनाग्निप्राकारेण रक्षां कुर्यात् इति भस्मस्नानविधिः ॥

अथाघोरपदन्यासः —

कद्दगास्यकण्ठहृन्नाभ्यंधूरुजानुजङ्घयोः पदयोः ॥

नृसिंहपदन्यासः ॥

के फालनेत्रास्यकण्ठहृत्सु न्यसेच नाभौ कटिजानुपत्सु ॥

नृसिंहाघोरसुदर्शनानां ऋषिछन्दोदेवतापडङ्गानि न्यस्त्वा ध्यात्वा मन्त्रत्रयमपि जपेत् ॥ अतीव रक्षाकरं भवति ॥

अथ लक्ष्मीनृसिंहमन्त्रविधानं मन्त्रदेवताप्रकाशिकोक्तमत्र लिख्यते —

ब्रह्मा ऋषिः। अतिछन्दः। लक्ष्मीनृसिंहो देवता। श्रीं बीजम्। ह्रीं शक्तिः। श्रां हृत्। श्रीं शिरः। इत्याद्यङ्गानि ॥ ध्यानम् —

वामाङ्कस्थश्रिया युक्तं चक्रशङ्खाब्जधृक्करम्।
पीताम्बरं सर्वभूपं प्रसन्नं नृहरिं भजे ॥

ओं श्रीं ह्रीं जय जय लक्ष्मीप्रियाय नित्यप्रमुदितचेतसे लक्ष्मीश्रितार्धदेहाय श्रीं ह्रीं नमः ॥ इति मन्त्रः। अष्टोत्तरसहस्रजपः। मधुक्तमल्लिकापुष्पैः सहस्रं होमः ॥

अथ पूजा —

वैष्णवपीठे समावाह्य समर्चयेत्। अङ्गैः प्रथमावृतिः। भास्वर्यै० भास्कर्यै० चिन्तायै० द्युत्यै० उन्मीलिन्यै० श्यामायै० कान्त्यै० रुच्यै० ८ इति शक्तिभिः द्वितीया। लोकेशैस्तृतीया। वज्रादिभिः चतुर्थी ॥

अथ सुदर्शननारसिंहमन्त्रः तत्रैवोक्तो लिख्यते —

जयन्तो दूर्वासा ऋषिः । जगती छन्दः । सुदर्शननृसिंहो देवता । श्रौं बीजम् । स्वाहा शक्तिः । चक्रराजाय, ज्वालाचक्राय, जगच्चक्राय, असुरान्तकचक्राय, महासुदर्शनचक्राय, एभिः स्वाहान्तैः पञ्चाङ्गानि । ध्यानम् —

चक्राब्जासनमध्यस्थं कालाग्निसदृशप्रभम् ।
चतुर्भुजं विकासास्यं चतुश्चक्रधरं हरिम् ॥

योगपट्टपिनद्धाङ्गं त्रिणेत्रं चोग्रविग्रहम् ।
ध्यायेत्समस्तदुःस्वप्नमशोकद्रुममूलतः ॥

ओं सहस्रार ज्वालावर्तिने श्रौं हन हन हुंफट् स्वाहा ॥ इति मन्त्रः । द्वादशलक्षजपः । आज्येन चतुश्चत्वारिंशत्सहस्रं होमः । रक्षाजयप्रधानोयं मन्त्रः । अथ पूजा —

पूर्वोक्तपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । जयायै० विजयायै० अजितायै० अपराजितायै० ४ इति दिक्षु, मोहिन्यै० ह्लादिन्यै० मायायै० सिध्यै० ४ इति विदिक्षु, पुरतः भटावर्चयेत् ॥

धृतमुद्गरपाशौ तौ कृष्णौ भासितदंष्ट्रकौ ।
इति द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी । अथ यन्त्रम् —

दशदलं पद्मं विरचय्य, तत्र कर्णिकायां प्रणवोदरे हनहनशब्दं विलिख्य, तस्योदरे शत्रुनाम विलिख्य, दशदलेषु मन्त्राक्षराणि द्वन्द्वशो विलिख्य, तद्बाह्ये षट्कोणं विलिख्य, कोणेषु नृसिंहैकाक्षरं विलिख्य, तद्बाह्ये ज्वालापरिवृतं त्रिकोणं विलिख्य (विलिखेत् ॥) एतद्यन्त्रं जपहोमादिसाधितं समस्तशत्रुनिवारणं सर्वरक्षाकरम् । अथ प्रयोगः —

ब्राह्मणो जयमिच्छेत कुशानास्तीर्य भूतले ।
तस्मिन्देशे समाराध्य सुदर्शननृकेसरिम् ॥

मन्त्रं सहस्रमावर्त्य हुनेद्देवस्य सन्निधौ ।
सहस्रं मूलमन्त्रेण अपामार्गेण साधकः ॥

तद्भस्म तिलकं कृत्वा निर्गच्छेत् शत्रुसन्निधौ ।
दासवत्कुरुते शत्रून् स सद्यः किंकरो भवेत् ॥

अथ शत्रुमनुस्मृत्य तर्पणं वापि कारयेत् ।
तज्जस्त्रा हाटके पट्टे रचयित्वोक्तयन्त्रकम् ॥

तेनांगुलीयकं कृत्वा जपहोमादिसाधितम् ।
अयुतं जयमाप्नोति नात्र कार्या विचारणा ॥

अथौदुम्बरपीठे तु देवदेवं निधापयेत् ।
तस्याग्रे वर्तुले कुण्डे हुनेद्वै खादिरं समित् ॥

अयुतं गोघृताक्तैस्तु मध्वक्तैर्वा जितेन्द्रियः ।
जयमाप्नोति संवादे नित्यं परशुरामवत् ॥

अथ कल्पान्तरोक्तप्रकारेण लक्ष्मीनृसिंहमन्त्रो लिख्यते--

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । लक्ष्मीनृसिंहो देवता । ओं अं उग्रं वीरं महाविष्णुं शुक्लवर्णाय आनन्दात्मने हृत् । ओं उं ज्वलन्तं सर्वतोमुखं कृष्णवर्णाय तुर्यात्मने शिरः । ओं मं नृसिंहं भीषणं भद्रं पिङ्गलवर्णाय ज्योतिरात्मने शिखा । ओं ओं मृत्युमृत्युं नमाम्यहं हेमवर्णाय मायात्मने कवचम् । मूलमन्त्रमुक्त्वा सर्ववेदात्मकाय विद्युद्वर्णाय महाचक्रात्मने अस्त्रम् ॥

सत्यज्ञानसुखस्वरूपममलक्षीराब्धिमध्यस्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयवरान् बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहं भजे ॥

ओं ईं हं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं हं ईं ओं ॥ इत्यष्टत्रिंशदर्णो मन्त्रः ॥

अथास्य पूजा —

वैष्णवपीठे समावाह्य कर्णिकायां प्रणवसंपुटितं नृसिंहबीजं संभाव्य, तत्र मूर्तिं संभाव्य, तत्पुरतः ईशानादिक्रमेण अकार उकार मकारान् विभाव्य, तत्र ब्रह्मविष्णुमहेशान् समभ्यर्च्य, दक्षवामयोर्हंस इत्यक्षरद्वयं संभाव्य, तत्र सूर्याचन्द्रमसौ समभ्यर्च्य, एतत्सर्वं प्रणवेन वेष्टितं संभाव्य, तद्बहिः षट्पत्रं विभाव्य, तत्र आचक्राद्यङ्गमन्त्रैः एकविंशपटले सुदर्शनविधानोक्तैः समभ्यर्च्य, ईं इत्यन्तं मायया तद्वेष्ट्य, तद्बहिरष्टदलं विभाव्य, तत्र वासुदेवादयो दिक्षु, शान्तिश्रीसरस्वतीरत्यादयः विदिक्षु समर्च्य, ह्रीमिति बहिर्मायया तद्वेष्ट्य, बहिर्द्वादशदलं विभाव्य, तत्र वासुदेवद्वादशाक्षरीवर्णपूर्वकाणि धात्रादिद्वादशादित्यनामानि समभ्यर्च्य ह्रीं इति (अनेन) तद्वेष्टयेत् ॥

धात्रे नमः । अर्यम्णे नमः । मित्राय नमः । वरुणाय नमः । अंशाय नमः । भगाय नमः । विवस्वते नमः । इन्द्राय नमः । पूष्णे नमः । पर्जन्याय नमः । त्वष्ट्रे नमः । विष्णवे नमः ॥ १२ ॥ तद्बहिः षोडशदलं विभाव्य तत्र केशवादिषोडशमूर्तीः संपूज्य ईंकारेण तद्वेष्टयेत् । तद्बहिः द्वात्रिंशद्दलं संभाव्य, तेषु प्रणवसंपुटितैः उग्रं इत्यादिवर्णपूर्वकं ब्रह्मणे श्रीनृसिंहाय नमः । विष्णवे श्रीनृसिंहाय नमः । महेश्वरादि नृसिंहेत्यादि, पुरुषाय, ईश्वराय, सरस्वत्यै, श्रियै, गौर्यै, प्रकृत्यै, विद्यायै, ओंकाराय,

चतसृभ्योऽर्धमात्राभ्यो नमः। वेदेभ्यः साङ्गेभ्यः सशाखेभ्यो नमः। पञ्चाग्निभ्यो नमः। सप्तमहाव्याहृतीभ्यो नमः। अष्टभ्यो लोकपालेभ्यो नमः। अष्टभ्यो वसुभ्यो नमः। एकादशरुद्रेभ्यो नमः। द्वादशादित्येभ्यो नमः। अष्टभ्यो ग्रहेभ्यो नमः। पञ्चमहाभूतेभ्यो नमः। तत्र विशेषणस्य बहुवचनत्वेपि विशेष्यस्य नृसिंहस्य एकवचनत्वमेव ॥ कालाय नमः। मनवे नमः। मृत्यवे नमः। यमाय नमः। अन्तकाय नमः। प्राणाय० सूर्याय० सोमाय० विराट्पुरुषाय० जीवाय० सर्वस्मै० ३२ इति द्वात्रिंशन्नामानि ॥

तद्बहिर्भुवनेश्याऽऽवेष्ट्य, तद्बहिः भूपुरं संभाव्य, तत्र प्राग्भागे प्रणवसंपुटितान् ककाराद्यष्टौ वर्णानुक्त्वा अष्टभ्यो वसुभ्यो नम इति संपूज्य, दक्षिणभागे झकारादिधकारान्तान् तारसंपुटितानुक्त्वा एकादशरुद्रेभ्यो नम इति समभ्यर्च्य, पश्चिमे नकारादिपकारान्तान्प्रणवसंपुटितानुक्त्वा द्वादशादित्येभ्यो नम इति संपूज्य, उत्तरतस्सकारादिक्षकारान्तान् प्रणवसंपुटितानुक्त्वा विश्वेभ्यो देवेभ्यो नम इति संपूज्य, देवस्य पृष्ठभागे अनन्ताय नम इति, पूर्वभागे प्रह्लादादिभक्तेभ्यो नमः, सनकादिभ्यो नमः, नारदादिभ्यो नमः, सर्वेभ्यो देवेभ्यो नम इति, ऐशान्यें विष्वक्सेनाय नमः इत्येवं पूजाविधिः ॥

अथ प्रसङ्गात् लक्ष्मीनृसिंहमन्त्रान्तरं लिख्यते —

लक्ष्मीनृसिंहमन्त्रस्य ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। लक्ष्मीनृसिंहो देवता। ओं श्रीं बीजम्। स्वाहा शक्तिः। मम भोगमोक्षार्थे जपे विनियोगः। ओं श्रीं नमः हृत्। ओं भगवते शिरः। ओं लक्ष्मीनृसिंहाय शिखा। ओं महाविष्णवे कवचम्। ओं सकलदुरितनिवारणाय नेत्रम्। ओं हुंफट् स्वाहा अस्त्रम्। ओं नमस्सुदर्शनाय स्वाहा अस्त्रम् ॥

ओं श्रीं नमो भगवते लक्ष्मीनृसिंहाय महाविष्णवे सकलदुरितनिवारणाय हुंफट् स्वाहा ॥ ध्यानम् —

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्यस्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयवरान् बिभ्राणमच्छच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहं भजे ॥

लक्ष्मीनृसिंहमन्त्रान्तरम् —

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । लक्ष्मीनृसिंहो देवता । ओं श्रीं बीजम् । ओं नमश्शक्तिः । मम भोगमोक्षार्थे विनियोगः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि । नमः सुदर्शनाय स्वाहा अस्त्राय फट् । ओं श्रीं ह्रीं जय जय लक्ष्मीप्रियाय नित्यप्रमुदितचेतसे लक्ष्मीश्रितार्धदेहाय ह्रीं श्रीं ओं नमः ॥

चक्राब्जशङ्खासिगदान्दधानः प्रवालरश्मिः कमलां करेण ।
आश्लेषयन्नात्मसमानवर्णां भूयाद्विभूत्यै भवतां नृसिंहः ॥

लक्ष्मीनृसिंहमन्त्रान्तरम् —

संकर्षणभगवान् ऋषिः । गायत्री छन्दः । लक्ष्मीनृसिंहो विष्णुर्देवता । ओं क्षां हृत् । ओं क्षीं शिरः इत्याद्यङ्गानि । ओं नमस्सुदर्शनाय स्वाहा अस्त्राय फट् । *ओं श्रीं क्लैं हं ष्ट्रं स्रक्षं व्यूं क्षः फट् ओं नमः इति मन्त्रः ॥*

बिभ्राणं चक्रशङ्खौ सृणिमुसलगदापद्मपाशांश्च दोर्भिः
लक्ष्मीमन्येन गृह्णन् मदविवशदृशं सव्यभागोरुसंस्थाम् ।
फुल्लद्बन्धूकपुष्पद्युतियुतविनतानन्दनस्कन्धसंस्थः
चिन्त्यो युष्माभिरीशो नरहरिवपुषा दीर्घरक्तत्रिणेत्रः ॥

लक्ष्मीनृसिंहषडक्षरीमन्त्रस्य—संकर्षणभगवान् ऋषिः । गायत्री छन्दः । लक्ष्मीनृसिंहो देवता । ओं श्रीं बीजम् । ओं फट् शक्तिः । ओं ऐं हृत् । ओं क्लीं शिरः । ओं श्रीं शिखा । ओं ह्रीं कवचम् । ओं क्ष्ः नेत्रम् ओं फट् अस्त्रम् ।

ओं नमः सुदर्शनाय स्वाहा अस्त्रम् ॥ ऐंक्लींश्रींह्रींक्ष्रः फट् इति मन्त्रः ।

शङ्खचक्रवराभीतीर्दधानस्त्विष्टवल्लभः ।
श्वेतपीताम्बरधरश्चिन्त्यः पुरुषकेसरी ॥

लक्ष्मीनृसिंहाष्टादशाक्षरीमन्त्रस्य अत्रिर्भगवान् ऋषिः । अतिजगती छन्दः । लक्ष्मीनृसिंहो देवता । क्ष्रौं बीजम् । नमश्शक्तिः । क्षां हृत् । क्षीं शिरः इत्याद्यङ्गानि । ओं नमः सुदर्शनाय स्वाहा अस्त्रम् । ओं अनन्तगरुडस्थिताय लक्ष्मीनृसिंहाय नमः ॥

चक्रशङ्खगदाखड्गमुसलान् सृणिदामनी ।
धनं च बिभ्रत्पत्नीवान्ध्येयो रक्तो नृकेसरी ॥

अथ लक्ष्मीनृसिंहमन्त्रान्तरमुच्यते — विधिः प्रजापतिः ऋषिः । अतिजगती छन्दः। लक्ष्मीनृसिंहो देवता । ओं हृत् । क्लीं शिरः । ह्रीं शिखा । श्रीं कवचम् । क्ष्रौं नेत्रम् । लक्ष्मीनृसिंहाय सर्वात्मने सर्वैश्वर्यप्रदाय नमः अस्त्रम्। ध्यानम्—

शङ्खचक्रधरं देवं चतुर्भुजसमन्वितम् ।
प्रसन्नपद्म. शान्तं. यो(यो.)गासनसमन्वितम् ॥.

योगपट्टाहि(पट्टपि)नद्धाङ्गमवज्रे दक्षिणं पदम् ।
दक्षिणोपरि हस्तेन दक्षिणं जानुमाविशन् ॥

सव्याधःस्थितहस्तेन लक्ष्मीमालिङ्ग्य मोदयन् ।
सर्वलक्षणसंपन्नां सर्वाभरणभूषिताम् ॥

चतुर्भुजां प्रसन्नां च ऊर्ध्वाभ्यां पद्मधारिणीम् ।
अधराभ्यां मुदं धात्रीमन्योन्यं वीक्षमाणयोः ॥

एवं ध्यात्वा सहस्रं तु जपेन्मन्त्रं समाहितः ।
सर्वान्कामानवाप्नोति अन्ते कैवल्यमाप्नुयात् ॥

ओं क्लीं ह्रीं श्रीं क्ष्रौं लक्ष्मीनृसिंहाय सर्वात्मने सर्वैश्वर्यप्रदाय नमः इति मन्त्रः । उक्ताः सर्वेपि मन्त्राः ऐश्वर्यप्रधानाः ॥

अथ नृसिंहमन्त्रप्रसङ्गात् अघोरनृसिंहमिळितोपि मन्त्रः, कल्पान्तरोक्तोत्र योग्यतावशाल्लिख्यते —

अघोरब्रह्माणावृषी । अनुष्टुप्त्रिष्टुभौ छन्दसी । अघोरनृसिंहौ देवते । ओं ह्रीं क्ष्रौं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध बन्ध (बन्धय बन्धय) खादय खादय (घातय घातय) हुं फट् नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः ॥

अथ नृसिंहमन्त्रप्रसङ्गात् ज्वालानृसिंहमन्त्रोपि कल्पान्तरोक्तोऽत्र योग्यतावशाल्लिख्यते —

सङ्कर्षण ऋषिः । गायत्री छन्दः । ज्वालानृसिंहो देवता । क्ष्रौं बीजम् । हुं फट् स्वाहा शक्तिः । क्षां हृत् । क्षीं शिरः । इत्याद्यङ्गानि । ध्यानम् —

मध्येचक्रं महास्यं ज्वलदनलशिखाग्रस्तवेताळवर्ग-
स्फूर्जद्‌घोरारिजातप्रतिरसनपदे व्यग्रहस्तस्सुहन्ता ।
ध्येयोसामिस्समुद्यद्दिनकरसदृशस्त्रीक्षणस्तीक्ष्णदंष्ट्रः
संरम्भोद्धूतरोमा ध्वनिरचितमहाम्भोधिघोषो नृसिंहः ॥

ओं क्ष्रौं ज्रौं [1]सौः [2]ज्वालाज्वलज्जटिलमुखाय ज्वालानृसिंहाय लललल

१ मन्त्रादौ सौः इति चतुर्थोक्षरः न विद्यते ङ मातृकायाम् ।
२ ज्वालाज्वालाज्वलत् इति ख पाठः ।

गृह्ण गृह्ण स्फुट स्फुट स्फोटय स्फोटय मट मट मोटय मोटय लोटय लोटय भ्रम भ्रम भ्रामय भ्रामय वल वल चल चल वल्ग वल्ग गळ गळ गुळ गुळ गर्ज गर्ज *राज राजहंस राजहंस ज्वल ज्वल प्रज्वल प्रज्वल जल्प जल्प मथ मथ मर्दय मर्दय हुं हुं हूः सर्वदुष्टग्रहान् शिरोललाटचक्षुर्मुखोष्ठदन्ततालु जिह्वाहनुग्रीवा बाहुकरवक्षस्स्थलोदर नाभिगुह्यगुद पृष्ठ कट्यूरुजानु जङ्घागुल्फपादेषु सर्वाङ्गेषु छिन्धि छिन्धि भिन्धि भिन्धि त्रासय त्रासय मारय मारय ह्रूँ सहस्रार हुं फट् स्वाहा इति मन्त्रः ॥

अथ नृसिंहदशाक्षरीमन्त्र उच्यते—

श्रीनारदऋषिः । बृहती छन्दः । श्रीनृसिंहो देवता । क्ष्रौं बीजम् । ओं नमः शक्तिः । क्षां क्षीं इत्याद्यङ्गम् । ओं नमः सुदर्शनाय स्वाहा अस्त्रम् । ओं क्ष्रौं हुं फट् नृसिंहाय नमः । ध्यानम्—

सुसितं सिंहवदनं ऊर्ध्वाभ्यां चक्रशङ्खिनम् ।
अधःस्थिताभ्यां बाहुभ्यां धृतहेतिं भजेद्धरिम् ॥

अथास्य नृसिंहस्य कल्पान्तरोक्तं चक्रमन्त्रं (यन्त्रं) योग्यतावशात् लिख्यते —

षट्कोणस्थसुदर्शनं वसुदळप्रोल्लासदष्टाक्षरं
वाह्ये द्वादशवर्णपत्रकमलं तत्षोडशार्णच्छदम् ।
द्वात्रिंशन्मनुवर्णपत्रकमलं वृत्तोल्लसन्मातृकं
मध्योत्थध्रुवगुर्विबीजवलयं चक्रं नृसिंहात्मकम् ॥

अयमर्थः— प्रथमं षट्कोणं विलिख्य तेषु कोणेषु सुदर्शनं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य ग्लौं इत्यनेन प्रणवं संवेष्ट्य, तन्मध्ये

* राज राज हंस हंस इति ङ पाठः ।

साध्यनामादीन् विलिखेत् । पुनरष्टदळं पद्मं विलिख्य तेषु वैष्णवाष्टाक्षरं, तद्बाह्ये षोडशपत्रं विलिख्य, ओं नमो भगवते वासुदेवायेति विलिखेत् । तद्बहिः षोडशपत्रं विलिख्य, तेषु ओं नमो भगवते महासुदर्शनाय हुं फट् इति विलिखेत् । तद्बहिः द्वात्रिंशद्दळं विलिख्य, तेषु नृसिंहानुष्टुभं विलिख्य, मातृकावर्णैर्वेष्टयेदिति ॥

अथ नृसिंहमन्त्रप्रसङ्गात् नृसिंहस्य भूतावेशनकरणादिसामर्थ्यात् प्रयोगसारोक्तप्रकारेण दशविधभूतावेशप्रकारो विलिख्यते —

आवेशबन्धनविदारणशूलभेद-
च्छेदाङ्गदाहदमनक्रमणाऽक्षिवेधाः ।
हृत्तापनं च दशदण्डविधाः प्रसिद्धाः
तन्त्रेषु मन्त्रविहिता वृषकेतनेन ॥

ओं नमः पशुपतये ओं नमो भूताधिपतये ओं नमो रुद्राय नमः। ओं खड्गरावण विहर विहर नृत्य नृत्य श्मशानभस्मार्चितशरीराय घण्टाकपालमालाधराय व्याघ्रचर्मपरिधानाय शशाङ्ककृतशेखराय कृष्णसर्पयज्ञोपवीतिने ललाटवल्गद्बह्विवर्तितकपालिने *भूतान् त्रासय मण्डलमध्ये खड्गरुद्रांकुशेन समयं प्रवेशय प्रवेशय चण्डासिधाराधिपतिरुद्र आज्ञापयति स्वाहा ॥

भूतनाथस्य मन्त्रोयमाख्यातो मन्त्रनायकः ।
आवेशनादिकं कर्म कर्तव्यं तेन मन्त्रिणा ॥

ओं नमश्चण्डक्रोधाय रुद्राय तुरुमुरुं (तुरुतुरुमुरुमुरु) भूतसमये तिष्ठ स्वाहा ॥

तेनामन्त्र्य शिखाबन्धात् तिष्ठन्ति समये ग्रहाः ।
संस्थाप्यैवं ग्रहग्रस्तं शिखाबन्धेन मन्त्रवित् ॥

* हन भूतान् इति ख मातृकापाठः

वह्निवायुपुरान्तस्थं कृत्वा प्रथमपीडितम् ।
मन्त्रेणामन्त्रितं कृत्वा क्षिपेत् शुद्धोदकं मुखे ॥

तेनावेशं प्रयान्त्याशु ग्रहग्रस्तो यदि ध्रुवम् ।
भीतो मुञ्चति च क्षिप्रं ग्रहो मन्त्रानुभावतः ॥

रज्ज्वा तज्जप्तया स्तम्भे तरौ वा वेष्टयेत् दृढम् ।
तेन भीतो भवेद्भूतः निगृहीतश्च जायते ॥

पैष्टीं प्रतिकृतिं कृत्वा साध्यमावाह्य साधकः ।
क्षुरेण दारयेद्दक्षः क्षणान्मुञ्चति गुह्यकः ॥

तद्वत्प्रतिकृतिं कृत्वा वर्ष्म शूलेन भेदयेत् ।
साध्यमावाह्य मन्त्रेण ततो भीतः पलायते ॥

छेदयेत्प्रतिमां कृत्वा मन्त्रेणानेन मर्मसु ।
क्षतजं क्षरति क्षिप्रं मुच्यते विग्रहो ग्रहः ॥

क्षिप्त्वा प्रतिकृतिं वह्नौ कुण्डान्तः स्थण्डिलेऽपि वा ।
राजीसहस्रहोमेन दुष्टो दग्धो भवेद्ग्रहः ॥

मन्त्रेण ताडयेद्ग्रस्तं तिलैर्वा माषसर्षपैः ।
जप्तया वेत्रयष्ट्या वा चकितो मुञ्चति ग्रहः ।

मन्त्रेणानेन संजप्तैः सिद्धार्थैर्भ्रामयेद्भृशम् ।
क्रन्दमानस्तदान्यस्मिन्वाञ्छितं संक्रमेद्ग्रहः॥

भूम्यां निर्माय तद्बिम्बं ध्यात्वा मन्त्रेण चक्षुषोः ।
वेधयेत् खादिरं कीलं तत्क्षणात् क्षीयते ग्रहः ॥

धूपनस्याञ्जनालेपस्नानपानानि षड्विदुः ।

कर्माणि किल शस्तानि हृत्तापे भूतमुक्तये ॥

निर्गुण्डी तुळसीपत्रं देवताळी कटुत्रयम् ।
कटुकालाबुका चेति प्रोक्तैर्धूपो ग्रहापहः ॥

चतुर्जातकमङ्कोलं पञ्चमूलं निशाद्वयम् ।
वाकुचीसहितं नस्यं ग्रहघ्नं स्यात् शिवाम्भसा ॥

काकाण्डकू(पू)तिगन्धौ द्वौ गोमूत्रेणाञ्जयेत् दृशोः ।
दुष्टग्रहोपशान्तिः स्यात्पुराणाज्यमथापि वा ॥

अमृतापटोलीत्रिकटुत्रिफलानि मनश्शिला ।

विशालाभिर्गुहधूमलोध्रचन्दनसुरदारुभिरुद्वरेत् ग्रहान्लेपः ।

निम्बपत्रास्थिलशुनी(न)लेपस्सर्वग्रहापहः ।

चतुष्पथे मातृगृहे वने वा वीथ्यालये वा सरितस्तटे वा ।
निर्माल्यभूताम्बुकषायमूत्रगन्धैर्ग्रहास्स्नातमभित्यजन्ति ॥

रक्ताश्वमारं मधुकं मधूकं
वचां पिशाचीमपि देवताळीम् ।
पिबेच्च कूश्माण्डरसाजमूत्रे
व्यस्तानि च स्युर्ग्रहनिग्रहाय ॥

अस्यार्थः— कटुकालाबुका-कटुदूधभोपला பேச்சுரை. वाकुची-कारभोगाचें ताट्ठल கார்போகஅரிசி. शिवा-हिरडे கடுக்காய். लोध्र வெள்ளலொத்தி. निम्बपत्रास्थि-निम्बाच्याकाडया, வேப்பிலை ஆர்க்கு. मधुकं-अतिमधुरम् அதிமதுரம். चतुर्जातं-एलं, लवङ्गं, पत्रि, नागपू ஏலம், லவங்கம், பத்திரி, நாகப்பூ. विशाला பரும்பசலை. पिशाची-गन्धमांसी, சித்தமல்லி, பேறபமல்லி, சிறுவழுதலை, கனுக்கத்தாரி, சுக்கு.

अथ विष्णुपञ्जरविधानमुच्यते —

ब्रह्मबृहस्पती ऋषी । अनुष्टुप्त्रिष्टुभौ छन्दसी । विश्वरूपविष्णुर्देवता । ओं बीजम् । नमः शक्तिः । ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह हृत् । नमो जगत्प्रहृष्यत्यनुरज्यते च स्वार शिरः । नारा रक्षांसि भीतानि दिशो द्रवन्ति हुं फट् शिखा । यणा सर्वे नमस्यन्ति च सिद्धसंघाः य ओं कवचम् । एतैः समस्तैरस्त्रम् । मूलमन्त्रः । ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह नमो जगत्प्रहृष्यत्यनुरज्यते च स्वार नारा रक्षांसि भीतानि दिशो द्रवन्ति हुंफट् यणा सर्वे नमस्यन्ति च सिद्धसङ्घाः य ओं इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः । अस्य मन्त्रस्य जपसमये ध्यानमुच्यते --

अर्केन्दुवह्निनिलयस्फुरितत्रिमन्त्रशक्तिप्रवृद्धमहसः परमस्य विष्णोः ।
पादारविन्दगळितामृतसिक्तगात्रं साध्यं स्मरेज्जपविधावपि साधकेशः ॥

विष्णोस्सान्निध्यलब्धोल्लसितबलचलद्धस्तदण्डोद्यतास्त्रैः
चक्राद्यैर्भीषणास्येक्षणचरणवचोहासहुंकारघोरैः ।
उत्क्षिप्तक्षिप्तकृत्तस्फुटितविदळिताचूर्णितध्वस्तशान्तान्
ध्यायेद्वेताळभूतग्रहदुरितपिशाचारिनागादिरोगान् ॥

एतद्ग्रहवेताळपीडादौ ध्येयं ध्यानम् ॥

अथ विष्णुपञ्जरपूजाविधिः —

प्रथमं वैष्णवपीठं संपूज्य तस्मिन्समावाह्य तस्मिन् विश्वमूर्तिमेवं ध्यायेत् ।

अग्नीषोमात्मकमरिगदाशार्ङ्गसद्‍र्गस्सशङ्ख-
रुग्रद्राहुं हलमुसलशूलैस्सदण्डैस्सकुन्तैः ।

शक्त्या पाशांकुशकुलिशटंकाग्निभिश्चार्कवह्नि-
द्योतद्वक्त्रांभिकरसरसिजं तप्तकार्तस्वराभम् ॥

विष्णुं भास्वत्किरीटं मणिकनककटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासिदिव्याङ्गरागम् ।
विश्वाकाशावकाशप्रविततमयुतादित्यनीकाशमुद्य-
द्बाहुप्रव्यग्रनानायुधनिकरधरं विश्वरूपं नमामि ॥

अस्य विश्वरूपस्य मन्त्रः — ओं नमो भगवते महाविष्णवे वासुदेवाय विश्वरूप शरणं भव मे प्रभविष्णवे नमः । अनेन रक्षां कारयेत् । एवं विष्णुरूपं ध्यात्वा परिवारैस्सह समर्चयेत् ॥

प्रथमं मूलमन्त्रेण समर्च्य, पुनः वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० इति महादिक्षु, शान्त्यै० श्रियै० सरस्वत्यै० रत्यै० इति कोणेषु समर्चनीयाः ॥

चक्रं च चक्राङ्ककिरीटमौलिं सशङ्खचक्रं सगदं सशार्ङ्गम् ।
रक्ताम्बरं रक्ततनुं कराळदंष्ट्राननं प्राग्दळकेऽर्चयीत ॥

एवं चक्रमूर्तिं ध्यात्वा, प्राग्दळे अनेन वक्ष्यमाणेन चक्रमन्त्रेण समर्चयेत् । ओं विष्णवे चक्रिणे नमः ओं स्थाने हृषीकेश तव प्रकीर्त्या सह नमो, जगत्प्रहृष्यत्यनुरज्यते च स्वार नारा रक्षांसि भीतानि दिशो द्रवन्ति, हुं फट्, यणा, सर्वे नमस्यन्ति च सिद्धसङ्घाः, य, ओं ओं नमो भगवते वासुदेवाय विष्णवे चक्रमूर्ते मां रक्ष रक्ष चक्रमूर्तिधराय चक्रमूर्तिधरसेनाधिपतये महाचक्राय हुं फट् इति ॥

पुनः पूज्य —

गदागदाङ्कितमौळिः सगदासिचक्रशङ्खधनुः ।

पीताम्बरानुलेपापीताकुद्धा च याम्यसंस्थदळे ॥

एवं गदामूर्तिं ध्यात्वा अनेन गदामन्त्रेण समर्चयेत् दक्षिणे दळे— ओं विष्णवे गदिने नमः ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह नमो जगत्प्रहृष्यत्यनुरज्यते च स्तार नारा रक्षांसि भीतानि दिशो द्रवन्ति हुं फट् यणा सर्वे नमस्यन्ति च सिद्धसङ्घाः य ओं ओं नमो भगवते वासुदेवाय विष्णवे गदिमूर्ते मां रक्ष रक्ष गदिमूर्तिधराय गदिमूर्तिधरसेनाधिपतये महागदायै हुं फट् इति । पुनः —

श्यामं शार्ङ्गाङ्कितकं शार्ङ्गं शार्ङ्गारिदरगदाहस्तम् ।
रक्तांशुकालेपनमाल्यादिं वारुणे यजेत्पत्रे ॥

एवं ध्यात्वा शार्ङ्गमूर्तिमनेन मन्त्रेण यजेत्पश्चिमदळे । ओं विष्णवे शार्ङ्गिणे नमः ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह नमो जगत्प्रहृष्यत्यनुरज्यते च स्तार नारा रक्षांसि भीतानि दिशो द्रवन्ति हुं फट् यणा सर्वे नमस्यन्ति च सिद्धसङ्घाः य ओं ओं नमो भगवते वासुदेवाय विष्णवे शार्ङ्गमूर्ते मां रक्ष रक्ष शार्ङ्गमूर्तिधराय शार्ङ्गमूर्तिधरसेनाधिपतये महाशार्ङ्गाय हुं फट् इति ॥ पुनः,

खड्गं सखड्गशिरसं खड्गारिगदाधनुष्करम् ।
धूम्रं विकृताम्बरानुलेपस्रजं समर्चयेदुदक्पत्रे ॥

एवं ध्यात्वा अनेन खड्गमन्त्रेण उत्तरदळे समर्चयेत् । ओं विष्णवे खड्गिने नमः । ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या इत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे खड्गमूर्ते मां रक्ष रक्ष खड्गमूर्तिधराय खड्गमूर्तिधरसेनाधिपतये महाखड्गाय हुं फट् इति ॥ पुनः,

शङ्खं सशङ्खशिरसं शङ्खारिगदाधनुष्करं सुसितम् ।

सितवसनमाल्यभूषं यजेन्महानादमग्निसंस्थदळे ॥

एवं ध्यात्वा शङ्खमूर्तिमाग्नेयदळे अनेन मन्त्रेण समर्चयेत् ॥ ओं विष्णवे हृषीकेशाय नमः ओं ओं स्थाने हृषीकेश तव प्रकीर्त्येत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे शङ्खमूर्ते मां रक्ष रक्ष शङ्खमूर्तिधराय शङ्खमूर्तिधरसेनाधिपतये महापाञ्चजन्याय स्वाहा इति ॥

पुनः, हलमूर्तिमपि हलायुधाय धराय धरं च शङ्खमूर्तेरुक्तचिह्नोपेतं चतुर्भुजं च ध्यात्वा निर्ऋतिदळे अनेन मन्त्रेण हलमूर्तिं संयजेत् ॥

ओं विष्णवे हृषीकेशाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे हलमूर्ते मां रक्ष रक्ष हलमूर्तिधराय हलमूर्तिधरसेनाधिपतये महाहलाय स्वाहा इति ॥

पुनः, मुसलमूर्तिमपि मुसलायुधधरं च हलमूर्तेरुक्तचिह्नोपेतं चतुर्भुजं च ध्यात्वा, वायव्यदळे अनेन मन्त्रेण समर्चयेत् ॥

ओं विष्णवे हृषीकेशाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे मुसलमूर्ते मां रक्ष रक्ष मुसल मूर्तिधराय मुसलमूर्तिधरसेनाधिपतये महामुसलाय स्वाहा इति॥

पुनः शूलमूर्तिमपि शूलधरं च मुसलमूर्तेरुक्तचिह्नोपेतं चतुर्भुजम् च ध्यात्वा अनेन मन्त्रेण ऐशान्ये दळे समर्चयेत् ॥

ओं विष्णवे हृषीकेशाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे त्रिशूलमूर्ते मां रक्ष रक्ष त्रिशूलमूर्तिधराय त्रिशूलमूर्तिधरसेनाधिपतये महाशूलाय स्वाहा इति ॥

पुनः दण्डाद्यायुधान् ध्यात्वा अन्तराळदळेषु क्रमेण समर्चयेत् । तदुच्यते —

ओं विष्णवे जनार्दनाय नमः । ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे दण्डमूर्ते मां रक्ष रक्ष दण्डमूर्तिधराय दण्डमूर्तिधरसेनाधिपतये महादण्डाय नमः इति प्रथमावान्तरदले समर्चयेत् ॥

ओं ओं विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे कुन्तमूर्ते मां रक्ष रक्ष कुन्तमूर्तिधराय कुन्तमूर्तिधरसेनाधिपतये महाकुन्ताय नमः इति द्वितीयावान्तरदले,

पुनः विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे शक्तिमूर्ते मां रक्ष रक्ष शक्तिमूर्तिधराय शक्तिमूर्तिधरसेनाधिपतये महाशक्तये नम इति तृतीयावान्तरदले,

पुनः ओं विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे पाशमूर्ते मां रक्ष रक्ष पाशमूर्तिधराय पाशमूर्तिधरसेनाधिपतये महापाशाय नमः इति चतुर्थेऽवान्तरदले,

पुनः ओं विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे अंकुशमूर्ते मां रक्ष रक्ष अंकुशमूर्तिधराय अंकुशमूर्तिधरसेनाधिपतये महांकुशाय नमः इति पञ्चमेऽवान्तरदले,

पुनः ओं विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे कुलिशमूर्ते मां रक्ष रक्ष कुलिशमूर्तिधराय कुलिशमूर्तिधरसेनाधिपतये महाकुलिशाय नमः इति षष्ठेऽवान्तरदले,

पुनः ओं विष्णवे जनार्दनाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे परशुमूर्ते मां रक्ष रक्ष

परशुमूर्तिधराय परशुमूर्तिधरसेनाधिपतये महापरशवे नमः इति सप्तमेऽवान्तरदळे ॥

पुनः ओं विष्णवे जनार्दनाय नमः ओं ओं, स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे शतमुखवह्निमूर्ते मां रक्ष रक्ष शतमुखवह्निमूर्तिधराय शतमुखवह्निमूर्तिधरसेनाधिपतये महाशतमुखवह्नये नमः इति अष्टमेऽवान्तरदळे समर्चयेत् ॥

एतास्तु दण्डाद्यष्टमूर्तयो रक्ताभाश्चतुर्भुजाः स्वस्वायुधधराश्च ध्येयाः। पुनश्चक्रासिबाणगदादर(खेट,शार्ङ्गशक्त्याख्यकान् दधतं दंष्ट्राग्रलग्नवसुधं सजलाम्बुवाहघोरत्विषं महावराहमधस्तात् ध्यात्वा अनेन मन्त्रेण समर्चयेत् ॥

ओं विष्णवे क्रोडरूपिणे नमः ओ ओ स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे पोत्रोद्धृतधराय वराहमूर्ते मां रक्ष रक्ष वराहमूर्तिधराय वराहमूर्तिधरसेनाधिपतये महावराहाय नमः। इति॥

पुनः, अर्कानलोज्ज्वलमुखं नयनैस्त्रिभिश्च वह्नीन् वमन्तमपि धूतसटाकलापम्। शुक्लाभ्रभूपमरिशङ्खगदासिबाहुं नृसिंहं स्थले ध्यात्वा अनेन वक्ष्यमाणेन मन्त्रेण समर्चयेत् ॥

ओं विष्णवे नृसिंहाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे नखदलितरिपुविग्रहाय नृसिंहमूर्तिधराय नृसिंहमूर्तिधरसेनाधिपतये महानरसिंहाय नमः इति ॥ पुनः,

समग्रबलमुग्रतनुं स्वपक्षविक्षेपविक्षतविलक्षविपक्षपक्षं खण्डाग्रतुण्डमण्डजदण्डनाथं च पक्षिराजमग्रे ध्यात्वा अनेन वक्ष्यमाणमन्त्रेण अग्रे समर्चयेत् ॥

ओं विष्णवे पक्षिराजाय नमः ओं ओं स्थाने हृषीकेशेत्यादि य ओं इत्यन्तं ओं नमो भगवते वासुदेवाय विष्णवे महापक्षिराजाय गरुत्मते

हरिवाहनाय प्राणात्मने गरुडमूर्ते मां रक्ष रक्ष गरुडमूर्तिधराय गरुडमूर्तिधर-सेनाधिपतये महागरुडाय नमः ॥ इत्यग्रे समर्चयेत् ॥

न्यासस्तु क्रियते चेत् एतावत्पर्यन्तमुक्तैर्मन्त्रैरुक्तेष्वेव स्थानेषु साध्य-शरीरे न्यसेत् ॥ तस्मादतीव रक्षाकरं भवति ॥

पुनः केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः । विष्णवे नमः । मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः । हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । सङ्कर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः ॥ एतैर्मूर्तिषोडशकैर्बहिरर्चयेत् ॥ पुनस्तद्बहिरिन्द्रादिभिः, तद्बहिर्वज्रादि-भिरर्चयेत् ॥ एवं विष्णुपञ्जरपूजाविधिरुक्तः ॥ पुनरनेनैव पूजाविधानेन सिकता-प्रतिष्ठां वा उपलेपप्रतिष्ठां वा चरुप्रतिष्ठां वा कुर्यात् ॥

वास्तौ वा ग्रामे वा पुरे वा राष्ट्रे वा तत्प्रकार उच्यते —

आग्नेये वक्ष्यमाणेन विधानेन समाहितः ।
सिकतोपलचर्वादीन् साधयेदथ तैः क्रियाः ॥

वास्तौ पुरे वा ग्रामे वा विदध्याद्विषयेऽपि वा ।
मध्ये च षोडशाशान्ते खनेदष्टादशावटान् ॥

इत्यादिग्रन्थानामयमर्थः ॥ पुरग्रामादीनामष्टदिक्षु च अष्टावान्तरदिक्षु च मध्ये तत्पुरतश्च अष्टादशकुण्डानि निखनेत् । हस्तप्रमाणेन कुण्डस्यागाधं च परित आयामं च । एवं चतुरश्ररूपेण निखन्य, अन्यस्मादन्यस्मात् कुण्डात् अन्यदन्यत्कुण्डं प्रति गन्तुं मध्यमार्गांश्च परिकल्पयेत् ॥ पुनरेतानि कुण्डानि गोमयेनालिप्य, पुनः पाषाणं वा सिकतं वा चरुं वा स्थापनीय-द्रव्यं शुष्ककमलपत्रेषु विंशतिषु एतत्स्थापनीयद्रव्यं विभज्य संपाद्य,

पुनराचार्यो मध्यगतकुण्डस्य पुरतः उपविश्य, तस्मिन् कुण्डे वैष्णवपीठं संपूज्य, तस्मिन्वक्ष्यमाणविष्णुपञ्जरयन्त्रं मनसा लिखित्वा संस्थाप्य तस्मिन् विश्वरूपबुद्ध्या एकं कमलपत्रस्थं सिकतादि स्थापयेत् । पुनश्चतुर्दिक्स्थेषु कुण्डेष्वपि अन्यत्कमलपत्रस्थमपि सिकतादि चक्रगदाशार्ङ्गखड्गबुद्ध्या क्रमेण चतसृष्वपि दिक्षु स्थापयेत् । पुनः कोणचतुष्टयस्थितेष्वपि कुण्डेषु कमलपत्रस्थं सिकतादि-शङ्ख-हल-मुसल-शूलबुद्ध्या क्रमेण चतुर्ष्वपि कोणेषु स्थापयेत् । पुनरवान्तराष्टदिक्स्थेष्वपि कुण्डेषु कमलपत्रस्थं सिकतादि दण्ड कुन्तशक्ति पाशांकुश कुलिशपरशु शतमुखवह्नि-बुद्ध्या क्रमेण स्थापयेत् । पुनरधश्चोर्ध्वे च सूकरबुद्ध्या नृहरिबुद्ध्या च क्रमेण कमलपत्रस्थं सिकतादि स्थापयेत् । मध्यकुण्डस्य पुरतो यत्कुण्डं तस्मिन् गरुड-बुद्ध्या कमलपत्रस्थं सिकतादिस्थापयेत् । पुनः सर्वत्र समस्थलीकृत्य समुपलिप्य तत्र मध्यकुण्डोपरि तण्डुलान् प्रविकीर्य तस्मिंस्तण्डुले पर्णपट्टे विष्णुपञ्जरयन्त्रं विलिख्य निधाय, तत्पुरतः प्राङ्मुखो भूत्वा तस्मिन्यन्त्रे पूर्वोक्तपूजाविधानेन संपूज्य, पुनः तत्तद्वटेपि तथैव वा मूलमन्त्रैरेव वा समभ्यर्च्य निवेद्यं कृत्वा, पुनस्सर्पिस्सिक्तेनान्नेन मूलमन्त्रेणाष्टोत्तरशतसंख्यं हुत्वा, पुनः अश्वत्थवटोदुंबर-प्लक्षाणां समिधः क्रमेणाचक्रादिभिर्मन्त्रैरेकैकेन क्रमेण एकैकां समिधमष्टोत्तर-शतसंख्यं हुनेत् । पुनः, शङ्खादिभिश्चतुर्भिर्मन्त्रैः चण्डादिभिरष्टभिर्मन्त्रैश्च संभूय द्वादशभिर्मन्त्रैः एकैकैः तिलं सर्षपं च पृथक् पृथक् षोडशसंख्यं हुनेत् । पुनश्चक्रादिमूर्तीनां तत्र तत्र वीरभद्रविधानोक्तभूतक्रूरान्नेन तत्तन्मन्त्रैः बलिं दद्यात् त्रिशस्त्रिशः । पुनः बाह्यपूजां परिसमाप्य, तद्यन्त्रमपि तत्रैव निखन्य पिधाय च गुरुदक्षिणां च दत्वा ब्राह्मणान् भोजयेच्च । एवं कृते फलमाह —

तत्रोपसर्गा नश्यन्ति नरनारीमहीश्रिताः ।
ग्रहक्षुद्रपिशाचाद्या नेक्षन्ते तादृशं भयात् ॥

अश्मपातादिका ये च भया नश्यन्ति तेऽचिरात् ।
सस्यर्धिर्गोसमृद्धिश्च प्रजावृद्धिश्च जायते ॥

धनधान्यसमृद्धिश्च वर्धते तत्कुलं क्रमात् ।
दारिद्र्यरोगनिर्मुक्तस्सुखमाभूतसंप्लवम् ॥

रक्षोभिरक्षतबलैरसुरैश्च सर्वैः
दैत्यैस्समुद्यतमहास्त्रकरैः परीतम् ।
विष्णोस्तु पञ्जरमिदं प्रभजन्तमव्यात्
साक्षान्महेन्द्रमपरत्र नरे कथा का ॥

अथ विष्णुपञ्जरयन्त्रं लिख्यते —

विष्णुं लिखेन्मध्यगशक्तिविन्दौ कपोलयोस्सिद्धवराहबीजे ।
तद्विश्वरूपाह्वयमन्त्रवीतं प्रवेष्टयेत् षोडशवर्णकेन ॥

यन्त्रस्य बीजेषु चतुर्षु पूर्वं प्राग्दक्षिणप्रत्यगुदग्गतेषु ।
विद्वांस्तु चक्रं च गदां च शार्ङ्गं खड्गं च मन्त्रैस्सहितं विलिख्यात् ॥

शङ्खहलमुसलबीजान्यग्न्याद्यश्रिष्वथाष्टबीजेषु ।
दण्डं कुन्तं शक्तिं पाशांकुशकुलिशपरशुशतमुखवह्नीन् ॥

सप्रणवहृदयभगवन् विष्णुस्वाख्यानमूर्तिधरयुक्ताः ।
सेनापतिसहिता निजमन्त्रान्ता मूर्तयोऽत्र लिखितव्याः ॥

सत्रिष्टुभा वह्निगृहेण पूर्वं सानुष्टुभेन्दोर्निलयेन चापि ।
गायत्रि[1]मन्त्रोल्लसितेन भूयः सुवेष्टयेदर्कनिकेतनेन ॥

अनुलोमविलोमगैश्च वर्णैरभिवीतं वसुधापुरद्वयेन ।
नळिनं पुनरष्टयुग्मपत्रं प्रविदध्यादथ मूर्तिमन्त्रयुक्तम् ॥

तद्बहिर्मण्डलं सर्वलक्षणैरभिलक्षितम् ।

---

१ मन्त्रोल्लिखितेन इति ड मातृकापाठः ।

तस्मिन्नावाह्य विधिवद्विश्वरूपहरिं यजेत् ॥ इति ॥

अस्यार्थः — प्रथमं स्वेष्टमानेन वृत्तं विलिख्य, तन्मध्ये भुवनेश्वरी-बीजं विलिख्य, तन्मध्ये वृत्तं विलिख्य, तन्मध्ये विष्णुशब्दलक्षितं प्रथम-स्वरमकारं विलिख्य, तन्मध्ये वृत्तं विलिख्य, तन्मध्ये षोडशबाहुसहितं विष्णुमूर्त्याकारं विलिख्य, तस्योदरे साध्यनाम विलिख्य, तस्य हस्तेषु षोडशसु दक्षिणाधोहस्तमारभ्य वामाधोहस्तावसानक्रमेण, चक्र-गदा-शार्ङ्ग-खड्ग-शङ्ख-हल-मुसल-शूल-दण्ड-कुन्त-शक्ति-पाशांकुश कुलिश-परशु-शतमुख-वह्न्यायुध १६ स्वरूपलेखनपूर्वकं वक्ष्यमाणषोडशाक्षरमन्त्रस्य प्रथम-नवम-पञ्चम-दशम-द्वितीय-एकादश-षष्ठ-द्वादश-तृतीय-त्रयोदश-सप्तम-चतुर्दश-चतुर्थ-पञ्चदशा-ष्टम-षोडशाक्षराणि विलिखेत् ॥

ओं नमो भगवते वासुदेवाय हुं फट् स्वाहा । इति षोडशाक्षरीमन्त्रः ॥

तत्र चक्राद्यायुधधृतषोडशहस्तानां क्रमस्तु दक्षिणाधोहस्तमारभ्य वामाधोहस्तावसानं क्रमेण प्रपञ्चसारानुष्ठानपद्धतिकारमतम् । विवरणकारमतं तु दक्षिणाधोहस्तमारभ्य पञ्चमे पञ्चमे हस्ते चक्र-गदा-शार्ङ्ग-खड्ग-चतुष्टयम् । दक्षिणाधस्तृतीयहस्तमारभ्य पञ्चमे पञ्चमे शङ्ख-हल-मुसल-शूल चतुष्टयं दक्षिणाधो द्वितीयहस्तमारभ्य एकैकान्तरितहस्तेषु दण्डाद्यष्टकमित्येवमायुध-धारणक्रमः ॥

पुनर्भुवनेशीमध्यस्थितस्य प्रथमस्वरस्य अकारस्य कपोलयोः नृसिंहबीजं क्ष्रौं वराहबीजं हूं इति च द्वयं विलिख्य, पुनः कर्णिकामध्यस्थितायाः भुवनेश्याः कपोलयोः गरुडचक्रबीजद्वयं विलिखेत् ॥ रं इति चक्रबीजम् ॥ क्ष्रौं इति गरुडबीजम् ।

पुनः कर्णिकावृत्ताद्बहिः वृत्तं विलिख्य तस्मिन्वृत्ते यथापूर्ववृत्तविलिखित-भुवनेश्वरीबीजमावेष्टितं भवेत् तथा विश्वरूपमंत्रेण संवेष्टयेत् ॥ ओं नमो

भगवते महाविष्णवे वासुदेवाय विश्वरूपशरणं भव मे प्रभविष्णवे नमः ॥ इति विश्वरूपमन्त्रश्चतुस्त्रिंशद्वर्णः ॥

पुनस्तद्बहिः तृतीये वृत्ते षोडशार्णेन संवेष्टयेत् । ओं नमो भगवते वासुदेवाय हुं फट् स्वाहा । इति षोडशाक्षरमन्त्रः ॥

पुनः बहिश्चतुर्थे वृत्ते प्रतिलोमसप्तव्याहृतिभिः वेष्टयेत् ॥

पुनस्तद्बहिः पूर्वपश्चिमतो दक्षिणोत्तरतश्च षट्कोणद्वितयरूपं द्वादशकोणं विलिख्य, तेषु कोणेषु शक्तिप्रणवं विलिख्य, पूर्वादिक्रमेण द्वादशकोणानां कपोलेषु प्रतिलोमगायत्र्यक्षराणि द्वन्द्वशो विलिख्य, तद्बहिः वृत्तद्वयं विलिख्य, तयोर्मध्ये षोडशदिक्षु विलिखितैर्भुवनेशीबीजैरेकैकान्तरितसंबद्धैः संवेष्ट्य, पुनः तेषु बीजेषु प्राग्दक्षिणप्रत्यगुदग्गतेषु क्रमेण चक्र-गदा-शार्ङ्ग-खड्गाकारेण मूर्तीर्लिखित्वा तन्मस्तकेषु स्वस्वमन्त्रांश्च पूर्वोक्तक्रमेण पूर्वोक्त-षोडशाक्षरवर्णैकैकपूर्वकं विलिखेत् ॥

ओं नमो भगवते वासुदेवाय विष्णवे चक्रमूर्ते इत्यादि पूर्वं पूजाविधाने प्रोक्तः चक्रमन्त्रः । ओं नमो भगवते, वासुदेवाय विष्णवे गदिमूर्ते इत्यादिगदामन्त्रः । अवशिष्टायुधद्वयमन्त्रोऽप्येवमुक्तरीत्या पूजा-विधानोक्तप्रकारेण लेखनीयः ॥

पुनराग्नेयादिकोणगतेषु भुवनेशीबीजेषु शङ्ख-हल-मुसल-शूलाकारेण मूर्ती-र्विलिख्य, तन्मस्तकेषु स्वस्वमन्त्रांश्च पूर्वोक्तक्रमेण पूर्वोक्तषोडशाक्षरीमन्त्रस्य पञ्चमादिवर्णैकैकपूर्वकान् विलिखेत् । ओं नमो भगवते वासुदेवाय विष्णवे शङ्खमूर्ते इत्यादिपूर्वं पूजाविधानोक्ताः शङ्खादिमन्त्राः । पुनः अवान्तराष्ट-दिग्गतेषु भुवनेशीबीजेषु अष्टसु दण्ड-कुन्त-शक्ति-पाशा-ङ्कुश-कुलिश-परशु-शतमुखवह्न्यायुधरूपाणि विलिख्य, तन्मस्तकेषु स्वस्वमन्त्रांश्च पूर्वोक्त-

षोडशाक्षरमन्त्रस्य पूर्वोक्तक्रमेण नवमादिवर्णैकैकपूर्वकान् विलिखेत् । ओं नमो भगवते वासुदेवायेत्यादि पूर्वं पूजाविधाने प्रोक्ता दण्डकुन्तादिमन्त्राः ॥

पुनः षोडशभुवनेशीबीजवेष्टनस्य पूर्वापरभागयोः नृसिंहवराहमूर्ती अपि लिखित्वा तन्मस्तकयोः तयोर्मन्त्रद्वयमपि पूर्वं पूजाविधानोक्तं विलिख्य, शक्तिवेष्टनबाह्ये नृसिंहस्याग्रे गरुडचक्रमूर्तिद्वयं विलिख्य तन्मस्तकयोः तन्मन्त्रद्वयं च पूर्वोक्तं विलिखेत् । सर्वासामायुधमूर्तीनां पूजाविधानोक्तप्रकारेण लेखनप्रकारः ॥

पुनस्तद्बहिः त्रिकोणं विलिख्य, तन्मध्ये जातवेदोमन्त्रं परितो विलिख्य, तद्बहिस्सोममण्डलात्मकं वृत्तं विलिख्य, तस्मिन् गायत्र्यक्षराणि लिखित्वा, पुनस्तद्बहिः वृत्तद्वयं विलिख्य, प्रथमे अनुलोममातृकाभिः द्वितीये प्रतिलोममातृकाभिश्च वेष्टयेत् ॥

पुनश्चतुरश्रद्वयं पुटित्वा विलिख्य, तस्मिन् पूर्वादिचतुर्षु कोणेषु नृसिंहबीजं क्ष्रौं इति आग्नेयादिकोणेषु क्ष्म्रयौं इति चिन्तामणिबीजं च विलिखेत् ॥

तद्बहिः षोडशदळं पद्मं विलिख्य तेषु पूर्वलिखितक्रमेण चक्राद्यायुधमूर्तीः षोडश क्रमात् विलिख्य तन्मस्तकेषु पूर्वोक्तक्रमेण पूर्वोक्तषोडशवर्णैकैकपूर्वकं चक्रादिमन्त्रांश्च विलिखेत् ॥

पुनः पूर्वोक्तस्थानेषु नृसिंहवराहगरुडचक्रमूर्तिचतुष्टयं विलिख्य तन्मस्तकेषु तत्तन्मन्त्रांश्च विलिखेत् । पूर्वोक्तशक्तिबीजगतान्यायुधानि समन्त्रकाणि तत्तदायुधाकाराणि लिखेद्वा, केवलं तत्तन्मन्त्रान् विलिखेद्वा । षोडशदळस्थान्यायुधानि तु स्वमूर्तिसहितानि ललाटलिखितमन्त्रकाण्येव लिखेदिति विशेषः ॥ इति यन्त्रलेखनप्रकारः विवरणे च अनुष्ठानपद्धत्यां चालोच्य प्रदर्शितः ॥

अथ विष्णुपञ्जरकल्पनाजपप्रकारः —

प्रथमं पूर्वोक्तवत् मूलमन्त्रस्याङ्गऋष्यादीन् कृत्वा ध्यात्वा वक्ष्यमाणमन्त्रान् जपेत् ॥ प्रथमं जातवेदो मन्त्रमेकवारं जप्त्वा तदनन्तरं त्र्यम्बकं ततो ब्रह्मगायत्री ततः स्थाने हृषीकेशेत्यादिगीतात्रिष्टुप् ततः पूर्वोक्तविश्वरूप मन्त्रं ततः पूर्वोक्तषोडशाक्षरीमन्त्रं एतान् क्रमेण जपेत् ॥

ततः शतानीक उवाच —

भगवन्नित्यादितन्निबोधमहीपते, इत्यन्तं वक्ष्यमाणं स्तोत्रं सकृज्जप्त्वा, पुनः पूर्ववत् जातवेदो मन्त्रादिषण्मन्त्रान् त्रिवारं जपेत् । पुनः हूमिति वराहबीजान्ते क्ष्रौं इति नृसिंहबीजमुच्चार्य तदन्ते क्षकाररेफौकारबिन्दुरूपं क्ष्रौं इति गरुडबीजमुक्त्वा तदन्ते रं इति सबिन्दुकरेफस्वरूपं चक्रबीजं तदन्ते प्रणवभुवनेशीद्वयं तदन्ते पूर्वोक्तषोडशाक्षरीमन्त्रवर्णैकैकं तदन्ते वक्ष्यमाणान् मन्त्रांश्च क्रमेण जपेत् ॥

विष्णुः प्राच्यां स्थितश्चक्रः विष्णवे नमः पुनरपि वराहबीजादिषोडशाक्षरद्वितीयवर्णपर्यन्तं जप्त्वा, विष्णुर्दक्षिणतोगदीविष्णवे नमः इति जप्त्वा, पुनरपि पूर्ववत् प्रतीच्यां शार्ङ्गधृग्विष्णुः विष्णवे नमः, विष्णुः खड्गी ममोत्तरे विष्णवे नमः इति जप्त्वा, पुनः हृषीकेशो विकोणे तु हृषीकेशाय नमः इति पूर्ववत् बीजजपान्ते विकोणचतुष्टये हृषीकेशमन्त्रमेवं जप्त्वा, पुनः पूर्ववत् बीजान्ते तच्छिद्रेषु जनार्दनः जनार्दनाय नमः, इति तच्छिद्राष्टके अष्टवारं जनार्दनमन्त्रं पूर्वोक्तबीजपुरस्सरं जपेत् । एवं कृते षोडशाक्षरीमन्त्रस्य एकैकवर्णविनियोगेन एकावृत्तिर्भवति । पुनः षोडशाक्षरीमन्त्रवर्णरहितमितरबीजपुरस्सरं षोडशाक्षरीमन्त्रस्थाने वक्ष्यमाणतत्तद्बीजपुरस्सरं च हुं क्रोडरूपी हरिर्भूमौ महावराहाय नमः इति जपेत् ॥ पुनरप्युक्तबीजान्ते क्ष्रौं नरसिंहोम्बरे मम महानरसिंहाय नमः ॥ उक्तबीजान्ते क्ष्रौं विष्णुरग्रे स्थितो गरुडः महागरुडाय नमः । उक्तबीजान्ते विष्णुरग्रे स्थितश्चक्रः चक्राय नमः इत्येतान्चक्रादि विंशतिमन्त्रान् त्रिवारं जप्त्वा पुनर्षोडशाक्षरमन्त्रं

विश्वरूप मन्त्रं च स्थाने हृषीकेशेत्यादिगीतात्रिष्टुड् मन्त्रं च गायत्रीं च त्र्यंबकमन्त्रं च जातवेदो मन्त्रं च त्रिवारमावर्त्य पुनः क्षुरान्तमेत्रं तं चक्रं भ्रमत्येतत्सुदर्शनमित्यादिविष्णुचक्रस्थाहताः इत्यन्तं वक्ष्यमाणं स्तोत्रं सकृज्जस्वा पुनः पूर्वोक्तषोडशाक्षरीमन्त्रं च विश्वरूपमन्त्रं च गीतात्रिष्टुप् मन्त्रं च गायत्रीं त्र्यम्बकं जातवेदो मन्त्रं च एकैकवारमावर्त्य, पुनः वैपरीत्येन जातवेदो मन्त्रक्रमेण एतदेव मन्त्रषट्कं पञ्चवारमावर्त्य, पुनः ओं नमो भगवते विष्णवे विश्वरूपमूर्तये ओं नमो विष्णवे विश्वरूपमूर्तिधराय ओं नमो भगवते विष्णवे विश्वरूपमूर्तिधरसेनाधिपतये ओं नमो भगवते महाविष्णवे वासुदेवाय विश्वरूप शरणं भव मे प्रभविष्णवे नमः इति विश्वरूपमन्त्रं पञ्चवारं जस्वा, पुनः चक्रादिविंशतिमन्त्रान् पञ्चवारमावर्तयेत् ॥ तद्यथा —

वराहनृसिंहगरुडचक्रप्रणवभुवनेशीबीजान्ते षोडशाक्षरीवर्णैकैकपूर्वकं विष्णुः प्राच्यां स्थितश्चक्री ओं नमो भगवते विष्णवे चक्रमूर्ते मां रक्ष रक्ष ओं नमो भगवते विष्णवे चक्राय चक्रमूर्तये चक्रमूर्तिधराय चक्रमूर्तिधरसेनाधिपतये सहस्रार हुं फट्॥ इति चक्रमन्त्रः ॥

पुनर्वराहादिबीजान्ते विष्णुर्दक्षिणतो गदी ओं नमो भगवते विष्णवे गदिमूर्ते मां रक्ष रक्ष ओं नमो भगवते विष्णवे गदिने गदिमूर्तये गदिमूर्तिधराय गदिमूर्तिधरसेनाधिपतये महागदायै हुं फट् ॥

पुनश्शार्ङ्गाद्यन्ये अवशिष्टमन्त्राः । प्रतीच्यां शार्ङ्गधृग्विष्णुरित्यादिमहा-शार्ङ्गाय हुं फट् इत्यादि एवमुक्तरीत्या ऊह्याः ॥

पुनर्वैष्णवाष्टक्षरगीतात्रिष्टुप् सुदर्शनमन्त्रानादौ संयोज्य बुद्धिस्वास्थ्य-मित्यादिवक्ष्यमाणगाथात्रयं प्रत्येकं पञ्चवारमावर्त्य, पुनः ओं नमो भगवते सर्वविष्णवे विश्वरूपिणे वासुदेवाय चक्राय सर्वायुधभृते नमः इत्येकवारं जस्वा, अङ्गऋष्यादिकं पूर्ववत्कृत्वा जपमुपसंहरेत् ॥ एवं विष्णुपञ्जरकल्पनाप्रकारः । पूर्वं सिकताप्रतिष्ठानविधानान्ते (उक्तः) फलवाचकश्लोकः अत्राप्यनुसन्धेयः ॥

अथात्र सूचितगाथाप्रकारो लिख्यते—

शतानीक उवाच—

भगवन् कीदृशीं रक्षां स चकार द्विजोत्तमः ।
यया निर्धूतवीर्योऽसौ नीरसो रजनीचरः ॥

शौनक उवाच—

एकाग्रचित्तो गोविन्दे तज्जपस्तत्परायणः ।
सर्वदुष्टोपशमनं प्रविष्टो विष्णुपञ्जरम् ॥

शतानीक उवाच—

विष्णुपञ्जरमिच्छामि श्रोतुं धर्मभृतां वर ।
सदा सर्वभयेभ्यस्तु रक्षा या परमा भवेत् ॥

शौनक उवाच—

त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम् ।
शङ्करस्य कुरुश्रेष्ठ रक्षणाय निरूपितम् ॥

वागीशेन तु शक्रस्य बलं हन्तुं प्रयास्यतः ।
तस्य स्वरूपं वक्ष्यामि तन्निबोध महीपते ॥

विष्णुः प्राच्यां स्थितश्चक्री विष्णुर्दक्षिणतो गदी ।
प्रतीच्यां शार्ङ्गधृग्विष्णुः खड्गी चैव ममोत्तरे ॥

हृषीकेशो विकोणे तु तच्छिद्रेषु जनार्दनः ।
क्रोडरूपी हरिर्भूमौ नरसिंहोऽम्बरे मम ।
क्षुरान्तमेवं तच्चक्रं भ्रमत्येतत्सुदर्शनम् ॥

तस्यांशुमाला दुष्प्रेक्ष्या हन्तुं प्रति निशाचरान् ।
गदा येयं सहस्रार्चिरुद्वमत्पावकोल्बणा ॥

रक्षो भूतपिशाचानां डाकिनीनां च नाशिनी ।
शार्ङ्गविस्फूर्जितं चैतद्वासुदेवस्य मद्रिपून् ॥

तिर्यङ्मनुष्यकूश्माण्डप्रेतादीन्हन्त्वशेषतः ।
खड्गधारा ज्वलज्ज्योत्स्ना निर्धूता ये ममाहिताः ॥

तेषां तु सौम्यतां सद्यः गरुडेनेव पन्नगाः ।
सर्वे भवन्तु ते सौम्याः कृष्णशङ्खरवाहताः ॥

चित्तवृत्तिहरा ये मे ये जनाः स्मृतिहारकाः ।
बलौजसां च हर्तारः ये च रक्षणनाशकाः ॥

कूश्माण्डास्ते प्रणश्यन्तु विष्णुचक्ररथाहताः ।
वराहो रक्षतु जले विषमेषु च वामनः ॥

अटव्यां नारसिंहस्तु सर्वतः पातु केशवः ।
बुद्धिस्वास्थ्यं मनस्स्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा ॥

ममास्तु देवदेवस्य वासुदेवस्य कीर्तनात् ।

पृष्ठे पुरस्तान्मम दक्षिणोत्तरे विकोणतश्चास्तु जनार्दनो हरिः ।
तमीड्यमीशानमनन्तमच्युतं जनार्दनं प्रणिपतितो न सीदति ॥

यथा परं ब्रह्म हरिस्तथा परं जगत्स्वरूपं च स एव केशवः ।
ऋतेन तेनाच्युतनाम कीर्तनात् प्रणाशमेतु त्रिविधं ममाशुभम् ॥

इति पूर्वोक्तगाथा समाप्ता ॥

इति गीर्वाणेन्द्रविरचिते प्रपञ्चसारसारसङ्ग्रहे
चतुर्विंशः पटलः ॥

## अथ पञ्चविंशः पटलः ॥

---

अथ प्रासादविधानमुच्यते —

मनः प्रसाद प्रदत्वात् प्रासादसंज्ञा । वामदेव ऋषिः । पङ्क्तिः छन्दः । ईशो देवता । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम् —

शूलासीटङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं
दोर्भिश्शीतांशुखण्डप्रतिघटितजटाभारमौळिं त्रिणेत्रम् ।
नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं
पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

हौं इति मन्त्रः ॥ हकार चतुर्दशस्वर बिन्दुभिरयं मन्त्रः । एकादश लक्षं जपेत् । मधुरत्रयाप्लुतैः करवीरपुष्पैर्वा जपाकुसुमैर्वा कमलैर्वा धवळपायसेन वा नृपवृक्षसमिद्भिर्वा दशांशं होमः ॥ करवीरं-कन्नेरी । जपा-दासुन्दपुष्प । नृपवृक्षं-कोन्ने ॥

अथन्यासः —

हों ईशानाय नमः । हें तत्पुरुषाय नमः, हुं अघोराय नमः । हिं वामदेवाय नमः । हं सद्यो जाताय नमः । इत्यंगुळीष्वंगुष्ठादिषु विन्यसेत् । पुनरेतैरुक्तैः पञ्चभिर्मन्त्रैः मूर्धाननहृग्गुह्यकपोलेषु च विन्यसेत् ॥ पुनरेतैः पञ्चभिर्मन्त्रैः ऊर्ध्वप्राक्दक्षिणोदक्पश्चिमदिक्स्थेषु मुखेषु न्यसेत् ॥

अथ पूजार्थं पीठविधानमुच्यते —

अष्टपत्रगुणवृत्तराशिभिर्वीथिकल्पतरुभिस्समावृतम् ।
मण्डलं प्रतिविधायशूलिनः पीठमत्रनवशक्तिभिर्यजेत् ॥

अस्यार्थः — प्रथममष्टपत्रं पद्मं विलिख्य तद्बहिर्वृत्तत्रयं विलिख्य तद्बहिर्द्वादशराशिखण्डं विलिख्य तद्बहिश्चतुरश्रद्वयं विलिख्य तच्चतुरश्रयोरन्तराळं वीथिसंज्ञं भवति। तस्यां वीथ्यां लताकृत्या विलिखेत्॥ तत् कल्पतरुसंज्ञं भवति। अष्टदळकर्णिकामध्ये प्रासादबीजं विलिख्य अष्टदळमूलेषु स्वरद्वन्द्वं विलिख्य दळमध्ये ओं ह्रीं ह्रौं नमः शिवाय इति शैवाष्टाक्षरं विलिख्य सर्वतो बहिः कादिभिर्वर्णैरावेष्टय तद्बहिश्चतुरश्रकोणेषु प्रासादबीजं विलिखेत्। इत्येवं शैवपीठं विलिख्य तस्मिन् नवशक्तिभिर्यजेत्॥

वामायै० ज्येष्ठायै० रौद्र्यै० काळ्यै० कलविकरिण्यै० बलविकरिण्यै० बलप्रमथिन्यै० सर्वभूतदमन्यै० मनोन्मन्यै नमः इत्यष्टदळेष्वष्टशक्तीः नवमीं कर्णिकायां समभ्यर्च्य, ओं नमो भगवते सकलगुणात्मकशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः इति कर्णिकायां समभ्यर्च्य, तस्मिन् पीठे ईशमूर्तिं समावाह्य समर्चयेत्। प्रथमं तत्पुरुषाय नमः, अघोरेभ्यो नमः, सद्यो जाताय नमः, वामदेवाय नमः, ईशानाय नमः, एता मूर्तयश्चतसृषु पूर्वदक्षिणपश्चिमोत्तरदिक्षु ईशान्ये, (च) निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० इति विदिक्षु समर्चनीयाः॥ शान्त्यतीतायै० इत्यैशान्ये इति प्रथमावृतिः॥

एतासां मूर्तीनां रोचींष्युच्यन्ते —

सद्यो वेदाक्षमालाभयवरदकरः कुन्दमन्दारगौरः
 वामः काश्मीरवर्णोऽभयवरदकरस्त्वक्षमालाविलासी।
अक्षस्रग्वेदपाशाङ्कुशडमरुकखट्वाङ्गशूलान्कपालं
 बिभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनुर्भीतिदश्चाप्यघोरः॥

विद्युद्वर्णोथ वेदाभयवरदकुठारान्दधत्पूरुषाख्यः
 प्रोक्तास्सर्वे त्रिणेत्रा विधृतमुखचतुष्काश्चतुर्बाहवश्च।
मुक्तागौरो भयेष्टाधिककरकमलो घोरतः पञ्चवक्त्रः
 स्त्वीशोध्येयोम्बुजभवमुररिपुरुद्रेश्वरास्स्युश्शिवान्ताः॥

भूतानां शक्तित्वाद्व्यापित्वाज्जगति वा निवृत्त्याद्याः ।
तेजोरूपाः करपदवर्णविहीना मनीषिभिः प्रोक्ताः ॥

पुनरङ्गैः द्वितीयावृतिः। अनन्ताय नमः, सूक्ष्माय नमः, शिवोत्तमाय नमः, एकनेत्राय नमः, एकरुद्राय नमः, त्रिमूर्तये नमः, श्रीकण्ठाय नमः, शिखण्डिने नमः, ८ इति तृतीयावृतिः। एतेषामायुधरोचींषितु —

शूलाशनिशरचापोल्लसितसुदोर्दण्डभीषणास्सर्वे ।
पद्मासनाश्च नानाविधभूषणभूषितास्त्रिणेत्रास्स्युः ॥

पाटलपीतसितारुण [1]शीतिरक्तशीतिप्रभाश्च धूम्रान्ताः ।
कोटीरकोटिविलसच्छशिशकलयुताश्चमूर्तयः क्रमशः ॥ इति ।

पुनः उमायै० चण्डेश्वराय० नन्दिने० महाकालाय० गणेश्वराय० वृषाय० भृङ्गिरिटये० स्कन्दाय० तत्र उत्तरादिक्रमेण उमादयः संपूज्या इति चतुर्थ्यावृतिः ॥

कनकविद्रुरजविद्रुममरतकमुक्तासिताच्छरक्ताभाः ।
पद्मासनसंस्थाश्च क्रमादुमाद्यागुहान्तिकाः प्रोक्ताः ॥

पुनरिन्द्रादिभिः पञ्चमी । वज्रादिभिः षष्ठी ॥

अथाष्टत्रिंशत्कलान्यासयुक्तपञ्चब्रह्मन्यासोऽभिधीयते —

तत्रादौ मूलमन्त्रस्य पञ्चाक्षरस्य वक्ष्यमाणस्य ऋष्यादिकं विन्यस्य, पञ्चब्रह्ममन्त्राणां ऋष्यादीन् विन्यसेत् । तत्र ईशानस्सर्वविद्यानामित्यस्य ईश ऋषिः। [2]भुविगनुष्टुप् छन्दः । ईश्वरो देवता तत्पुरुषमन्त्रस्य तत्पुरुष

---

१ सितरक्तसितप्रभाश्च इति पाठः शोधनीय इति भाति ।

२ भुरिगनुष्टुप् इति ङ पाठः ।

ऋषिः । गायत्री छन्दः । आपो देवताः । अघोरमन्त्रस्य अग्नि ऋषिः । अनुष्टुप् छन्दः । आपो देवताः । वामदेवमन्त्रस्य वामदेव ऋषिः । कृतिश्छन्दः । भगो देवता । सद्योजातमन्त्रस्य हरऋषिः । अनुष्टुप् छन्दः । भगो देवता । पुनरेतेषां षडङ्गानि लिख्यन्ते — ऐं ह्रीं श्रीं स्रौं सर्वज्ञशक्तिधाम्ने हृत् । अमृततेजोमयमालिनितृप्ताय ब्रह्मशिरः । ज्वलितशिखिशिखे अनादिबोधाय शिखा । वज्रिणे वज्रधराय स्वाहा स्वतन्त्राय कवचम् । सौं चौं हौं अलुप्तशक्तये नेत्रम् । ओं श्लीं पशु हुं फट् अनन्तशक्तये अस्त्रम् । एतान्येवाङ्गानि सर्वाणि उक्तपञ्चप्रणवपूर्वकान्येव कुर्यात् ॥ पुनरीशानादिपञ्चब्रह्ममन्त्रैः करन्यासं कुर्यात् ॥

तथा शिरोवक्त्रहृदयगुह्यपादेषु तथोर्ध्ववक्त्रपूर्वदक्षिणोत्तरपश्चिमेषु क्रमेण न्यसेत् ॥ अनन्तरं पूर्वोक्ताङ्गमन्त्रैः षडङ्ग विन्यस्य अस्त्रमन्त्रेण पाशुपतेन तालत्रयदिग्बन्धनादीन् कृत्वा पञ्चब्रह्ममन्त्रान् विभज्य अष्टत्रिंशत्कलान्यासं कुर्यात् ॥ तन्न्यासं कुर्वाणः सर्वदेवताधिष्ठानसदाशिवाख्यब्रह्मा मम शरीरे सर्वदा इमाः कलादेवताः प्रतिष्ठिता इति भावयेत् ॥ तत्रेशकलाः समुष्टयङ्गुष्ठेन जस्त्राऽथ तत्पुरुषकलाः सांगुष्ठतर्जन्या अघोरकलाः सांगुष्ठमध्यमया वामदेवकलाः सांगुष्ठानामिकया सद्योजातकलाः सांगुष्ठकनिष्ठिकया ॥ सच न्यासः इत्थं समुल्लसति ॥

ईशानस्सर्वविद्यानां नमः शशिन्यै नमः ईश्वरस्सर्वभूतानां नमः अङ्गदायै नमः ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा नमः इष्टदायिन्यै नमः शिवो मे अस्तु नम मरीच्यै नमः सदाशिवों नमः ज्वालिन्यै नम एताः पञ्चकलाः प्राग्दक्षिणपश्चिमोदीच्योर्ध्वमुखेषु न्यसेत् ॥

तत्पुरुषाय विद्महे नमः, शान्त्यै नमः, महादेवाय धीमहि नमः, विद्यायै नमः, तन्नोरुद्र नमः, प्रतिष्ठायै नमः, प्रचोदयान्नमः निवृत्त्यै नमः एताश्चतस्रस्तत्पुरुषकलाः प्राक्पश्चिमदक्षिणोदीच्यास्येषु न्यसेत् ॥

अघोरेभ्यो नमः तामस्यै नमः, अथ घोरेभ्यो नमः मेधायै नमः, घोर नमः क्षुधायै नमः, घोरतरेभ्यो नमः निद्रायै नमः, सर्वतस्सर्व(शर्व) नमः मृत्यवे नमः। सर्वेभ्यो नमः मायायै नमः, नमस्ते अस्तु नमः भयायै नमः, रुद्ररूपेभ्यो नमः ज्वरायै नमः ८ अष्टावेता अघोरकलाः हृत्कण्ठांसद्वयनाभिजठरपृष्ठोरसि(स्सु) न्यसेत् ॥

वामदेवाय नमः विरजायै नमः, ज्येष्ठाय नमः रक्षायै नमः श्रेष्ठाय नमः रुद्राय नमः रत्यै नमः, कालाय नमः पाल्यै नमः, कल नमः कामायै नमः, विकरणाय नमः क्रियायै नमः बल नमः बुध्यै नमः विकरणाय नमः जनायै नमः, बलाय नमः, बल नमः कार्यै नमः, प्रमथनाय नमः धार्त्र्यै नमः, सर्वभूतदमनाय नमः भ्रामण्यै नमः, मन नमः मोहिन्यै नमः, उन्मनाय नमः मोहायै नमः एवं वामदेवकलाः त्रयोदशकलाः गुह्याण्डो-रुद्वय-जानुद्वय-जङ्घाद्वय स्फिक्द्वय-कटिसन्धि-पार्श्वद्वयेषु न्यसेत् ॥[1]

तत्र कट्योरेकम्। स्फिगिति जघनद्वयम्। सद्योजातं प्रपद्यामि नमः सिद्ध्यै नमः, सद्योजाताय वै नमः (नमो नमः) ऋद्ध्यै नमः, भवे नमः दृत्यै नमः, अभवे नमः लक्ष्म्यै नमः, अनातिभवे नमः, मेधायै नमः, भजस्व (भवस्व) मां नमः कान्त्यै नमः, भव नमः सुधायै नमः, उद्भवाय नमः धृत्यै नमः ८ अष्टावेताः सद्योजातकलाः पादतलद्वय-हस्ततलद्वयघ्राण-शिरो-बाहुद्वयेषु न्यसेत्। तत्र प्रणमित्येकं स्थानम् ॥

एवं प्रत्येकमष्टत्रिंशत् कलान्यासं कृत्वा मूलमन्त्रपञ्चाक्षरसंपुटितान् पञ्चब्रह्ममन्त्रान् शरीरे व्यापकत्वेन न्यस्य स्वात्मानं सदाशिवात्मकं ध्यात्वा,

१. अत्र वामदेवकलाः त्रयोदश इति प्रतिपाद्यते। सशक्तिकानि पदानि तु पञ्चदश भवन्ति। मातृकान्तरेषु श्रेष्ठाय, बलाय, इति शक्तिहीनं पदद्वयमपि न दृश्यते। अतस्तत् पदद्वयं त्याज्यमेवेति भाति।

स्वशरीरं च सर्वदेवताऽधिष्ठितं ध्यात्वा, गन्धादिभिरभ्यर्च्य सदाशिवोऽहमिति ध्यायेत्। तन्न्यासं कुर्वाणो यत्र देशे तिष्ठति तं देशं योजनमितं शैवक्षेत्रमित्याचक्षते। तदुक्तं चात्र —

विन्यासः प्रतिमाकृतौ च नितरां सान्निद्ध्यकृत्स्यादयं
देहे चापि शरीरिणो निगदितः सामर्थ्यकारीति च।
आस्ते यत्र तथामुनैव दिनशो विन्यस्तदेहः पुमान्
क्षेत्रं देशममुं च योजनमितं शैवागमज्ञा विदुः ॥ इति।

अथ पञ्चब्रह्मपूजाविधिः —

प्रागुक्ते शैवपीठे समावाह्य समर्चयेत्। प्रथमं तत्पुरुषादिभिः पञ्चभिः ऋग्भिः प्रासादोक्तनिवृत्त्यादियुताभिः मध्यप्राग्याम्यसौम्यापरदिशि समर्चयेत्। निवृत्त्यादयो मध्ये विदिक्षु च एवं प्रथमावृतिः। पुनरङ्गैः प्राक् न्यासविधानोक्तैः द्वितीयावृतिः। पुनः अनन्ताय० सूक्ष्माय० शिवोत्तमाय० एकनेत्राय० एकरुद्राय० त्रिमूर्तये० श्रीकण्ठाय० शिखण्डिने नमः इति तृतीयावृतिः। पुनः उमायै० चण्डेश्वराय० नन्दिने० महाकालाय० गणेश्वराय० वृषाय० भृङ्गिरिटये० स्कन्दाय० इति उत्तरादिक्रमेण चतुर्थ्यावृतिः। इन्द्रादिभिः पञ्चमी। वज्रादिभिः षष्ठी इत्थं पञ्चब्रह्मपूजाविधानम् ॥

अथ प्रसिद्धपञ्चाक्षरीविधानमुच्यते —

वामदेव ऋषिः। पङ्क्तिः छन्दः। सदाशिवो देवता ॥ अं बीजम्। आयशक्तिः। ओं हृत्। नं शिरः मं शिखा। शिं कवचम्। वां नेत्रत्रयम्। यं अस्त्रम् ॥ अथवा शास्त्रान्तरोक्तप्रकार उच्यते ॥ ओं ओं सर्वज्ञशक्तिधाम्ने हृत्। ओं नं नित्यतृप्तशक्तिधाम्ने शिरः। ओं मं अनादिबोधशक्तिधाम्ने शिखा। ओं शिं स्वतन्त्रशक्तिधाम्ने कवचम्। ओं वां अलुप्तशक्तिधाम्ने नेत्रत्रयम्। ओं यं अनन्तशक्तिधाम्ने अस्त्रम् ॥ इदं त्वङ्गं पञ्चाक्षरस्य शास्त्रान्तरोक्तप्रकारम् ॥ एतद्वा कुर्यात् ॥ पुनः तत्पुरुषाय नमः। अघोरेभ्यो

नमः । सद्योजाताय नमः । वामदेवाय नमः । ईशानाय नमः । एतान्पञ्च मन्त्रान् तर्जनीमध्यमानामिकाकनिष्ठिकांगुष्ठेष्वंगुळीषु विन्यसेत् ॥ पुनरेतान् वक्त्रहृत्पादगुह्यमूर्धस्वपि च न्यसेत् ॥ पुनरप्येतैरेव मन्त्रैः प्राग्याम्यवारुणोदीच्यवक्त्रेषु मूर्धसु च न्यसेत् ॥ पुनः ध्यानम् —

विभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तस्सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसघटिताद्रिप्रभः पञ्चवक्त्रः
त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः ॥

ओं नमश्शिवाय । इति मन्त्रः । मोक्षप्रधानोयं मन्त्रः । विंशतिलक्षं जपः ॥ शुद्धैस्तिलैर्वा घृतैर्वा दुग्धान्नैर्वा क्षीरद्रुमसमिद्भिर्वा विंशतिसहस्रं जुहुयात् पुरश्चरणार्थम् ॥ अथ पूजा —

अत्रैव प्राक् प्रासादोक्ते पीठे समावाह्य समर्चयेत् । तत्पुरुषाय नमः, अघोरेभ्यो नमः, सद्योजाताय नमः, वामदेवाय नमः, ईशानाय नमः

तत्पुरुषादिमूर्तीनामायुधवर्णादयस्तु —

तत्पुरुषाद्यास्सर्वे प्रधानसंप्रोक्तबाहुहेतियुताः ।
उल्लसितमुखचतुष्कास्तेजोरूपा विलक्षणस्त्वीशः ॥ इति ।

एताभिर्मूर्तिभिस्सशक्तिकाभिः प्रासादोक्तवत्प्रथमावृतिः । अङ्गैर्द्वितीयावृतिः । पुनः पूर्वं प्रासादोक्तैरनन्तादिभिस्तृतीयावृतिः । पुनरपि तत्रैवोक्तैरुमादिभिः चतुर्थी । इन्द्रादिभिः पञ्चमी । वज्रादिभिः षष्ठी ॥

अस्यैव पूजाविधानान्तरमुच्यते —

पूर्वं प्रासादोक्तपीठं स्वहृदये विन्यस्य तस्मिन्पीठे मूलमन्त्रेणावाह्य पूर्वोक्ताङ्गान्यपि विन्यस्य मूलमन्त्रवर्णान् विन्यसेत् ॥ तत्कथम् —

हन्मुखांसोरुयुग्मेषु षड्वर्णान्क्रमशो न्यसेत् ।
कण्ठमूले तथा नाभौ पार्श्वयुक्पृष्ठहृत्सु च ।
मूर्धास्यनेत्रघ्राणेषु दोःपत्सन्ध्यग्रकेषु च ॥

सशिरोवक्त्रहृदयजठरोरुपदेष्वपि ।
हृदाननपरश्वेणाभीत्याख्यवरदेषु च ॥

मुखांसहृदयेषु त्रीन् परान्पादोरुकुक्षिषु ।
ऊर्ध्वाधः क्रमतः कुर्याद्गोळकान्यासमुत्तमम् ॥

एवं षड्वर्णैर्दशकृत्वो न्यसेत् । तत्र दोर्मूलसन्ध्यंगुलिमूलमध्याग्रेषु, पादमूलजानुसन्धिपार्ष्ण्यंगुलिमूलाग्रेषु षट्सु स्थानेषु विनियोगः । ऊर्ध्वाधः क्रमतश्च त्रीण्यक्षराणि न्यसेत् । पुनस्तत्पुरुषाघोरवामदेवसद्योजातेशसंज्ञकान् पञ्चमन्त्रान् ललाटांसजठरहृदयेषु क्रमात् न्यसेत् । पुनरिमं मन्त्रं जपेत् ॥

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शम्भवे ॥

पुनरनेनैव मन्त्रेण निजदेहे पुष्पमुद्रया पुष्पाञ्जलिं कुर्यात् त्रिवारं वा । एवात्मपूजां कृत्वा, पुनर्बाह्यपूजामारभेत ॥

पूर्वोक्तशैवपीठे समावाह्य पञ्चाक्षरमूर्तिं समर्चयेत् । अङ्गैः प्रथमावृतिः । तत्पुरुषाय नमः, अघोराय० सद्योजाताय० वामदेवाय० ईशानाय० निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० शान्त्यतीतायै० इति । तत्र मूर्तयो दिक्षु दिक्षु, ईश ऐशान्ये । शक्तयो विदिक्षु ऐशान्ये च । इति द्वितीयावृतिः । वृषाय० क्षेत्रपालाय० चण्डेश्वराय० दुर्गायै० गुहायै० नन्दिने० गणपाय० सैन्यपाय० इति तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी । एवं संपूज्यानेन स्तोत्रेण स्तोतव्यो महेश्वरः ॥

नमो विरिञ्चिविष्ण्वीशभेदेन परमात्मने ।
सर्गसंस्थितिसंहारव्याप्तिव्यस्तमूर्तये ॥

नमश्चतुर्धा प्रोद्भूतभूतभीतात्मने भुवः ।
भूरिभारार्तिसंहर्त्रे भूतनाथाय शूलिने ॥

विश्वग्रासाय विलसत्कालकूटविषाशिने ।
तत्कलङ्काङ्कितग्रीवनीलकण्ठाय ते नमः ॥

नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मने ।
ध्वस्तस्मरनिरस्ताधियोगिध्येयाय शम्भवे ।
नमो देहार्धकान्ताय दग्धदक्षाध्वराय च ॥

चतुर्वर्गप्रभीष्टार्थदायिने मायिनेऽणवे ।
स्थूलाय मूलभूताय शूलदारितविद्विषे ॥

कालहन्त्रे नमश्चन्द्रखण्डमण्डितमौळये ।
विवासरे कपर्दान्तर्भ्रान्ताहि(भ्र)सरिदिन्दवे ॥

देवदैत्यासुरेन्द्राणां मौलिघृष्टांघ्रये नमः ।
भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने ॥

व्यक्ताव्यक्तस्वरूपाय शंकराय च ते नमः ।

नमोऽन्धकान्तकरिपवे पुरद्विषे नमोऽस्तु ते द्विरदवराहभेदिने ।
विषोल्लसत्फणिकुलबन्धमूर्तये नमस्सदा वरवृषवाहनाय ते ॥

वियन्मरुद्धुतवहवार्वसुन्धरा मखेशरव्यमृतमयूखमूर्तये ।
नमस्सदा नरकभयावभेदिने भवेह नो भवभयभङ्गकृद्विभो ॥

एवं स्तुत्वा पुनरुद्वासयेत्स्वेहृदयाम्बुजे । पुनरपि देहं समभ्यर्च्य यथाशक्तिजपेत् ॥

अथ शैवपूजाविधानप्रसङ्गात् पार्थिवलिङ्गपूजाविधिः —

मृदाहरणसङ्घट्टप्रतिष्ठाह्वानकर्म च ।
स्नपनं पूजनं चाथ विसर्जनमतः परम् ॥

हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशोः पतिश्शिवश्चैव महादेवेति नामभिः ॥

हर इत्यादि सप्तभिर्नामभिः मृदाहरणादि सप्तकर्म कुर्यात् ॥

अथास्य पञ्चाक्षरस्य प्रयोगा मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यन्ते —

आरुह्य पर्वतं पुण्यं जपेल्लक्षमतन्द्रितः ।
लक्षद्वयं महानद्यां महदायुष्यमाप्नुयात् ॥

दूर्वाङ्कुरैस्तिलैर्वापि गळूचीशकलैस्तथा ।
होमात्तु दशसाहस्रं जायते चिरजीवितम् ॥

आदित्याभिमुखो भूत्वा जपेल्लक्षमनन्यधीः ।
अष्टावष्टशतं नित्यं जुहुयात् व्याधिशान्तये ॥

समस्तव्याधिशान्त्यर्थं जुहुयादयुतं नरः ।
पलाशसमिधो वह्नौ नीरोगी मनुजो भवेत् ।
शनैश्चरदिनेऽश्वत्थं स्पृशन्नष्टोत्तरं शतम् ॥

शनैश्चरकृता पीडा जपतो नश्यतेऽखिला ।
नित्यमष्टशतं जप्त्वा पिबेत्पाथोऽर्कसन्निधौ ॥

औदर्यैस्तु महारोगैः मासेनैकेन मुच्यते ।
स्पृष्ट्वैकादशसाहस्रं जपन्नन्नमदंस्तु वा ॥

आरोग्यं तत्क्षणात्तस्य विषमप्यमृतं भवेत् ।
चन्द्रसूर्यग्रहे पूर्वमुपोष्य विधिना शुचिः ॥

यावद्ग्रहणमोक्षं तु तावन्नद्यां समाहितः ।
जपेत्समुद्रगामिन्यां पिबेत्तन्मन्त्रितं तु वा ॥

अष्टोत्तरसहस्रेण पिबेद्ब्राह्मीरसं द्विजः ।
महासारस्वतं तेन सर्वशास्त्रप्रकाशनम् ॥

चन्द्रसूर्यग्रहे लिङ्गं समभ्यर्च्य यथाविधि ।
यत्किञ्चित्प्रार्थयेद्देवं जपेदयुतमादरात् ।
सर्वान्कामानवाप्नोति पुरुषो नात्र संशयः ॥

अथास्य यन्त्रमपि मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते—

तत्रादौ षट्कोणमण्डलं लिखित्वा तदन्तः साध्यनामयुक्तं प्रासादबीजं विलिख्य, षट्कोणेषु प्रणवसहितान् पञ्चाक्षरवर्णान् कोणविवरेषु षडङ्गमन्त्रान् विलिख्य, तद्बहिः पञ्चदळानि विरचय्य, तद्दळेषु ईशानादिपञ्चब्रह्मनामानि प्रागादिक्रमेण चतुर्थीनमोन्तानि विलिखेत्। तद्बहिरष्टदळानि रचयित्वा तद्दळेषु मातृकाष्टवर्गान् कादिपञ्चकं, यादित्रितयं, इत्येवं विलिख्य, तद्बहिः वृत्ते त्र्यम्बकेन वेष्टयेत्। एतद्यन्त्रं जपहोमसाधितं धारयतः आयुरारोग्यैश्वर्य-सर्वसंपत् सर्वरक्षा भुक्तिमुक्तिफलानि भवन्ति ॥

अथ प्रसङ्गात् श्रीरुद्रमहान्यासः —

अथातः पञ्चाङ्गरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामः ।

या ते रुद्रेति शिखायां, अस्मिन्महत्यर्णवे इति शिरसि, सहस्राणीति ललाटे, हंसश्शुचिरदिति भ्रुवोर्मध्ये, त्र्यम्बकं यजामहे इति नेत्रयोः, मानस्तोकेति नासिकायां, अवतत्येति मुखे, नीलग्रीवौ द्वौ कण्ठे, नमस्ते अस्त्वायुधायेति बाह्वोः, या ते हेतिरिति उपबाह्वोः, ये तीर्थानीति हस्तयोः, सद्योजातमिति पञ्चानुवाकान् पञ्चस्वङ्गुळीषु, नमो वः किरिकेभ्य इति हृदये, नमो गणेभ्य इति पृष्ठे, नमो हिरण्यबाहव इति पार्श्वयोः, विज्यं धनुरिति जठरे, हिरण्यगर्भ इति नाभौ, मीढुष्टमेति कट्यां, ये भूतानामधिपतय इति गुह्ये, ये अन्नेष्विति अण्डौ (अण्डयोः) ईड्यश्चासीत्यपाने, मानो महान्तमिति ऊर्वोः, एष ते रुद्र इति जान्वोः, संसृष्टजिदिति जङ्घयोः, विश्वं भूतं इति गुल्फयोः, ये पथामिति पादयोः, अध्यवोचदिति कवचं. नमो बिल्मिन इति उपकवचं, नमो अस्तु नीलग्रीवायेति तृतीयं नेत्रं (नेत्रत्रितयं) प्रमुञ्च धन्वन इत्यस्त्रं, य एतावन्तश्चेति दिग्बन्धः, ओं नमो भगवते रुद्रायेति नमस्कारं न्यसेत् ॥

ओंकारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः ।
मोकारं तु ललाटे वै भकारं मुखमध्यतः ॥

गकारं कण्ठदेशे तु वकारं हृदि विन्यसेत् ।
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ॥

द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत् ।
सद्यं च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः ॥

अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत् ।
ईशानं मूर्ध्नि विन्यस्य हंसो नाम सदाशिवः ॥

हंम हंसेति यो ब्रूयात् हंसो नाम सदाशिवः ।
एवं न्यासविधिं कृत्वा ततः संपुटमारभेत् ॥

त्रातारमिन्द्रं, त्वं नो अग्ने, सुगं नः पन्थां, असुन्वन्तं, तत्वायामि,

आनोनियुद्भिः, वयं सोम, तमीशानं, अस्मे रुद्रा, स्योनापृथिवि, इत्येतैस्संपुटमिन्द्रादिदिक्षु विन्यस्य, एवमेवात्मनि रौद्रीकरणं कृत्वा, त्वगस्थिगतैः सर्वपापैः प्रमुच्यते। सर्वभूतेष्वपराजितो भवति। ततो भूत-प्रेत-पिशाच-ब्रह्मराक्षस-यमदूत-शाकिनी- डाकिनी- सर्प- श्वापद- तस्कराद्युपद्रवास्सर्वे ज्वलन्तं पश्यन्तु। मां रक्षन्तु। मनोज्योति, रवोद्भयग्ने, रग्निर्मूर्धा, मूर्धानं, मर्माणि ते, जातवेदा, इति गुह्य-नाभि-हृदय-कण्ठ-मुख-शिरस्स्वभिमन्त्र्य आत्मरक्षा कर्तव्या ॥

शिवसंकल्पं हृदयं, पुरुषसूक्तं शिरः, उत्तरनारायणं शिखा, अप्रतिरथं कवचं, प्रतिपूरुषं नेत्रं, शतरुद्रीयमस्त्रम्। एवं पञ्चाङ्गं सकृज्जपेत्। अष्टाङ्गं प्रणम्य, हिरण्यगर्भः, यः प्राणतो, ब्रह्मजज्ञान, मही द्यौः, उपश्वासय, अग्ने नय, याते अग्ने, इमं यमः प्रस्तरमाहि सीदेत्यष्टाङ्गं प्रणम्य, अथात्मानं रुद्ररूपं ध्यायेत् ॥

शुद्धस्फटिकसंकाशं त्रिणेत्रं पञ्चवक्त्रकम्।
गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥

दशभुजेष्वभयवरदशक्तिशूलाक्षमालापिनाकडमरुखट्वाङ्गनीलोत्पलबीजपूरफलयुक्तं नीलग्रीवं शशाङ्कचिह्नं नागयज्ञोपवीतिनम्।

नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् ॥

नागाभरणभूषितं (भूषाढ्यं) व्याघ्रचर्मोत्तरीयकम्।
ज्वलन्तं कपिलजटिलं शिखाविद्योतकारणम् ॥

वृषस्कन्धसमारूढमुमादेहार्धधारिणम्।
अमृतेनाप्लुतं हृष्टं दिव्यभोगसमन्वितम् ॥

दिग्देवतासमायुक्तं सुरासुरनमस्कृतम्।

नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥

सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ।
एवं ध्यात्वा द्विजस्सम्यक् ततो यजनमारभेत् ॥

पूर्वोक्तानां न्यासमन्त्राणामत्यन्ताप्रसिद्धानामादिग्रहणं क्रियते —

या ते रुद्र शिवातनूरघोरापा इत्यृक्, अस्मिन्महत्यर्णवेन्तरिक्षे इत्यृक्, सहस्राणि सहस्रशो ये इत्यृक् [1]त्र्यम्बकमन्त्रः, अवतत्यधनुस्त्वं सहस्रेत्यृक्, नीलग्रीवाश्शितिकण्ठा + चराः तेषां सहस्रेत्यृक्, नीलग्रीवाश्शितिकण्ठा दिवं + तेषामित्यृक्, नमस्ते अस्त्वायुधायानातताय इत्यृक्, याते हेतिर्मीढुष्टम इत्यृक्, ये तीर्थानि प्रचरन्ति इत्यृक्, सद्योजातं प्रपद्यामि इत्यृक्, वामदेवायेति पञ्च ऋचः, नमो वः किरिकेभ्यो देवानां इत्यृक्, नमो गणेभ्यो गणपतिभ्यः + वो नम इत्यन्तं, नमो हिरण्यबाहवे सेनान्ये इत्यृक्, विज्यं धनुः कपर्दिन इत्यृक्, मीढुष्टम शिवतम इत्यृक्, ये भूतानामधिपतय इत्यृक्, ये अन्नेषु विविध्यन्तीति ऋक्, ईड्यश्चासि वन्द्यश्चेति ऋक्, मानो महान्तमित्यृक्, एष ते रुद्रभागस्तं जुषस्वेत्यृक्, संसृष्टजित्सोमपा बाहुशर्ध्यू इत्यृक्, विश्वं भूतं भुवनं चित्रं इत्यृक्, ये पथां पथिरक्षय इत्यृक्, अध्यवोचदधिवक्ता इति ऋक्, नमो बिल्मिने च कवचिने च इत्यृक्, नमो अस्तु नीलग्रीवाय सहस्रेत्यृक्, प्रमुञ्चधन्वनस्त्वमुभयोरिति ऋक्, य एतावन्तश्च भूयांसश्च इति ऋक्, त्रातारमिन्द्रमवितारमिन्द्रं इति ऋक्, त्वन्नो अग्ने वरुणस्य इति ऋक्, सुगं नः पन्थामभयं कृणोतु इति ऋक्, असुन्वन्तमयजमानमिच्छेत्ऋक्, तत्वायामि ब्रह्मणा इति ऋक्, आनो नियुद्भिश्शतनीभिरध्वरं इति ऋक्, वयं सोम व्रते इति ऋक्, तमीशानं जगतः इति ऋक्, अस्मे रुद्रा मेहना पर्वतास इति ऋक्, स्योना पृथिवि भवा इति ऋक्। रौद्रीकरणमन्त्रस्तु विभूरसि प्रवाहणो रौद्रेणानीकेन +

१. हंसश्शुचिषत् वसुरन्तरिक्षसत् इति ऋक् त्र्यम्बकमन्त्रः, इति ख, ग, ङ, मातृकापाठः ।

हिंसीः, वह्निरसि हव्यवाहनः रौद्रेणानीकेन + हिंसीः, इत्यादिप्रतिवाक्यं
[1]अनुवाकः, मनो ज्योतिर्जुषतामिति ऋक्, अबोध्यग्निः समिधा जनानां
इति ऋक्, अग्निर्मूर्धा इतिऋक्, मूर्धानं दिवो इति ऋक्, मर्माणिते वर्मभिः
छादयामि इतिऋक्, जातवेदसे इति ऋक् ॥

शिवसंकल्पो लिख्यते —

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा [2]चारुदन्ति ।
यत्संमितं मनसं यन्ति प्राणिनस्तन्मे मनश्शिवसंकल्पमस्तु ॥ २ ॥

येन कर्मण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्नऋते न किञ्चन कर्म क्रियते तन्मे मनश्शिवसंकल्पमस्तु ॥ ४ ॥

सुषारथीरश्वानि वयं मनुष्या नेनीयन्ते शुभिर्वाजिनीव ।
यत्प्रतिष्ठैर्यदचरैर्यविष्ठं तन्मे मनश्शिवसंकल्पमस्तु ॥ ५ ॥

यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठा रचना भाति भाराः ।
यस्मिन् चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

यदत्र षष्ठं त्रिशतं शरीरं यज्ञस्य गुह्यं नवनाववार्यम् ।
दशपञ्चत्रिशतं यत्सहस्रं तन्मे मनः शिवसंकल्पमस्तु ॥ ७ ॥

यज्जाग्रतो दूरमुदैतु दैवतं तदुसुप्तस्य तथा चैतिदूरम् ।
गमज्योतिषा ज्योतिरेकं तन्मे मनश्शिवसंकल्पमस्तु ॥ ८ ॥

---

१ अनुषज्जनीयं इति ङ पाठः । २ चारुयन्ति इति ङ पाठः ।

येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च ।
तेनेदं जगत् व्याप्तं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ९ ॥

ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मयः ।
ते श्रोत्रे चक्षुषी संचरन्तं तन्मे मनः शिवसंकल्पमस्तु ॥ १० ॥

अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तं परं च यत् ।
सूक्ष्मात्सूक्ष्मतरं ज्ञेयं तन्मे मनः शिवसंकल्पमस्तु ॥ ११ ॥

एका च दश शतं च सहस्रं चायुतं च
नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च ।
समुद्रश्च मध्यं चान्तश्च परार्धश्च
तन्मे मनः शिवसंकल्पमस्तु ॥ १२ ॥

ये च पञ्च पञ्चदश शतसहस्रमयुतं न्यर्बुदं च ।
ये अग्निचित्तेष्टकास्तं शरीरं तन्मे मनः शिवसंकल्पमस्तु ॥ १३ ॥

वेदाहमेनं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
यस्य योनिं परिपश्यन्ति धीराः तन्मे मनः शिवसंकल्पमस्तु ॥ १४ ॥

यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वां वृणीत विन्दुम् ।
स्थावरं जङ्गमं द्यौराकाशं तन्मे मनः शिवसंकल्पमस्तु ॥ १५ ॥

परात्परं चैव यत्पराच्चैव यत्परम् ।
यत्परात्परतो ज्ञेयं तन्मे मनः शिवसंकल्पमस्तु ॥ १६ ॥

परात्परतरं ब्रह्म तत्परात्परतो हरिः ।
यत्परात्परतोधीशः तन्मे मनः शिवसंकल्पमस्तु ॥ १७ ॥

यो वेदादिषु गायत्री सर्वव्यापी महेश्वरी ।

ऋग्यजुस्सामाथर्वैश्च तन्मे मनः शिवसंकल्पमस्तु ॥१८॥

यो वै देवं महादेवं प्रणवं पुरुषोत्तमम् ।
यस्सर्वे सर्वतश्चैव तन्मे मनः शिवसंकल्पमस्तु ॥ १९ ॥

प्रयतः प्रणवोङ्कारं प्रणवं पुरुषोत्तमम् ।
ओंकारं प्रणवात्मानं तन्मे मनः शिवसंकल्पमस्तु ॥ २० ॥

योसौ सर्वेषु वेदेषु पठ्यते ह्यज ईश्वरः ।
अकायो निर्गुणो ह्यात्मा तन्मे मनः शिवसंकल्पमस्तु ॥ २१ ॥

गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभिः पुष्कराक्षं तन्मे मनः शिवसंकल्पमस्तु ॥ २२ ॥

मानो महान्तमुतमानो अर्भकं मान उक्षन्तमुत मान उक्षितम् ।
मानोवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्ररीरिष
तन्मे मनः शिवसंकल्पमस्तु ॥ २३ ॥

मानस्तोके तनये मान + विधेमते + तन्मे मनः शिवसंकल्पमस्तु ॥२४॥

प्रजापते नत्व + रयीणां । तन्मे मनः शिवसंकल्पमस्तु ॥ २५ ॥

स्वस्तिदा विशस्पतिः + अभयं करः । तन्मे मनः शिवसंकल्पमस्तु ॥२६॥

त्र्यम्बकं + मा मृतात् । तन्मे मनः शिवसंकल्पमस्तु ॥ २७ ॥

ऋतं सत्यं + विरूपाक्षं तन्मे मनः शिवसंकल्पमस्तु ॥ २८ ॥

यो रुद्रो अग्नौ + नमो अस्तु तन्मे मनः शिवसंकल्पमस्तु ॥ २९ ॥

विश्वतश्चक्षुरुतविश्वतो मुखो + देव एकः । तन्मे मनः शिवसंकल्पमस्तु ॥

चतुरो वेदानधीयीत * सर्वशास्त्रमयो विदुः ।

---

* सर्वशास्त्रमयो इति ग, ङ, पाठः ।

इतिहासपुराणानां तन्मे मनः शिवसंकल्पमस्तु ॥ ३१ ॥

कैलासशिखरे रम्ये शङ्करस्य शिवालये ।
देवतास्तत्र मोदन्ति तन्मे मनः शिवसंकल्पमस्तु ॥ ३२ ॥

यः प्राणतो निमिषतो महित्वा+विधेम । तन्मे मनः शिवसंकल्पमस्तु ॥

य आत्मदा बलदा यस्य विश्वं+विधेम । तन्मे मनः शिवसंकल्पमस्तु ॥

ब्रह्मजज्ञानं+असतश्च विवः । तन्मे मनः शिवसंकल्पमस्तु ॥ ३५ ॥

गन्धद्वारां+श्रियम् । तन्मे मनः शिवसंकल्पमस्तु ॥ ३६ ॥

य इमं शिवसङ्कल्पं सदा ध्यायन्ति ब्राह्मणाः ।
ते परं मोक्षं गमिष्यन्ति तन्मे मनः शिवसंकल्पमस्तु ॥ ३७ ॥

पुनः सहस्रशीर्षा पुरुषः इत्यादि सन्ति देवाः इत्यन्तं, अद्भ्य-स्संभूतः पृथिव्यै रसाच्च इत्यादि सोक्षरः परमः स्वराट् इत्यन्तं, आशुश्शिशानो वृषभ इत्यादि शर्म यच्छतु इत्यन्तं, प्रतिपूरुषमेककपालाद्यनुवाकं, (तद्ब्राह्मणं च) त्वमग्ने रुद्रो असुरो इत्यनुवाकद्वयं, पञ्चाङ्गं तु हंसश्शुचिषद्वसुः प्रतद्विष्णुस्तव, त्र्यम्बकं, तत्सवितुर्वरेण्यं विष्णुर्योनिं कल्पयतु एतेन ऋक्पञ्चकेन पञ्चाङ्गानि ।

हिरण्यगर्भः समवर्तताग्रे, यः प्राणतोनिमिषतो, ब्रह्मजज्ञानं प्रथमं, महीद्यौः पृथिवी च न इमं यज्ञं, उपश्वासय पृथिवीमुतद्यां, अग्ने नय सुपथा राये, याते अग्ने यज्ञिया, इमं यमः प्रस्तरमाहि, इत्यादयो ऋचः । ततो ध्यानम् । एवमुक्तस्य न्यासस्य मन्त्रसंग्रहः इति श्रीरुद्रन्यासस्समाप्तः ॥

अथ श्रीरुद्रन्यासप्रसङ्गात् श्रीरुद्रयन्त्रमपि लिख्यते —

त्रिपञ्चशूलं चतुरश्रकं तथा वह्निश्च तारं हुतभुक्समन्वितम् ।

विचिन्तय चिदम्बरे हृदयसंपदे शाश्वतं
विरिञ्चिकरकन्दुकं चरणमिन्दुचूडामणेः ॥

ध्यानान्तरम् —

वामे हस्तेऽथ वह्निं [1] नयितुमथ करे दक्षिणे चित्स्वरूपं
शब्दब्रह्मैकनिष्ठं डमरुमभयदं यं वकारं च वामे ।
हस्ते श्रीदक्षिणेन स्वपदसरसिजेनात्ममोहं म धाम्ना
चाक्रम्यावस्थितं त्वां भजति हि निटिले निग्रहानुग्रहाभ्याम् ॥

ह्रीं श्रीं मन शिवाय ॥ इति द्वितीयमूलमन्त्रः ॥

अथ ध्वनिमन्त्रः —

[2] शिव शिव शरणं शिवानन्दं शिव शिव शिवाय शिवाय नमः ॥

त्रयोविंशतिवर्णात्मा ध्वनिमन्त्र उदाहृतः ।
भ्रूमध्ये दीपवत्संस्थं ताण्डवं स्वस्य चिन्त्य तु ॥

सदा जपेदिमं मन्त्रं ताण्डवं भावमाश्रितः ।

शिवाय नमः । आकर्षणाख्यमन्त्रः । यनमशिवा इति स्तम्भनमन्त्रः। मशिवायन इति मोहनमन्त्रः । वायनमशि इति संहारमन्त्रः । नमश्शिवाय इति उच्चाटनमन्त्रः ॥

आकर्षणाद्या मन्त्रः लक्षमात्रेण सिद्धिदाः ।
श्रीमत्ताण्डवचरणौ सदा शरणमहं प्रपद्ये ।

इति ताण्डवमन्त्रः ॥

---

१. न युतमथ इति ख, ग, मातृकापाठः ।

२. शिव शिव चरणं इति, ख, ग, ङ. पाठः ।

आकर्षणयन्त्रम् — ठकारमध्ये शिनमयवा इति विलिखेत् ॥

स्तम्भनयन्त्रम् — चतुरश्रं विलिख्य कोणेषु चतुर्षु लंकारं विलिख्य तन्मध्ये नकारं विलिखेत् ॥

मोहनयन्त्रम् — अर्धचन्द्राकारं विलिख्य तन्मध्ये मकारं विलिखेत् ॥

संहारयन्त्रम् — त्रिकोणं विलिख्य तन्मध्ये शिकारं विलिखेत् ॥

उच्चाटनयन्त्रम् — षट्कोणं विलिख्य तन्मध्ये वाय इत्यक्षरद्वयं विलिखेत् ॥

एतानि यन्त्राणि तेन तेन मन्त्रेण जपेच्च। मवयनशि इति गोरक्षामन्त्रः ॥ क्लीं एहि एहि जगच्चक्रं सर्वार्थं सर्वशोभितम्। सर्वैश्वर्यं जगदाधारं अस्मिन् चक्रे प्राणप्रतिष्ठां कुरु कुरु स्वाहा। इति चक्रप्राणप्रतिष्ठामन्त्रः ॥

अथ चिदम्बरसभानटनमन्त्रः —

सदाशिव ऋषिः। निचृद्गायत्री छन्दः। महादेवः चिदम्बरसभानटो देवता। अं बीजम्। उं शक्तिः। मं कीलकम्। ओं ह्रीं परंज्योतिर्हंस हंस हृत्। व्योम व्योम व्योम्ना शक्तिः शिरः। शिवज्योतिरानन्दनृत्त शिखा। परप्रकाशानन्दनाथ कवचम्। रत्नपादुकां पूजयामि नेत्रम्। ह्रीं शिवायै नमः अस्त्रम्। अङ्गमन्त्र एव मूलमन्त्रः। सप्तार्णवपरिक्षेप इत्यादिध्यानम् ॥

अथ रक्षाकरप्रधानचिदम्बरमन्त्रान्तरमपि लिख्यते —

सदाशिव ऋषिः। विराट् छन्दः। चिदम्बरनटेशो देवता। श्रीं बीजम्। ह्रीं शक्तिः। चित् कीलकम् ॥ पञ्चमाक्षररहितेन कादिवर्गपञ्चकेन च यादिचतुष्टयेन च षडङ्गानि कुर्यात् ॥ ध्यानम् —

सुवर्णरक्तद्युतिमिश्ररूपं विनिग्रहे यः पुनरूर्ध्वभागे।

अनुग्रहे श्यामलकृष्णवर्णं श्रीमन्त्ररूपं परमार्थदायि ॥

ओं ह्रीं श्रीं नमश्शिवाय शिवशिव [1]शरणं शिवानन्दं शिव शिवाय शिवाय हिमवानस वानस विपं शून्यमिचेरण्डुं चाकस्वाहा ॥

अथ चिदम्बरपञ्चाक्षरमन्त्रप्रसङ्गात् गरुडपञ्चाक्षरमन्त्रोऽपि लिख्यते—

काश्यप ऋषिः । पङ्क्तिः छन्दः । श्रीगरुडो देवता । क्षां हृत् । क्षीं शिरः । इत्याद्यङ्गानि । ध्यानम्—

अमृतकलशहस्तं कान्तिसंपूर्णदेहं
सकलविबुधवन्द्यं वेदशास्त्रैरचिन्त्यम् ।
[2] विबुधसुलभपक्षैर्धूयमानाण्डगोळं
सकलविषविनाशं चिन्तयेत्पक्षिराजम् ॥

क्षिप ओं स्वाहा । इति मन्त्रः । अनेन मन्त्रेण जलसेचनादिना विषनाशो भवति ॥

अथ गरुडपञ्चाक्षरमन्त्रप्रसङ्गात् गरुडपञ्चाक्षरयन्त्रमपि मन्त्रसारोक्तं लिख्यते—

मध्ये तारं साध्ययुक्तं लिखेत्कोणेषु पञ्चसु ।
क्षाद्यर्णान्पञ्च तद्बाह्ये वसुपत्रोदरे ततः ॥

प्रीं त्रीं ठः वं हंसस्सोहं इति वर्णान् क्रमाल्लिखेत् ।
तद्बाह्ये तत्त्वगरुडमन्त्रेणावेष्ट्य तद्बहिः ॥

मातृकार्णैश्च संवेष्ट्य भूपुराश्रिषु च क्रमात् ।
आग्नेये ठं निर्ऋत्यां वं वायौ हंसः शिवे ततः ॥

---

१ चरणं इति ख, ग, पाठः । २ विविधसुलभ इति ख, ग, पाठः ।

यथाप्रकारं कुगृहे यच्चनन्तं महामनुम् ।
इत्येवं गारुडं यन्त्रं प्रोक्तं सर्वविषापहम् ॥

ताम्रपट्टे समालिख्य स्थापितं निजवेश्मनि ।
सर्पानुचाटयत्याशु देशाद्देशान्तरं क्षणात् ॥

*यच्चनन्तकद्रूतोसीत्यादिगारुडोपनिषदुक्त अष्टनागविषयो यच्चनन्तमन्त्रः।*
तत्वगरुडमन्त्रः —

ओं नमो भगवते तत्वगरुडाय अमृतकलशोद्भवाय विष्णुवाहनाय वालखिल्यानुजाय हंससहचराय वासवोद्यानसंहननाय वज्रनखतुण्डवज्रपक्षालं-कृतशरीराय विनतानन्दनाय दुष्टसर्पगर्वविषहननाय नागान्तकाय असुरान्तकाय *यौं म्यौं दुष्टविषं छिन्धि छिन्धि आवेशय आवेशय दुष्टग्रहं छिन्धि छिन्धि आवेशय आवेशय असुरग्रहं वा यक्षग्रहं वा देवग्रहं वा ग्रथनग्रहं वा गाढशृङ्खलग्रहं वातिकग्रहं वा पैत्यकग्रहं वा शैत्यग्रहं वा स्कन्दग्रहं वा विनायक-ग्रहं वा सोमग्रहं वा सूर्यग्रहं वा एकाहिकग्रहं वा द्व्याहिकग्रहं वा चातुर्थिक-ग्रहं वा ज्वरग्रहं वा यदि रुद्रग्रहं वा यदि रुद्रलोकग्रहं वा शीघ्रमावेशयावेशय हन हन दह दह मथ मथ विध्वंसय विध्वंसय चट चट प्रचट प्रचट हुं ख (फट्) रुद्र आज्ञापय स्वाहा । अवशिष्टः स्पष्टार्थः॥

अस्यैव गरुडपञ्चाक्षरमन्त्रस्य जपपूजादिकं प्रकारान्तरेण लिख्यते —

दक्ष ऋषिः । पङ्क्तिः छन्दः । लक्ष्मीशसहितश्रीगरुडो देवता । ओं क्षि ओं हृत् । ओं पं ओं शिरः ओं ओं ओं शिखा । ओं स्वां ओं कवचम् । ओं हां ओं नेत्रम् । ओं क्षिप ओं स्वाहा अस्त्रम् ॥

मूर्धास्यहृदयनाभौ पादयोरक्षरान् न्यसेत् ।
नाभिपादशिरोवक्त्रहृदयेषु क्षितिं न्यसेत् ॥

*यौं म्यौं, इति ख, ग, पाठः । फट्यौं म्यौं इति ङ पाठः ।

पादादिमूर्धपर्यन्तं संहारन्यासलक्षणम् ।

गारुडकल्पोक्तम् ॥

संहारपूर्वः सृष्टयन्तो वर्णिनामुपवर्ण्यते ।
संहारपूर्वः स्थित्यन्तो गृहस्थानामुदाहृतः ॥

वानप्रस्थाश्रमादीनां यतीनां यतचेतसाम् ।
द्वयोरन्यतरस्यान्ते संहारस्समुदाहृतः ॥*

---

* अयमधिकः पाठः ख मातृकायां परं भवति —

गरुडपञ्चाक्षरस्याङ्गमन्त्रान्तरम् —

ज्वल ज्वल महामते स्वाहा हृत् । गरुडचूडामणे स्वाहा शिरः । गरुडशिखायै स्वाहा शिखा । गरुडप्रभञ्जन प्रभञ्जन प्रभेदन प्रभेदन मर्दन मर्दन कवचम् । उग्ररूपधारक सर्वसर्पभयंकर भीषय भीषय सर्पं (पान्) दह दह भस्मीकुरु (भस्मी) कुरु स्वाहा नेत्रम् । अप्रतिहतशासन हुंफट् स्वाहा अस्त्रम् । गरुडपञ्चाक्षरमन्त्रस्य द्वादशलक्षजपः ॥

घृतेन वा घृतसिक्तेन शालिपिष्टेन वा दशांशं होमः ॥

अथ पूजाविधिः —

वैष्णवपीठे समावाह्य, अङ्गैः प्रथमावृतिः । ओं सुं सुपर्णाय नमः । ओं गं गरुडाय नमः । ओं वैं वैनतेयाय नमः । ओं तां तार्क्ष्याय नमः । इति दिग्दलेषु । ओं लं लक्ष्म्यै नमः । ओं कीं कीर्त्यै नमः । ओं जं जयायै नमः । ओं मां मायायै नमः । इति विदिग्दलेषु इति द्वितीयावृतिः । ओं कुं कुमुदाय नमः । ओं कुं कुमुदाक्षाय नमः । ओं पुं पुण्डरीकाक्षाय नमः । ओं वां वामदेवाय० ओं सं सनकाय० ओं सं सनत्कुमाराय० ओं शं शङ्कुकर्णाय० ओं सं सर्वनेत्राय० ओं सुं सुमुखाय० ओं सुं सुप्रतिष्ठाय० इत्येतैर्दशभिः तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी ॥

हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके ।
तर्जन्यौ प्रसृते श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥

मध्यमानामिके द्वे तु द्वौ पक्षाविव चिन्तयेत् ।
एषा गरुडमुद्रा स्यादशेषविषनाशिनी ॥

अथ गरुडपञ्चाक्षरस्य फलमाह—

भूतपिशाचपैत्यगरळरोगोन्मादज्वरापस्मृतिग्रन्थिच्छेदादिमहोदराश्मपवनाचित्रादि रोगापहम् ॥

अथ गरुडमन्त्रप्रसङ्गात् कल्पान्तरोक्तप्रकारेण आशुगरुडमन्त्रोऽपि लिख्यते—

शङ्कर ऋषिः । जगती छन्दः । आशुताक्ष्यों देवता । ग बीजत् । स्वाहा शक्तिः । सर्वविषहरणे विनियोगः । गां हृत् । गीं शिरः । इत्याद्यङ्गानि । ध्यानम्—

आजानोस्तप्तहेमप्रभममलहिमप्रख्यमानाभि तस्मा-
दाकण्ठं कुङ्कुमाभं भ्रमरकुलमिव श्याममामूर्धकेशम् ।
ब्रह्माण्डव्याप्तदेहं द्विभुजमहिवरैर्भूषणैर्भूषिताङ्गं
पिङ्गाक्षं तीक्ष्णदंष्ट्रं वरदमभयदं ताक्ष्र्यमुग्रं नमामि ॥

ओं श्री श्रीं गरुडाय गरुडाय महागरुडाय समस्ताण्डाण्डबहिस्त्रैलोक्यनायकाय नागशोणितदिग्धाङ्गाय ओं पक्षिराजाय विष्णुवाहनाय सर्वसर्पान् संहर संहर मठ मठ मर्दय मर्दय मोटय मोटय लोटय लोटय त्रोटय त्रोटय भ्रामय भ्रामय मुञ्च मुञ्च आकर्षय आकर्षय आगच्छ आगच्छ आवेशय आवेशय सिद्धय सिद्धय शीघ्र शीघ्र समस्तभूतवेताळान् नाशय नाशय सर्वग्रहान् नाशय नाशय सर्वशत्रून् विनाशय विनाशय सर्वसर्पान् संहर संहर स्वाहा इति मन्त्रः । षट्सप्तत्युत्तरशताक्षरोऽयं मन्त्रः । *विषहरणभूतनिग्रहप्रधानोयं मन्त्रः ॥ द्वादशसहस्रजपः । नागरूपपिष्टेन तिललाजपायसघृतगुळैश्च शतांशं (दशांशं) होमः । पूर्वोक्तवत् पूजा ॥

*अत्र अक्षरसंख्या तु यथामातृकं अधिकतया भवति । निर्दिष्टाक्षरात्मकत्वेन समर्थनं तु सुधीभिर्द्रष्टव्यम् ।

अथ यन्त्रम् –

षट्कोणान्तरिताग्निवायुलिखितं मायां च सप्तार्णकं
कोणेष्वग्निषु साध्यवर्णसहितं तद्वाह्यचिन्तामणिम् ।
पं शं शक्तिसबिन्दुकं च विलसद्वाह्येऽङ्कुशेनावृतं
तारेणावृतबिन्दुनादसहितं सर्पमहादीन् हरेत् ॥

अथवा,

षड्रेखान्तरितानि वायुमनुयुक् मध्याक्षरद्वादशं

कोणेष्विति पाठविशेषः ।

एतच्चक्रं तु संपूज्य जपेदष्टोत्तरं शतम् ।
प्रयोगकाले संप्राप्ते ध्यात्वा भूतं विलोकयेत् ॥

तत्रालोकनमात्रेण क्षिप्रसिद्धिर्भविष्यति ।

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये रमित्यग्निबीजं च य वायुबीजं च ह्रीं इति मायाबीजं च अन्तरन्तर्विलिख्य, ओं विष्णुवाहनाय सप्तार्णकेनावेष्टयेत् । अथवा कर्णिकायां रं इत्यग्निबीजं विलिख्य, तदन्तर्वायुबीजं विलिखेत् । तद्बहिः ओं पक्षिराजाय विष्णुवाहनाय इति द्वादशाक्षरेण वेष्टयेत् इति । पुनः षट्सु कोणेषु साध्यसहितवह्निबीजं विलिख्य, तत्कपोलेषु रक्ष्मऱ्यौऊं (र्क्ष्म्र्य्ऊं) इति चिन्तामणिबीजं विलिखेत् । पुनः आं इति पाशाक्षरेण वेष्टयेत् । तद्बहिः क्रों इत्यङ्कुशबीजेन वेष्टयेत् । तद्बहिः बिन्दुनादसहितेन तारेण वेष्टयेत् । तारं प्रणवं । बिन्दुरित्यनुस्वारः । नादमिति प्रणवरेखाग्रम् । कुण्डलीकृत्यान्तःप्रविष्टमिति ॥

यन्त्रान्तरम् —

द्विरष्टकोष्ठमालिख्य प्रत्येकादशवर्णकम् ।
त्रिशिखं चतुरेखाग्रे तद्रेखाग्रे तु नामकम् ॥

पार्श्वे(वाम)पांसुनि संलिख्य प्राणानावाह्य तत्र तु ।
शत्रोस्तु दिङ्मुखो भूत्वा जपेदष्टोत्तरं शतम् ॥

तद्भस्मदर्शनादेव रिपुं प्रति स गच्छति ।

अस्यार्थः — षोडशकोष्ठान्विलिख्य प्रतिकोष्ठं मूलमन्त्रवर्णान् एकादशवर्णशो विभज्य विलिखेत् । रेखाग्रेषु शूलमालिख्य शूलाग्रेषु साध्यनाम विलिखेत् ॥

यन्त्रान्तरम् —

शिखिऋतुवसुकोणं चाष्टपत्रं भुवं च
ऋतुशतशशिसाग्निर्भास्करं व्योमकं च ।
सकलमनलवायुस्तद्बहिस्साध्यशक्तिं
धृतमृतसुतवन्ध्यागर्भदं तार्क्ष्यमेतत् ॥

अस्यार्थः — प्रथमं त्रिकोणं तद्बहिष्षट्कोणं तद्बहिरष्टकोणं तद्बहिरष्टदळं तद्बहिश्चतुरश्रं च विलिखेत् । तत्र त्रिकोणकोणेषु इन्द्रबीजं लमिति विलिखेत् ।

षट्कोणकोणेषु ळं इति चन्द्रबीजं विलिख्य, अष्टकोणेषु रं इत्यग्निबीजं विलिख्य, अष्टदळेषु सूर्यबीजं ह्रीं इति विलिख्य, भूपुरकोणेषु चतुरश्रेषु आकाशबीजं हं इति विलिख्य, पुनस्त्रिकोणषट्कोणाष्टकोणाष्टदळभूपुरेषु अग्निबीजं वायुबीजं(च) सर्वत्र विलिखेत् ॥

अस्यत्रोपदेशः — प्रथममनलं विलिख्य तदन्तर्वायुबीजं विलिख्य तदन्तस्तत्र तत्रोक्ताक्षराणि विलिखेत् । तद्बहिर्भुवनेशीपुटितसाध्यनामवर्णैः वेष्टयेत् इति ॥

यन्त्रान्तरम् —

षट्कोणं विलिखेत्पूर्वं तदग्रे शूलमालिखेत् ।
वर्तुळं च तु तन्मध्ये मध्ये वायुं विलिख्य तु ॥

षट्कोणे तु लिखेद्बहिं शूलाग्रेष्वथ नामकम् ।
अभिमन्त्र्य चतुर्वारं तत्तोयेनाभिषेचयेत् ॥

तोयदर्शनमात्रेण धावति ध्रुवमम्बिके ।

अथ विषहरगरुडमन्त्रप्रसङ्गात् विषहरनीलकण्ठमन्त्रोऽपि लिख्यते —

हर ऋषिः । अनुष्टुप् छन्दः । नीलकण्ठरुद्रो देवता । प्रों बीजम् । ठः शक्तिः । श्रीं कीलकम् । हर हर स्वाहा हृत् । कपर्दिने स्वाहा शिरः । नीलकण्ठाय स्वाहा शिखा । कालकूटविषभक्षणाय स्वाहा कवचम् । नीलकण्ठिने स्वाहा अस्त्रम् ।

ध्यानम् —

बालार्कायुततेजसं धृतजटाचूडेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥

प्रों श्रीं ठः ॥ इति मन्त्रः ॥

अथ नीलकण्ठमन्त्रप्रसङ्गात् रक्षाप्रधानआपदुद्धारणमन्त्रोपि शिवकिङ्करत्वेन मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते —

बृहदारण्यक ऋषिः । अनुष्टुप् छन्दः । आपदुद्धारणो महावटुकभैरवो देवता । ह्रां वां हृत् । ह्रीं वीं शिरः । इत्याद्यङ्गानि । ह्रां वां बीजम् । ह्रीं वीं शक्तिः । ह्रूं वूं कीलकम् । भूतप्रेतपिशाचाद्युच्चाटनार्थे विनियोगः ।

---

यन्त्रान्तरम् —

अर्धचन्द्राकृतिं कृत्वा मध्ये वारुणमालिखेत् ।
कोणद्वये तु जुं सं च ग्रंकारेण तु वेष्टयेत् ।

एतद्यन्त्रं महावीर्यं दर्शनात्पावनं परम् ॥
यत्र कीलालमत्राग्निः प्रब्र(प्रज्र)ज्वलि न संशयः ।

तत्र वं इति वरुणबीजम् ।

करकलितकपालः कुण्डली दण्डपाणिः
तरुणतिमिरनीलो व्यालयज्ञोपवीती ।
क्रतुसमयसपर्याविघ्नविच्छेदहेतुः
जयति वटुकनाथः सिद्धिदस्साधकानाम् ॥

ओं श्रीं ह्रीं क्लीं क्ष्म्यूं वटुकाय आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीम् । इति मन्त्रः पञ्चविंशतिवर्णः । तावल्लक्षं जपः । त्रिमधुरसिक्तैः तिलैर्दशांशं पुरश्चरणाहोमः ॥

अस्यैव यन्त्रमाह —

श्रीमायास्मरकूटमत्र विलिखेत् मध्ये दळेष्वष्टसु
द्विः प्रोक्तं वटुकायशब्दमपरान्मन्त्रस्य वर्णान् बहिः ।
अष्टद्वन्द्वदळेषु तद्बहिरचस्तत्संख्यपत्रेष्वथो
यो द्वात्रिंशदळकादिसान्तसहितं यन्त्रं लिखेद्भूपुरे ॥

अस्यार्थः — प्रथममष्टपत्रं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य, तन्मध्ये श्रीं ह्रीं क्लीं क्ष्म्यूं इति चतसृषु दिक्षु विलिख्य तन्मध्ये साध्यनामादीन्विलिखेत् । पुनरष्टदळेषु वटुकाय वटुकायेति द्विरुक्तपदस्यैकैकमक्षरं विलिखेत् । तद्बहिष्षोडशदळं पद्मं विलिख्य, तेषु आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीं एतान्वर्णानेकैकं विलिख्य, तद्बहिष्षोडशदळेषु षोडशस्वरान्विलिख्य तद्बहिर्द्वात्रिंशदळपद्मं विलिख्य, कादिसान्तान् एकैकमक्षरं विलिख्य, तद्बहिः चतुरश्रं विलिखेत् । एतद्यन्त्रं रक्षाकरं भवति ॥

अथ पूजा —

व्योमपद्माङ्कितत्रिकोणषट्कोणवृत्ताष्टदळचतुरश्रात्मकं चक्रं विलिख्य, श्रीं ह्रीं नमः इत्युच्चार्य पुष्पाञ्जलिं विकीर्य, तस्मिन्भैरवं मूलेनावाह्य, मूलेन ईशानादिपञ्चमन्त्रैश्चावाहनादिमुद्राः प्रदर्श्य, देवतातनौ षडङ्गादीन्विन्यस्य,

पाद्यादीनङ्गमन्त्रैर्दत्वा, ईशादिपञ्चमन्त्रैः ऊर्ध्वपूर्वादिपञ्चवक्त्रेषु अभ्यर्च्य, षडङ्गमन्त्रैः हृदयादिषु संपूज्य, परिवारानर्चयेत् । तद्यथा —

श्रीं ह्रीं ईशान वटुकभैरवपादुकेभ्यो ह्रीं श्रीं नमः । श्रीं ह्रीं वामदेव वटुकभैरवपादुकेभ्यो ह्रीं श्रीं नमः । इत्यादिपञ्चमन्त्रान् मध्यमाग्रदक्षिणोत्तर-पश्चिमेषु, कर्णिकायामेव प्रथमावरणम् । अग्नीशासुरवायुकोणेषु पुरतो दिक्षु षडङ्गैर्द्वितीयावरणम् । श्रीं ह्रीं असिताङ्गभैरवपादुकेभ्यो ह्रीं श्रीं नमः । एवमेव रुरुभैरवचण्डभैरवक्रोधभैरव उन्मत्तभैरवकपालीभैरवभीषणभैरव संहारभैरव इति व्योमपद्माष्टदलेषु पूर्वादीशान्तं असिताङ्गभैरवाद्यष्टकेन तृतीयावरणम् । व्योमपद्ममिति कर्णिकावृत्तविशिष्टपद्ममित्यर्थः । श्रीं ह्रीं डाकिनीपुत्रपादुकेभ्यो ह्रीं श्रीं नमः । एवमेव राकिनीलाकिनीशाकिनीहाकिनीकाकिनीः पूर्वादिषट्-कोणेषु डाकिनीपुत्रादिषट्केन चतुर्थावरणम् । तद्बहिः कर्णिकावृत्ते श्रीं ह्रीं शाकिनीपुत्रवटुकेभ्यो ह्रीं श्रीं नमः इत्यादि मालिनीपुत्र-मन्त्रपुत्र-उमापुत्र-रुद्र-पुत्र-ऊर्ध्वमुखीपुत्र-शक्तिपुत्र पादुकेभ्यो ह्रीं श्रीं नमः । इति शाकिन्यादिसप्तकं षट्कोणबाह्यकर्णिकावृत्ते ऐशान्याद्यग्निपर्यन्तं, श्रीं ह्रीं गणपतिपादुकेभ्यो ह्रीं श्रीं नमः ॥ एवमेव क्षेत्रपाल महाशास्तृ वटुकनाथ इति गणपत्यादिकुमारचतुष्कं *तत्कर्णिकावृत्ते आग्नेयादिनैर्ऋत्यान्तं, श्रीं ह्रीं देवीपुत्रपादुकेभ्यो ह्रीं श्रीं नमः* इत्यादिमातृपुत्र कुलपुत्र एतत्स्थानाधिपति एतद्देशाधिपति एतद्ग्रामाधिपति (इति) देवीपुत्रादिषट्कं तत्कर्णिकावृत्ते नैर्ऋत्यादिवायव्यान्तं, श्रीं ह्रीं मेघनाथ-पादुकेभ्यो ह्रीं श्रीं नमः । इत्यादि प्रचण्डोग्र कालदूत मेघनादादि पुत्रत्रिकं तत्कर्णिकावृत्ते वायव्यादीशान्तमिति । शाकिन्यादिबालसप्तकसहितं, गणपत्यादि-कुमारचतुष्कं, देवीपुत्राद्यधिपादिषट्कं: मेघनादादिपुत्रत्रिकं इत्येतैस्सर्वैः मिळित्वा विंशद्देवताभिः पञ्चमावरणम् ॥

ततस्तद्बाह्ये श्रीं ह्रीं मङ्गळापुत्रपादुकेभ्यो ह्रीं श्रीं नमः । एवमेव

चर्चिकापुत्र योगेशीपुत्र हरसिद्धापुत्र भट्टारीपुत्र किलिकिलापुत्र कालरात्रिपुत्र विभीषिकापुत्र इति पूर्वाद्यष्टदळकेसरेषु मङ्गळापुत्राद्यष्टकेन षष्ठावरणम् ॥

ततस्तद्बाह्ये श्रीं ह्रीं ब्रह्माणीपुत्रपादुकेभ्यो ह्रीं श्रीं नमः । एवमेव माहेश्वरीपुत्र, कौमारीपुत्र, वैष्णवीपुत्र, वाराहीपुत्र, इन्द्राणीपुत्र, चामुण्डापुत्र, महालक्ष्मीपुत्र, इति पूर्वाद्यष्टदळेषु ब्रह्माण्यादिमातृपुत्रैः सप्तमावरणम् ॥

पुनस्तद्बाह्ये श्रीं ह्रीं इन्द्रवटुकपादेभ्यो ह्रीं श्रीं नमः । इत्यादि ब्रह्मवटुकान्तं चतुरश्राभ्यन्तरप्राकारे प्रागादीन्द्रवटुकादिदशकेनाष्टमावरणम् । पुनस्तद्बाह्ये श्रीं ह्रीं हेतुकभैरवपादुकेभ्यो ह्रीं श्रीं नमः इत्यादित्रिपुरान्तभैरव, अग्निभैरव, वेताळभैरव, अग्निजिह्वाभैरव, कराळभैरव, काळभैरव, भीमरूपभैरव, अचलभैरव, श्रीं ह्रीं हाटकेश्वरभैरवपादुकेभ्यो ह्रीं श्रीं नमः इति चतुरश्रस्य मध्यप्राकारे प्रागादिहेतुकादिदशकेन नवमावरणम् । श्रीं ह्रीं वज्रिणीपुत्रदशकेन पूर्वादिदिक्षु दशमावरणम् । एवं भैरवं संपूज्य बलिं दद्यात् ॥

शाल्यन्नं पललं सर्पिर्लाजचूर्णानि शर्करा ।
गुळमिक्षुरसापूपौ मध्वक्तैः परिमिश्रितैः ॥

कृत्वा कबलमाराध्य देवं प्रागुक्तवर्त्मना ।
रक्तचन्दनपुष्पाद्यैः निशि तस्मै बलिं हरेत् ॥

ततस्सिद्ध्यन्ति कार्याणि बलिनाऽनेन मन्त्रिणाम् ।

तत्र पललमिति तिलम् ॥

अथास्य नित्यबलिः —

भोजनवेळायां घृतगुळव्यञ्जनादिसहितं सक्तुं निर्वर्त्य, मूलविद्यां त्रिवारं जप्त्वा, कृष्णाय शुने दद्यात् ॥

अथ प्रयोगः —

जुहुयात्सर्पिषा मन्त्री महतीं श्रियमाप्नुयात् ।
वश्याय जुहुयादिक्षुशकलैर्वशयेज्जनान् ॥

इक्षुशकलं-नावतसाखर ॥

जुहुयात्पुत्रलाभाय प्रफुल्लैः कैरवैस्सुधीः ।
धनधान्यादिसंपत्त्यै जुहुयात्तिलतण्डुलैः ॥

विल्वप्रसूनैर्जुहुयात् महतीं विन्दति श्रियम् ।
लोणैर्मधुरसंमिश्रैः वशयेद्वनिताजनान् ॥

लोणं-लवणम् ॥

वृष्टिकामेन होतव्यं वेतसस्य समिद्वरैः ।

वेतसं-नीर्वञ्जि । लतिकाविशेषः ।

अन्नेन जुहुयान्नित्यं धनधान्यादिसंपदे ॥

वश्याय जुहुयान्मन्त्री, मधुना दिवसत्रयम् ।
रोगोक्तौषधहोमेन रोगो नश्यति तत्क्षणात् ॥

कृत्याद्रोहे ग्रहद्रोहे भूतापस्मारसंभवे ।
व्याघ्रासने समासीनो जुहुयादयुतं तिलैः ॥

भूतादयः पलायन्ते नेक्षन्ते तां दिशं भयात् ।
जुहुयात्केवलैर्लोणैरयुतं स्तम्भनेच्छया ॥

निगळादिविमोक्षाय प्रयोगोयमुदाहृतः ।
वचाचूर्णं पलं जप्तं गव्येनाज्येन लोळितम् ॥

विभज्य भक्षयेन्मन्त्री मण्डलं पुत्रकांक्षया ।

विनीतं पुत्रमाप्नोति मेधारोग्यबलान्वितम् ॥

वचा-वेखण्ड । वचाचूर्णं पलप्रमाणं गव्याज्यं विसृज्य प्रतिदिनमष्टोत्तरसहस्रं जप्त्वा मण्डलं प्राशयेत् ॥

अथ भस्मप्रयोगः—

साधयेन्मनुनाऽनेन भस्म सर्वार्थसिद्धिदम् ।
उशीरं चन्दनं कुण्ठं घनसारं सकुङ्कुमम् ।
श्वेतार्कमूलं वाराहीलक्ष्मीक्षीरमहीरुहाम् ॥

त्वचो बिल्वतरोर्मूलं शोषयित्वाऽथ चूर्णयेत् ।
चूर्णं व्योम्नि गृहीतेन गोमयेन विमर्दितम् ॥

कृत्वा पिण्डानि संशोष्य संस्कृते हव्यवाहने ।
मूलेन दग्ध्वा तद्भस्म शुद्धपात्रे विनिक्षिपेत् ॥

केतकीमालतीपुष्पैः वासयेद्भस्म शोधितम् ।
अयुतं प्रजपेन्मन्त्रं स्पृष्ट्वा भस्म सुपूजितम् ॥

एतदादाय दिनशः प्रातः पुण्ड्रं करोति यः ।
तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहमहाग्रहाः ॥

अस्यार्थं षड्विंशपटलेऽघोरभस्मविधाने वक्ष्यामः ॥

अथापदुद्धारणप्रसङ्गात् स्वर्णाकर्षणभैरवमन्त्रोपि लिख्यते—

दूर्वासो भगवानृषिः । देवीगायत्री छन्दः । स्वर्णाकर्षणभैरवो देवता । ह्रां बीजम् । स्वाहा शक्तिः । संकल्पसिद्ध्यर्थे जपे विनियोगः । ओं ह्रां महाभैरवाय हृत् । ओं ह्रीं अपणस्याप शिरः । ओं ह्रूं अजामेळबन्धनाय

शिखा । ओं हैं लोकेश्वराय कवचम् । ओं ह्रौं स्वर्णाकर्षणाय नेत्रम् । ओं ह्ः मम दारिद्र्यापहाराय अस्त्रम् । ध्यानम् —

कोटिसूर्यप्रतीकाशं कुबेरनिलयं महः ।
नेत्रत्रयं चतुर्बाहुं पाशांकुशवराभयम् ॥

शशिखण्डजटाचूडं स्वर्णाभरणभूषितम् ।
सर्वाभरणसंपूर्णं शोभितं स्वर्णभैरवम् ॥

सिद्धविद्याधरैस्सेव्यं ध्यायेत्कनकभैरवम् ।

ओं वं आं ह्रूं ह्रीं ह्रां महाभैरवायापणस्थायाजामिलबन्धनाय लोकेश्वराय मम दारिद्र्यापहाराय ह्रां ह्रीं ह्रूं आं वं ओं स्वाहा । इमं मन्त्रं द्वात्रिंशत्कृत्वः जपित्वा तावत्तर्पणानि कुर्यात् ॥

अथ शक्तिपञ्चाक्षरविधानमुच्यते —

वामदेव ऋषिः । पंक्तिः छन्दः । सदाशिवो देवता । ओं बीजम् । ह्रीं शक्तिः । अङ्गानि तु ओं ह्रां हृत् । ओं ह्रीं शिरः । इत्यादिपञ्चाक्षरवर्णैः । ध्यानम् —

वन्दे हरं वरदशूलकपालहस्तं साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।
वामोरुपीठगतया निजवामहस्तन्यस्तारुणोत्पलरुजापरिरब्धदेहम् ॥

ह्रीं ओं नमः शिवाय ह्रीं । इति मन्त्रः । ऐश्वर्यफलप्रधानोयं मन्त्रः । चतुर्लक्षजपः । तावत्सहस्रं त्रिमधुरसिक्ताभिः नृपतरुसमिद्भिर्जुहुयात् पुरश्चरणार्थम् ॥

अथ पूजा —

प्रासादोक्तपीठे शिवं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । हृल्लेखायै० गगनायै० रक्तायै० करालिकायै० महोच्छुष्मायै० ५ इति कोणेष्व-

अतश्च द्वितीयावृतिः । धूपाय० क्षेत्रपालाय० चण्डेश्वराय० दुर्गायै० गुहाय० नन्दिने० गणपाय० सैन्यपाय० ८ इति तृतीयावृतिः । मातृभिश्चतुर्थी । इन्द्रादिभिः पञ्चमी ॥

अथ शैवाष्टाक्षरविधानमुच्यते —

वामदेव ऋषिः । पङ्क्तिः छन्दः । सदाशिवो देवता । पञ्चाक्षरवदङ्गानि । अत्रापि हृदयादियोगो विवरणकृन्मतः । ओं बीजम् । ह्रीं शक्तिः । ध्यानम् —

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-
न्यस्तारक्तोत्पलायास्स्तनविधृतिलसद्वामबाहुः प्रियायाः ।
नानाकल्पाभिरामो धृतपरशुमृगेष्टः करैः काञ्चनाभो
ध्येयः पद्मासनस्थः स्मरललितवपुः संपदे पार्वतीशः ॥

ओं ह्रीं हौं नमश्शिवाय ॥ इति मन्त्रः । अष्टलक्षजपः । ऐश्वर्यफलप्रधानोयं मन्त्रः । अष्टसहस्रं नृपतरुसमिद्भिः जुहुयात्पुरश्चरणार्थम् ॥ नृपतरु-கொன்றை प्रासादोक्तपञ्चब्रह्मोक्तवत्पूजा ॥

इति प्रपञ्चसारसारसङ्ग्रहे गीर्वाणेन्द्रविरचिते
पञ्चविंशः पटलः ॥

---

# अथ षड्विंशः पटलः ॥

अथ दक्षिणामूर्तिमन्त्रविधानमुच्यते —

श्रीशुक ऋषिः । अनुष्टुप् छन्दः । दक्षिणामूर्तिर्देवता । ओं बीजम् । ह्रीं शक्तिः । ओं ह्रीं दक्षिणामूर्तये ह्रां हृत् । ओं ह्रीं तुभ्यं ह्रीं शिरः । ओं ह्रीं वटमूलनिवासिने ह्रूं शिखा । ओं ह्रीं ध्यानैकनिरताङ्गाय ह्रैं कवचम् । ओं ह्रीं नमो रुद्राय ह्रौं नेत्रत्रयम् । ओं ह्रीं शम्भवे ह्रः अस्त्रम् ॥

ध्यानम् —

मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिणेत्रः
दद्यादाद्यैश्शुकाद्यैर्मुनिभिरभिवृतो भावशुद्धो भवो वः ॥

ओं ह्रीं दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ।
ध्यानैकनिरताङ्गाय नमो रुद्राय शम्भवे ह्रीं ओं ॥

इति मन्त्रः । ज्ञानप्रधानोऽयं मन्त्रः ।

अक्षरन्यासः —

फालिरुश्रुतिदृग्गण्डद्वयनासास्यके दश ।
दोस्सन्धिकण्ठस्तनहृन्नाभिकट्यन्धुषु क्रमात् ।
पत्सन्धिषु पुनर्द्वाभ्यां मन्त्रवित् व्यापकं न्यसेत् ।

इति षट्त्रिंशदक्षरैर्न्यासः । त्रिंशतिसहस्रोत्तरं त्रिलक्षं जपः । दुग्धाप्लुतैस्तिलैर्वा साज्येन पयोन्धसा वा द्रवेन वापि दशांशं होमः ॥

अथ पूजा — पूर्वोक्तपञ्चाक्षरविधिना संपूजयेत् ।

जप्त्वैवं मन्त्रमेनं दिनमनु गिरिशं पूजयित्वा च हुत्वा
स्तुत्वा नत्वा मनोवाक्तनुभिरविहितः प्राप्य कामानशेषान् ।
व्याख्याता चागमानां भुवि कविषु वरः साधुवेदान्तवेदी
वादी सोद्वैतविद्याफलममलतरं याति शैवं पदं तत् ॥

अथ दक्षिणामूर्तिमन्त्रप्रसङ्गात् संहारदक्षिणामूर्तिमन्त्रोपि लिख्यते—

मध्येलिङ्गं लिखित्वा तदुपरि परितो भूपुरद्वन्द्वमष्टौ
शूलानष्टासु दिक्षु प्रबलरिपुगणौघापसारनुत्यै ।

एवमस्य यन्त्रम् ॥

तन्मध्ये चिन्तयामः करतलविलसत्पुस्तकाक्षस्रगग्नि
व्याख्यां संहारसंज्ञं सकलसुरगुरुं दक्षिणामूर्तिमीशम् ॥

ओंकारसंहारदक्षिणामूर्तये नमः । ओंकारसंहारदक्षिणामूर्तये आदिभैरव-भूतप्रेतपिशाचब्रह्मराक्षसब्रह्मराक्षसीदानवदानवीक्षुद्रक्षुद्री अशून्यं शून्यं आवेशय आवेशय ऊर ऊर उरुळ उरुळ एर एर पेशप्पेशे ओडिप्पोह स्वाहा । इति पिशाचनिवृत्तिप्रधानोयं मन्त्रः ॥

अथ प्रसङ्गात् नवाक्षरदक्षिणामूर्तिमन्त्रोपि लिख्यते—

*ओं अ नमश्शिवाय अ ओं । इति मन्त्रः ॥

अज्ञानेन्धनदीप्ताय ज्ञानाग्निज्वालरूपिणे ।
आनन्दाज्यहविःप्रीत सम्यग्ज्ञानं प्रयच्छ मे ॥ इति ॥

लकुटीदक्षिणामूर्तिमन्त्रः—

उभयोरपि अनुष्टुबुक्तवदङ्गानि । तत्र मूलमन्त्रवर्णस्थाने नवाक्षरीमन्त्रस्य द्वितीयवर्णादिक्रमेण योजयेदिति विशेषः ॥

* ओं अं नमश्शिवाय अं ओं इति द पाठः ।

तत्र लकुटीध्यानविशेष उच्यते—

न्यग्रोधस्य तरोरधः शुकमुखैः शुश्रूषुभिः संवृतं
व्याख्यातत्परमष्टभोगिविलसद्भूषं शिवं दण्डिनम् ।
स्वर्णाभं सजटामलेन्दुशकलं वीरासनाध्यासितं
व्याघ्रत्वक्पटलम्बिपन्नगतनुं न्यस्तात्मपुस्तं भजे ॥

वामे तु न्यस्तदण्डं करसरसिरुहे दक्षिणे ज्ञानमुद्रां
कुर्वन्तं चासने स्वे कनकमणिमये संस्थमम्भोजनेत्रम् ।
मूले न्यग्रोधदारोरमरमुनिगणैः पूज्यमानन्दरूपं
ध्यायेत् हंसाभिधानं परममुदयुतं दक्षिणामूर्तिमीशम् ॥

अथ नवाक्षरीन्यासः—

ब्रह्माद्यशेषगुर्वादिवन्दनं कृत्वा, पाशुपतास्त्रेणांगुलिन्यासकरशोधनतालत्रय दिग्बन्धनाग्निप्राकारान् विधाय, ह ह ह इति मूलाधारहृदयभ्रूमध्यगतसुषुम्नानाडी पर्वत्रयं भङ्क्त्वा हूँ इति मूलाधारगतं तेज द्वादशान्ते नीत्वा, हूँ इति द्वादशान्तगतं तेजः मूलाधारं नयन्. द्वादशान्तस्थितसुधामण्डलामृतबिन्दुरूपेण मूलमन्त्राक्षराणि ध्यात्वा, मन्त्रं सकृदुच्चार्य, शुद्धोयं मन्त्र उत्पन्न इति भावयित्वा, प्रणवेन षट्प्राणानायम्य, मूलेन केशादिपादपर्यन्तं त्रिर्व्याप्य पीठन्यासं कुर्यात् ॥ तद्यथा—

गुं गुरुभ्यो नमः । पृथिव्यै नमः । कैलासाद्रये नमः । वटवृक्षाय नमः । स्फटिकमण्डपाय नमः । रत्नसिंहासनाय नमः । इति मूलाधारादारभ्य हृदयपर्यन्तं न्यस्त्वा, पुनर्धर्मादीन् सप्तदशपटले गोपालविधाने प्रोक्तप्रकारेण न्यसित्वा, वामायै नमः, ज्येष्ठायै नमः, रौद्र्यै नमः, काळ्यै नमः, कलविकरिण्यै नमः, बलविकरिण्यै नमः, बलप्रमथिन्यै नमः, सर्वभूतदमन्यै नमः, मनोन्मन्यै नमः ९ ओं नमो भगवते सर्वगुणात्मशक्तियुक्ताय अनन्ताय

योगपीठात्मने नमः । इति हृदये अष्टदलेषु न्यसित्वा, मूलमन्त्रोच्चारणपूर्वकं श्रीदक्षिणामूर्तये नमः इति पीठे मूर्तिं विन्यस्य, पञ्चोपचारान्समर्प्य, पाद्यमिदमर्घ्यमिदमाचमनीयकमिदमित्येतानि समर्प्य, मूलमन्त्रस्य द्वादशवारं जपेन कुम्भकं कुर्वन्, अन्तःपातितं तेजः दक्षिणनासिकया दक्षिणकरतळे निपात्य, तत्करतलपृष्ठपार्श्वे व्याप्याङ्गमन्त्रैरंगुलिन्यामपडङ्गन्यासौ कृत्वा, ऋष्यादिस्मरणपूर्वकं मूलमन्त्रैस्त्रिर्व्याप्य मूलमन्त्रस्याष्टाक्षरन्यासं कुर्यात् ॥ तद्यथा—

नेत्रद्वय श्रोत्रद्वय नासिकाद्वयास्यलिङ्गाग्रगुह्येषु, शिरोललाट नेत्रयुगास्यकण्ठहृत् जानुपादेषु, बाहुपादसन्ध्यंगुळीषु अक्षरान् न्यसेत । एषा षडावृत्त्या सृष्टिः ॥

ततो मूलेन त्रिर्व्याप्य, पार्श्वद्वयपृष्ठनाभिहृत्कण्ठदक्षिणांसककुद्वामांसेषु, शिरोललाटनेत्रद्वयनासिकाद्वयास्येषु, बाहुद्वयमूलसन्ध्यंगुल्यग्रेषु, दक्षिणहस्ततर्जन्यंगुष्ठ पर्वद्वन्द्वमध्यमानामिकापर्वद्वन्द्ववामहस्ततर्जन्यंगुष्ठपर्वद्वन्द्वेषु, वाममध्यमानामिकापर्वद्वन्द्ववामकनिष्ठिकापर्वत्रयदक्षिणकनिष्ठिकापर्वत्रयेषु न्यासं कुर्यात् । एवं कृते मूलमन्त्रस्य षडावृत्तिर्भवति । एषा स्थितिः ॥

ततो मूलेन त्रिर्व्याप्य वामपादतलतदुपरितत्पार्श्वद्वयसमस्तजङ्घातत्पार्श्वद्वयोरुतत्पार्श्वद्वयेषु, एवं दक्षिणपादवामहस्तदक्षिणहस्तेषु, वामपादोक्तरीत्या, नाभ्यादिहृदन्तं, वामकट्यादितत्स्तनान्तं, दक्षिणकट्यादितत्स्तनान्तं, हृदादिमस्तकान्तं, मस्तकादि (मस्तके) चतुर्दिक्षु, मूर्ध्नि च, पञ्चावृत्त्या न्यसेत् । एषा पञ्चावृत्त्या संहृतिः ॥

मूलेन त्रिर्व्याप्य, पुनः सृष्टिस्थिती विन्यस्य पुनश्च त्रिर्व्याप्य, ईशानाय मूर्ध्ने नमः । तत्पुरुषाय वक्त्राय नमः । अघोराय हृदयाय नमः । वामदेवाय गुह्याय नमः । सद्योजाताय पादाभ्यां नमः । इति अंगुष्ठाद्यंगुळिन्यासक्रमेण शिरोवदनहृद्गुह्यपादेषु स्वन्यासं कृत्वा, ईशानाय ऊर्ध्व-

वक्त्राय नमः, तत्पुरुषाय पूर्ववक्त्राय नमः, अघोराय दक्षिणवक्त्राय नमः, वामदेवाय उत्तरवक्त्राय नमः, सद्योजाताय पश्चिमवक्त्राय नमः, इति पञ्च-वक्त्रस्थानेषु पञ्चन्यासं कृत्वा, मूलेन त्रिर्व्याप्य, मूलमन्त्रेण प्रणवेन वा संपुटितमातृकान्यासं कृत्वा, मूलेस्त्रिर्व्याप्य, षडङ्गऋषिच्छन्दोदेवताश्च न्यस्य प्राणप्रतिष्ठां कुर्यात् । तत्र दक्षिणामूर्तिदेवस्येति विशेषः । एवं कृत्वा पुरुर्ध्यात्वा जपेत् ॥

अथ दक्षिणामूर्तिप्रसङ्गात् मेधादक्षिणामूर्तिमन्त्रोपि कल्पान्तरोक्तोत्र योग्यतावशात् लिख्यते –

ब्रह्मा ऋषिः । गायत्री छन्दः । मेधादक्षिणामूर्तिर्देवता । मेधा बीजम् । स्वाहा शक्तिः । मम दक्षिणामूर्तिप्रीत्यर्थे (प्रसादसिध्यर्थे) विनियोगः । आं हृत् । ईं शिरः । ऊं शिखा । ऐं कवचम् । औं नेत्रम् । अः अस्त्रम् ॥ ध्यानम् –

भस्मव्यापाण्डराङ्गश्शशिशकलधरो ज्ञानमुद्राक्षमाला-
वीणापुस्तैर्विराजत्करतलकमलो योगपट्टाभिरामः ।
व्याख्यापीठे निषण्णो मुनिवरनिकरैः सेवितस्सुप्रसन्नः
सव्यालः कृत्तिवासाः सततमवतु नो दक्षिणामूर्तिरीशः ॥

ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ॥ इति मन्त्रः । प्रज्ञापदरहितो वा मन्त्रः । ज्ञानप्रधानोयं मन्त्रः ॥

कृष्णाष्टमीमारभ्य कृष्णचतुर्दशीपर्यन्तं चत्वारिंशत्सहस्रं जपेत् । आज्येन दशांशं पुरश्चरणाहोमः । लक्षं वा जपेत्, विष्ण्वालये वा पश्चिमद्वारशिवालये वा । अस्मिन्पक्षे क्षीरप्लुतशुद्धतिलैराज्येन पायसान्नेन वा दशांशं पुरश्चरणा-होमः ॥

अथ पूजा —

प्रासादोक्तपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावरणम् । स्वर-

द्वन्द्वाष्टकेन द्वितीयावरणम् । कचटतपयशळादिवर्गैरष्टधा विभक्तैः तृतीयावृतिः । सरस्वत्यै० ब्रह्मणे० सनकाय० सनन्दनाय० सनातनाय० सनत्कुमाराय० *शुक्राय० वेदव्यासाय० नारदाय ९ इति चतुर्थ्यावृतिः । पार्वत्यै० सुभगायै भद्रायै० क्रीडायै० शान्त्यै० रौद्र्यै० काळ्यै० विजृम्भायै० ८ एताभिः पञ्चम्यावृतिः । इन्द्रादिभिः षष्ठी ॥

हस्तस्थपुस्तकास्स्वच्छाः प्रोक्तास्स्युः स्वर्णभूषणाः ।

एवं ध्यात्वा अर्चनीया इति शेषः । अथास्य मन्त्रस्य न्यासोपि लिख्यते --

प्रथमं गुर्वादिवन्दनं कृत्वा मन्त्राङ्गषष्ठास्त्रेण वा, पाशुपतास्त्रेण वा, ताळत्रयादिदिग्बन्धनं कृत्वा, हकारत्रयोच्चारणेन मूलाधारहृदयभ्रूमध्यगत-पर्वत्रयभञ्जनं कृत्वा, हूँ इति मूलाधारगतं तेजो द्वादशान्तं नीत्वा, हूँ इति द्वादशान्तगतं तेजः मूलाधारे नीत्वा, द्वादशान्तस्थितसुधामण्डलनिर्गळि-तामृतबिन्दुरूपेण शुद्धानि मन्त्राक्षराणि ध्यात्वा, मूलमेकवारं जप्य, शुद्धो मन्त्र उत्पन्न इति ध्यात्वा, यमिति वायुबीजेन षोडशवारं मनसा पठितेन रेचकस्थूलसूक्ष्मकारणशरीरत्रयशोषणकरं कृत्वा, रं इत्यग्निबीजेन द्वात्रिंशद्वारं मनसा पठितेन पूरणं पूर्वोक्तशरीरत्रयदहनकरं कृत्वा, शुद्धं शरीरत्रयमुत्पन्नं ध्यात्वा, मूलेन केशादिपादान्तं त्रिशो व्याप्य पीठन्यासं कुर्यात् । तत्प्रकारस्तु पूर्वं सप्तदशपटले गोपालकविधाने प्रोक्तः । तत्र नवशक्तयस्तु पूर्वस्मिन्नेव पटले प्राक् प्रासादमन्त्रविधाने प्रोक्ता न्यस्तव्याः ॥

पुनः श्रीदक्षिणामूर्तये नम इति कर्णिकायां मूर्तिं विन्यस्य मानसपूजां कृत्वा, आसनस्वागतपाद्याद्युपचारान् दत्वा, द्वादशवारं मूलं जप्त्वा कुम्भकं कृत्वा, मूलमन्त्रं तेजोरूपतया ध्यात्वा दक्षिणनासिकया दक्षिणकरे निपात्य,

* शुनाय इत्यस्मिन्स्थाने शुकाय इति भवितव्यमिति भाति ।

मूलेन तत्तेजः करतलपृष्ठेषु व्याप्य, अङ्गमन्त्रैरंगुलिन्यासं कृत्वा, मूलेन त्रिशो व्याप्य अक्षरन्यासं कुर्यात् ॥

मूर्ध्नि पश्चाल्ललाटे च चक्षुषोः श्रवणद्वये ।
नासापुटद्वये पश्चात् गण्डयोर्दन्तयोरपि ॥

जिह्वाग्रे नासिकाग्रे च ओष्ठयोर्युगळे गळे ।
हृदयोरोजयुग्मे च नाभौ पृष्ठे च गुह्यके ॥

ऊर्वोर्जान्वोश्च जङ्घायां पार्ष्ण्योः पादयुगे तथा ।
सर्वाङ्गसन्धिषु परं न्यसेद्विद्वानतन्द्रितः ॥

अस्मिन्पक्षे मूलमन्त्रे प्रज्ञापदं त्यजेत् । एवमक्षरान् न्यस्त्वा, पुनः योगन्यासं कुर्यात् ॥ तत्प्रकारस्तु —

आधारे तु चतुष्पत्रे प्रणवं कर्णिकोपरि ।
पत्रेषु चतुरः पश्चात् हृदयेऽष्टदळाम्बुजे ॥

कर्णिकायां न्यसेद्बीजं पत्रेष्वष्टसु विन्यसेत् ।
अष्टौ च द्विदळे पश्चात्कर्णिकायां न्यसेत् शिवम् ॥

शिवो हकारः ॥

द्वे द्वयं च ततः पश्चात् सहस्रारे शिरोम्बुजे ।
कर्णिकायां न्यसेत् शक्तिं बालार्कशतरूपिणीम् ॥

बीजशक्ती वक्ष्यमाणे ।

सप्ताक्षराणि शिष्टानि सहस्रारे शिरोम्बुजे ।

विन्यस्यैवमित्युक्तप्रकारेण मूलमन्त्रवर्णैः योगन्यासं कृत्वा, मूलेन एकवारं व्याप्य, मूर्तिपञ्जरन्यासं कुर्यात् ॥

ओं अं ह्रीं ह्रौं नमः शिवाय महादेवाय धात्रे नमः । ओं आं ह्रीं ह्रौं नमः शिवायार्यम्णे नमः । ओं इं ह्रीं ह्रौं नमः शिवाय रुद्राय मित्राय नमः । ओं ईं ह्रीं ह्रौं नमः शिवाय शङ्कराय वरुणाय नमः । ओं उं ह्रीं ह्रौं नमः शिवाय नीललोहितायांशाय नमः । ओं ऊं ह्रीं ह्रौं नमः शिवाय ईशानाय भगाय नमः । ओं एं ह्रीं ह्रौं नमः शिवाय विजयाय विवस्वते नमः । ओं ऐं ह्रीं ह्रौं नमः शिवाय भीमाय इन्द्राय नमः । ओं ओं ह्रीं ह्रौं नमः शिवाय कपर्दिने पूष्णे नमः । ओं औं ह्रीं ह्रौं नमः शिवाय हराय पर्जन्याय नमः । ओं अं ह्रीं ह्रौं नमः शिवाय स्थाणवे त्वष्ट्रे नमः । ओं अः ह्रीं ह्रौं नमः शिवाय नीलकण्ठाय विष्णवे नमः । इति ललाट-नाभि-हृदय-कण्ठ-दक्षिणपार्श्व-तदंस-तद्गळ-पृष्ठ-ककुत्सु न्यसेत् ॥*

पुनः काननवृत्तेत्यादिषु स्थानेषु मातृकान्यासं कृत्वा, मूलेन त्रिशो व्याप्य, ओं आं (अं) ओं हृदयाय नमः । ओं इं ओं शिरः । इत्यादि-षडङ्गन्यासं कृत्वा ऋष्यादींश्च विन्यस्य, औं बीजम् । स्वाहा शक्तिः । इत्युक्त्वा, पुनः प्राणप्रतिष्ठामन्त्रेण देवतात्मको भूत्वा ध्यात्वा मानसपूजां कृत्वा, गण्डूषादिकं कृत्वा, मूलेन पुष्पाञ्जलिं संभाव्य, ओं तत्सदितः पूर्वमिति मन्त्रेण ब्रह्मार्पणं दत्वा,

शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगत् ।
शिवो यजति भूतानि यश्शिवस्सोहमेव सः ॥

त्वमेवाहमहं च त्वं संविन्मात्रवपुर्धरः ।
आवयोरन्तरभ्रान्तिर्नश्यत्वाज्ञावशात्तव ॥

इत्यर्थानुसन्धानपुरस्सरं मूलमन्त्रं जपेत् ।

---

* अत्र अक्षरसंख्यानुरोधेन स्थानानि न भवन्ति ।

अथ प्रयोगः—

पालाशपुष्पैरयुतं होमाद्विद्यानिधिर्भवेत् ।
प्रत्यहं मण्डलादर्वाक् कवीनामग्रणीर्भवेत् ॥

प्रयोगान्तरम्—

भुञ्जानः प्रयतो मन्त्री गोमूत्रे पक्वमोदनम् ।
भिक्षान्नमथवा मन्त्रमयुतद्वितयं जपेत् ॥

अश्रुतं वेदशास्त्रादि व्याचष्टे नात्र संशयः ।

प्रयोगान्तरम्—

स्वहस्ते जलमादाय प्रातःकाले तु साधकः ।
पञ्चविंशतिवारं वा तदर्धं वाभिमन्त्रयेत् ॥

तज्जलं प्राशयेन्नित्यं षण्मासात्साधकोत्तमः ।
महावाग्मी भवेन्नित्यं गङ्गास्रोतःप्रवाहवत् ॥

अथ मेधादक्षिणामूर्तिमन्त्रप्रसङ्गात् साम्बदक्षिणामूर्तिमन्त्रोपि लिख्यते—

आनन्दवामदेव ऋषिः । मोग, पङ्क्तिः छन्दः । साम्बदक्षिणामूर्तिर्देवता । ओं ऐं हृत् । नमः क्लीं शिरः । शिवाय सौः शिखा । ओं ऐं कवचम् । नमः क्लीं नेत्रम् । शिवाय सौः अस्त्रम् ॥

ओं बीजमिति नाभौ । ऐं शक्तिरिति दक्षिणांसे । क्लीं कीलकमिति वामांसे न्यसेत् ॥ ध्यानम्—

वामोरूपरिस्थितां गिरिसुतामन्योन्यमालिङ्गितां
श्यामामुत्पलधारिणीं शशिनिभं चालोकयन्तीं शिवम् ।
आश्लेषेण करेण पुस्तकमथो कुम्भं सुधापूरितं
मुद्रां ज्ञानमयीं दधानमपरे मुक्ताक्षमालां भजेत् ॥

ओं ऐं नमः क्लीं शिवाय सौः । इति मन्त्रः । विद्याफलप्रधानोयं मन्त्रः ॥

अथ दक्षिणामूर्तिमन्त्रप्रसङ्गात् विद्याप्रदत्वसामान्येन हयग्रीवैकाक्षर-मन्त्रोपि लिख्यते —

ब्रह्मा ऋषिः । त्रिष्टुप् छन्दः । हयग्रीवो देवता । हकारो बीजम् । उकारः शक्तिः । वागैश्वर्यसिध्द्यर्थे जपे विनियोगः । ह्स्रां हृत् । ह्स्रीं शिरः । ह्स्रूं शिखा । ह्स्रैं कवचम् । इत्यादिभिः षडङ्गम् । ध्यानम्—

धवळनळिननिष्ठं क्षीरगौरं कराग्रैः
जपवलयसरोजे पुस्तकाभीतिदाने ।
दधतममलवस्त्राकल्पजालाभिरामं
तुरगवदनविष्णुं नौम्यविद्याग्रसिष्णुम् ॥

हकारसकारचतुर्दशषष्ठस्वरान्यतरयुक्तबिन्द्वात्मकः ह्स्रौं इति मन्त्रः । अथवा ह्स्रूं इति मन्त्रः ॥

अथ मन्त्रान्तरम् — ऋष्यादिकं पूर्ववत् ।

जीयात्सरोजजपदामसुधाकरीरलेख्यानि पाणिकमलैः सकलं दधानः ।
मन्दारकुन्दतुहिनेन्दुसमानदेहमाल्याङ्गरागवसनाभरणोऽश्ववक्त्रः ॥

ह्स्रूं हयशिरसे नमः । इति मन्त्रः । पूजादिकं वक्ष्यमाणवत् ।

अथैकादशाक्षरमन्त्रः —

ब्रह्मा ऋषिः । त्रिष्टुप् छन्दः । हयग्रीवो देवता । बीजेन अङ्गानि पूर्ववत् ध्यानादिकम् ॥ *ह्रीं हयशिरः ह्रीं क्रों हुंफट् नमः । इति मन्त्रः ॥ विद्याफलप्रधानोयं मन्त्रः ॥

* ह्रींकारस्थाने श्रीं इति ङ पाठः ।

अथ दधिभक्तहयग्रीवमन्त्रः—

ब्रह्मा ऋषिः । अतिछन्दः । हयग्रीवो विष्णुर्देवता । अङ्गन्यासादिकं पूर्ववत् ।

सव्येन हस्तेन सुधाकरीरमन्येन दध्योदनमादधानः ।
शशाङ्कमध्ये सितपद्मसंस्थः पायात्सिताभस्तुरगाननो नः ॥

ओं नमो भगवते हयशिरसे अन्नाधिपतये अन्नदाय अक्रूराय अक्रूरकर्मणे भगवन् भक्ष्यभोज्यान्नदानमावहावह स्वाहा ॥

अथ हयग्रीवमन्त्रान्तरम्—

ओं ह्स्रं हंसः विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे तुभ्यं नमो हयग्रीवविद्याराजाय विष्णवे स्वाहा सोहं ह्स्रं ओं । पूजादिकं अनुष्टुप्वत् ॥

शास्त्रान्तरोक्तपक्षविशेषेण हयग्रीवैकाक्षरं (रः) लिख्यते—

ब्रह्मा ऋषिः । गायत्री छन्दः । हयग्रीवो देवता । हं बीजम् । सं शक्तिः । ह्स्रां ह्स्रीं इत्यादिनाङ्गानि ॥

पद्माक्षमालालिखितेष्टदानि दधानमम्भोरुहसंपुटस्थम् ।
कर्पूरभङ्गाधिकगौरकान्तिं हयाननं सौम्यमिह स्मरामि ॥

ह्स्रं इति मन्त्रः ॥ लक्षचतुष्कजपः । श्वेतपद्मैः दशांशं पुरश्चरणाहोमः । विद्याकामेन वाग्भवेन सौः इत्यनेन च संपुटीकृत्य जप्तव्यः ॥

अथ पूजा—

वैष्णवपीठे समावाह्य समर्चयेत् । वागीश्वराय विद्महे हयग्रीवाय धीमहि । तन्नो हंसः प्रचोदयात् । इति गायत्र्या आवाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । ततोऽष्टदलेषु प्रागादिक्रमेण मेधायै० सरस्वत्यै० प्रज्ञायै०

मायायै० विजयायै० अपराजितायै० तुष्ट्यै० श्रद्धायै ८ इत्यभ्यर्च्य, दलाग्रेषु कुमुदाद्यावरणम् । कुमुदाय० कुमुदाक्षाय० पुण्डरीकाय० वामनाय० शंकुकण्ठाय० सर्वनेत्राय० सुमुखाय० सुप्रतिष्ठाय० पिङ्गलाय० हरिसेनाय० १० इति । ततो लोकपालान् पूजयेत् । ततः पद्माय० (अक्षमालायै) पुस्तकाय० वरदाय० इति पूजयेत् ॥

अथ हयग्रीवमन्त्रप्रसङ्गात् हयग्रीवस्यानुष्टुप्मन्त्रोपि लिख्यते—

ब्रह्मा वा संकर्षणो वा ऋषिः । अनुष्टुप् छन्दः । हयग्रीवो देवता । ऋं बीजम् । नमः शक्तिः । ज्ञानार्थे विनियोगः । मन्त्रस्य पादैः व्यस्तैस्समस्तैश्च पञ्चाङ्गानि ॥ ध्यानम्—

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरचिते पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्मा-
माविर्भूयादमितमहिमा मानसे वागधीशः ॥

ध्यानान्तरम्—

वन्दे पूरितचन्द्रमण्डलगतश्वेतारविन्दासने
मन्दाकिन्यमृताब्जकुन्दकुमुदक्षीरेन्दुभासं हरिम् ।
मुद्रापुस्तकशङ्खचक्रविलसच्छ्रीमद्भुजामण्डलं
निर्यन्निर्मलभारतीपरिमलं विश्वेशमश्वाननम् ॥

ध्यानान्तरम्—

तुषाराद्रिसमच्छायं तुलसीदामभूषणम् ।
तुरङ्गवदनं वन्दे तुङ्गसारस्वतप्रदम् ॥

ऋग्यजुस्सामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवचसे महाश्वशिरसे नमः ॥

इति मन्त्रः । अयुतं जपेत् । विद्याप्रधानोयं मन्त्रः । अथ पूजा —

केवलपद्मपीठं संभाव्य, तत्कर्णिकामध्ये सोममण्डलं विचिन्त्य, तन्मध्ये वह्निमण्डलं विचिन्त्य तन्मध्ये समावाह्य, तत्र दिक्षु सनन्दनाय नमः, सनकाय नमः, श्रियै नमः, पृथ्व्यै नमः, इति समर्चयेत् । तद्बहिः षट्कोणं विचिन्त्य, षट्कोणेषु निरुक्तज्योतिषाद्यङ्गयुक्तान् वेदान् समर्चयेत् । अस्त्यत्रोपदेशः — दिक्षु वेदान् षट्सु कोणेषु अङ्गानि समर्चयेदिति । तत्र निरुक्तज्योतिषव्याकरणकल्पशीक्षाछन्दांस्यङ्गानि ॥

तद्बहिरष्टदळमूलेषु ब्राह्मयै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इन्द्राण्यै० चामुण्डायै० महालक्ष्म्यै० ८ इत्यादिभिः प्रागादिक्रमेण समर्चयेत् । दळमध्येषु वक्रतुण्डाय० एकदंष्ट्राय० महोदराय० गजाननाय० लम्बोदराय० विकटाय० विघ्नराजाय० धूम्रवक्त्राय० ८ इत्येतान्समर्चयेत् ॥ दळाग्रेषु असिताङ्गाय० रुरवे० भीषणाय० रक्तनेत्राय० वटुकाय० कालमर्दनाय० दन्तुराय० विकटाय० ८ इत्येतान्समर्चयेत् । एतद्बहिः षोडशाश्रेषु दशावतारान् दशसु पत्रेषु अवशिष्टेषु षट्सु पत्रेषु शङ्ख-चक्र-गदा-पद्म-नन्दक-शार्ङ्गाणि समर्चयेत् । तद्बहिश्चतुरश्रे इन्द्रादीन् दिक्पालान् यजेत् ॥

पुनः पूर्वादिचतुर्षु द्वारेषु महागणपति-दुर्गा-क्षेत्रपाल-वटुकान् क्रमेणैकैकं समर्चयेत् ॥ तद्बहिः समस्तप्रकटादिनवयोगिनीः सप्तनदीः नवग्रहांश्च अष्टपर्वतांश्च नक्षत्राणां सप्तविंशतिं च समर्चयेत् । त्रिपुराविषये अष्टमे पटले समस्तप्रकटादियोगिन्यः प्रोक्ताः ॥

अथ प्रयोगः —

अष्टोत्तरसहस्रं तु शुद्धं वार्यभिमन्त्र्य च ।
पिबेच्च पाययेद्वापि मासमात्रं यतेन्द्रियः ॥
जन्ममूकस्य कस्यापि वाक्सिद्धिर्भवति ध्रुवम् ।

प्रयोगान्तरम् —

प्रारब्धवेलामारभ्य सूर्याचन्द्रमसोर्ग्रहे ।
पात्रे रुक्ममये दुग्धं वचामिश्रं प्रपूरयेत् ॥

यावन्मोचनकालं तु तावत् स्थित्वोदकान्तरे ।
कण्ठमात्रेऽथवा नाभिदघ्ने मौनी मनुं जपेत् ॥

पिबेत्तत्सर्वमचिरात् तस्य सारस्वतं भवेत् ।

प्रयोगान्तरम् —

ज्योतिष्मतीलताबीजं दिनेनैकेन वर्धितम् ।
अष्टोत्तरशतं यावत् भक्षयेदभिमन्त्रितम् ॥

सरस्वत्यवतारोयं सत्यं स्याद्भौरि मानवः ।

प्रयोगान्तरम् —

कलशं पूर्णमुदकैः स्थापयित्वा नवं पुनः ।
तत्रावाह्य हयग्रीवं परिवारैः समन्वितम् ॥

पूजयेद्गन्धपुष्पाद्यैः उपचारैर्यथाविधि ।
सहस्रं प्रजपेन्मन्त्रं कलशं संस्पृशन्बुधः ।
तेनाम्भसाऽभिषिक्ता चेद्वन्ध्या पुत्रवती भवेत् ॥

षण्मासमेतत्कार्यं स्यात् दिनशो नियतेन्द्रियैः ।
पुत्रलाभो भवत्येव सत्यं सत्यं वदाम्यहम् ॥

प्रयोगान्तरम् —

सोमसूर्यग्रहे तिष्ठन् जलमध्ये तु साधकः ।
यावन्मोक्षं जपेदेवं तावन्मन्त्रमनन्यधीः ॥

कपिलागोघृतं प्राश्यं मन्त्रसिद्धमथौषधम् ।
तस्य संवत्सरेणैव मूकस्यैव च वाक् भवेत् ॥

ब्राह्मीरसेन पक्केन कपिलागोघृतेन च ।
अतीव संस्कृता वाणी प्रातः पीतेन मन्त्रिणः ॥

ज्योतिष्मतीफलान्यस्तु (न्येवं) मन्त्रितानि च भक्षयेत् ।
नित्यमारोग्यमायुष्यं तस्य बुद्धिश्च वर्धते ॥

अथ हयग्रीवानुष्टुप्मन्त्रान्तरं लिख्यते —

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । हयग्रीवो देवता । तारपूर्वं मन्त्रस्य पादैः व्यस्तैस्समस्तैश्च पञ्चाङ्गानि ॥

शरच्छशाङ्कप्रभमश्ववक्त्रं मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गशङ्खान्वितबाहुयुग्मं जानुद्वये न्यस्तकरं भजामः ॥

उद्गिरत्प्रणवोद्गीथ सर्ववागीश्वरेश्वर ।
सर्ववेदमयाचिन्त्य सर्वं बोधय बोधय ॥

इति मन्त्रः ॥ द्वात्रिंशल्लक्षजपः । मधुरसिक्तैः कुन्दपुष्पैः दशांशं पुरश्चरणाहोमः । पूर्वोक्तपीठे समावाह्य समर्चयेत् । वेदान् दिक्षु वेदाङ्गानि विदिक्षु समर्चयेत् । तद्बहिरिन्द्रादीन् तद्बहिर्वज्रादींश्च समर्चयेत् ॥

अथ प्रयोगः —

मनुनानेन संजप्तं घृतं ब्राह्मीरसे श्रितम् ।
कवितामावहेत्पुंनामनिर्गळविजृम्भिणीम् ॥

प्रयोगान्तरम् —

वचामनेन संजप्त्वा भक्षयेत्प्रातरन्वहम् ।

सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ॥

अथाघोरमन्त्रविधानमुच्यते —

अघोर ऋषिः । त्रिष्टुप् छन्दः । अघोररुद्रो देवता ॥ हुं बीजम् । ह्रीं शक्तिः । ह्रीं स्फुर स्फुर हृत् । प्रस्फुर प्रस्फुर शिरः । घोर घोर तनुरूप शिखा । चट चट प्रचट प्रचट कवचम् । कह कह वम वम नेत्रत्रयम् । बन्ध बन्ध खादय खादय (घातय घातय) हुंफट् अस्त्रम् ॥ ध्यानम् —

काळाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिणेत्रः ।
रक्ताकाराम्बरोऽहिप्रवरघटितगात्रोरिनागग्रहादीन्
खादन्निष्टार्थदायी भवदनभिमतछित्तये स्यादघोरः ॥

ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम *बन्धय बन्धय खादय खादय हुंफट् ॥ इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः ॥

अथ पदन्यासः —

कदृगास्यकण्ठहृन्नाभ्यन्धूरुषु जानुजङ्घयोः पदयोः ।
एकादशधा भिन्नैर्मन्त्राणैः न्यसतु विग्रहे मन्त्री ॥

एकादशधा विभागप्रकार उच्यते —

पञ्चभिरथो सपड्भिः द्वाभ्यामप्यष्टभिश्चतुर्भिश्च ।
षड्भिश्चतुर्द्धयेन च षड्भिर्द्वाभ्यां च भेदितैः क्रमशः ॥

* बन्ध बन्ध घातय घातय इति ख, ग, ङ, मातृकापाठः ।

चतुस्त्रयेणेति कहादिचतुष्कं वमादिचतुष्कं यन्धादिचतुष्कं च । त्रिभिरित्यर्थः ॥ सर्वपदादौ प्रणवशक्ती योजनीये । लक्षजपः ॥

स्वच्छो मुमुक्षोस्तु भवेदघोरः काम्यक्रियायामथ रक्तवर्णः ।
कृष्णोऽभिचारे ग्रहवैकृते च प्रोक्तो जपः स्यादपि लक्षमानः ॥

घृतावसिक्तैस्सतिलैस्सतण्डुलैर्वा घृताप्लुतैर्हैविर्भिर्वा दशांशं पुरश्चरणाहोमः ॥

अथ पूजायाः पीठविधानार्थं यन्त्रविधानमुच्यते —

हृल्लेखास्थितसाध्याक्षरविलसितकर्णिकं कलावीतं
वर्गाष्टकात्तकेसरमन्त्ये सहळक्षयाक्षरोल्लसितम् ।
मन्त्राक्षरत्रयोद्यद्दळमध्यदलाग्रकं च तद्बाह्ये
वह्निपुराश्रसमाश्रितकरचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ॥

अस्यार्थः — अष्टपत्र पद्मं विलिख्य तत्कर्णिकायां भुवनेशीं विलिख्य तन्मध्ये साध्यनामादीन्विलिखेत् । पुनः कर्णिकायां स्वरैः सबिन्दुकैः साध्यनामादीन् वेष्टयेत् । पुनर्दलमूले कादीन् मान्तान् पञ्चसु दलमूलेषु लिखित्वा, षष्ठे यादित्रयं सप्तमे वादित्रयं च अष्टमे सादिचतुष्टयं च विलिखेत् । पुनः अघोरमन्त्राक्षराणि त्रीणि त्रीणि दलमध्ये विलिखेत् । अवशिष्टाक्षराणि त्रीणि त्रीणि दलाग्रेषु विलिखेत् । पुनस्तद्बाह्ये षट्कोणं विलिख्य, तेषु प्राग्रक्षोनिलकोणेषु हुं इति विलिखेत् । प्रत्यगग्नीशकोणेषु फडिति विलिखेत् ॥

अस्मिन्यन्त्रमण्डले प्रासादोक्तशैवपीठे पञ्चगव्यैर्वा क्वाथोदकेन वा पुरश्चरणकलशं संपूर्य अघोरमूर्तिं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । परशवे नमः डमरुकाय० खड्गाय० खेटाय० बाणाय० धनुषे० शूलाय० कपालाय० ८ इति द्वितीयावृतिः । मातृभिस्तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी । अथवा पूर्वोक्तपञ्चाक्षरवत् पूजां कुर्यात् ॥

अथ प्रयोगः —

आज्यापामार्गसमित्तिलसर्षपपायसाज्यकैश्च पृथक् ।
रात्रौ सहस्रहोमात् भूतद्रोहादिशान्तिरुद्दिष्टा ॥

अयमर्थः — अपामार्ग-आघाडा । आज्याद्युक्तद्रव्यमाज्यान्तं च एकैकं सहस्रसंख्यं रात्रौ क्रमेण षड्भिर्दिनैर्जुहुयात् । पिशाचादिनिवृत्तिः ॥

प्रयोगान्तरम् —

सितकिंशुकनिर्गुण्डीकनकापामार्गजन्मनां समिधाम् ।
पृथगपि सहस्रहोमात् निग्रहमोक्षौचिराद्ग्रहाणां स्यात् ॥

निर्गुण्डी-निर्गुडी—நொச்சில் सितकिंशुकं-வெள்முருக்கு अपामार्गं-आघाडा—நாயுருவி कनक-धोत्रा—ஊமத்தை एतैः पृथक् पृथक् सहस्रहोमात् ग्रहाणां निग्रहमोक्षौ भवतः ॥

प्रयोगान्तरम् —

गव्याक्तैर्जुहुयात् पृथक् दशशतं मन्त्री मयूरेध्मकैः
भूयस्तैश्चतुरंगुलैश्च शिवपञ्चम्यां निशायां हुनेत् । इति ।

मयूरं-अपामार्गं । चतुरंगुलं-कोन्रै । शिवपञ्चमी - शुक्लपञ्चमी । उत्तरार्धोक्तफलमेवात्रापि द्रष्टव्यम् ॥

प्रयोगान्तरम् —

सर्पिर्मार्गसपञ्चगव्यचरुभिः सर्पिस्ससंपातकं
हुत्वा तं प्रतिभोजयेत् प्रतिशमं यान्त्येव सर्वे ग्रहाः ॥

अयमर्थः — मार्गमित्यपामार्गम् । सर्पिषा च अपामार्गेण च पञ्चगव्येन पाचितचरुणा च पुनरपि सर्पिषा चेत्येतैः पृथक्पृथक् सहस्रं हुत्वा संपातं च गृहीत्वा, संपातं साध्यं प्रतिभोजयेत् । ग्रहपीडा नश्यति ॥

अथास्यैवाघोरमन्त्रस्य यन्त्रान्तरमुच्यते –

पट्कोणे कर्णिकायां स्फुरयुगलधृतां साध्यगर्भां च शक्तिं
कोणाख्ये प्रस्फुरद्वन्द्वकमथ विलिखेत् मन्त्रवर्णान्दळेषु ।
षड्वेदद्वन्द्वषड्वेदकचतुर्गुणषट्संख्यकान् वाह्यषट्के
वर्मास्त्राणं तदेतद्ग्रहगदभयहृद्यन्त्रमाघोरमाहुः ॥

अस्यार्थः – प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां भुवनेशीं विलिखेत् । तदन्तः साध्यनामादीन् विलिखेत् । पुनः स्फुर स्फुर इति चतुर्भिरक्षरैः भुवनेशीं विलिखेत् । पुनः षट्सु कोणेषु प्रस्फुर पुस्फुरेत्येकैकमक्षरं विलिखेत् । पुनरवशिष्टमन्त्रवर्णान् दळेषूक्तविभागेन विलिखेत् । पूर्वदळे षडक्षराणि, पुनरपि चत्वारि, पुनश्चत्वारि, पुनष्षट्, पुनश्चत्वारि, पुनरपि चत्वारि, पुनरपि चत्वारि पुनष्षट्, एवं क्रमेण दळेषु विलिख्य, पुनर्बाह्ये षट्कोणं विलिख्य तेषु प्राग्रक्षोनिलकोणेषु हुं इति वर्माक्षरं विलिखेत् । प्रत्यगग्नीशकोणेषु फडित्य-स्त्राणं विलिखेत् । इति ॥

अघोरमन्त्रजपपूजादेः फलश्रुतिः —

नतु रिपवो नच रोगा न ग्रहपीडा न शस्त्रबाधा च ।
न क्ष्वेळरुजो मर्त्यान् स्पृशन्त्यघोरास्त्रमन्त्रजापात्तान् ॥

अथ अघोरास्त्रमन्त्रप्रसङ्गात् कल्पांतरोक्तप्रकारेण अघोरभस्मविधिरप्यत्र लिख्यते–

उशीरं चन्दनं कोष्ठं घनसारं सकुङ्कुमम् ।
श्वेतार्कमूलं वाराहीलक्ष्मीक्षीरमहीरुहाम् ॥

त्वचो बिल्वतरोर्मूलं शोषयित्वा सुचूर्णयेत् ।
चूर्णं व्योम्नि गृहीतेन गोमयेन विमिश्रितम् ॥

कृत्वा पिण्डानि संशोष्य संस्कृते हव्यवाहने ।

मूलेन दग्ध्वा तद्भस्म शुद्धपात्रे विनिक्षिपेत् ।
केतकीमालतीपुष्पैः वासयेत् भस्म शोधितम् ॥

अयुतं प्रजपेन्मन्त्रं स्पृष्ट्वा भस्म सुपूजितम् ।
एतदादाय दिनशः प्रातः पुण्ड्रं करोति यः ॥

तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहमहाग्रहाः ।

उशीरं–वाळा । घनसारं–कर्पूरम् । वाराही–भूतालम् । लक्ष्मी–श्रीताळी ॥

अथाघोरास्त्रमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तः पाशुपतास्त्रमन्त्रोपि लिख्यते —

वामदेव ऋषिः । पङ्क्तिः छन्दः । पशुपतिर्देवता । श्लीं बीजम् । हुं शक्तिः । प्रणवादिमन्त्राक्षरैः षडङ्गन्यासः ॥ ध्यानम् —

पञ्चवक्त्रं महाबाहुं दशबाहुं त्रिलोचनम् ।
भीषणं भास्करं रुद्रं पिङ्गभ्रूश्मश्रुमूर्धजम् ॥

खड्ग-खेटक-नाराच-धनु-श्शर कमण्डलून् ।
शक्तिं शूलं च परशुं ब्रह्मदण्डं कराग्रकैः ॥

बिभ्राणं स्फटिकाभ्राभं नागाभरणभूषितम् ।
सर्वास्त्रेशं पशुपतिं सर्वरक्षाकरं स्मरेत् ॥

ओं श्लीं पशु हुं फट् । इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः । अक्षरलक्षजपः । पायसेन दशांशं होमः । अथ पूजा —

प्रासादोक्तपीठे समावाह्य समर्चयेत् । तत्पुरुषादिपञ्चब्रह्मनामभिः प्रथमावरणम् । अङ्गैर्द्वितीयावृतिः । प्रासादविधाने पूर्वोक्तैः अनन्ताद्यैस्तृतीयावृतिः ।

उमादिभिश्चतुर्थी । ध्यानोक्तायुधैः पञ्चमी । इन्द्रादिभिष्षष्ठी ॥

अथ प्रयोगः —

ध्यानपूर्वकमन्त्रजपः सर्वभीतिनिवृत्तिकरः । एतन्मन्त्राभिमन्त्रितौषधप्रयोगः सर्वविषरोगहरः । एतन्मन्त्रहोमसंपातजपसमेतशस्त्रप्रयोगः सर्वशत्रुसेनाविध्वंसको विजयकरश्च भवति ॥

अनेन शतसंजप्तं जलं ग्रस्तमुखे क्षिपेत् ।
सद्यस्तं मुञ्चति क्रन्दन् ग्रहो मन्त्रप्रभावतः ॥

अघोरादिमन्त्रप्रसङ्गात् खड्गरावणमन्त्रोपि रौद्रत्वसामान्येन मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते —

भैरवऋषिः । अनुष्टुप् छन्दः । खड्गरावणरुद्रो देवता । खां हृत् । खीं शिरः । इत्याद्यङ्गानि । खौं बीजम् । ह्रीं शक्तिः । ध्यानम् —

खण्टाकपालसृणिमुण्डकृपाणखेट-
खट्वाङ्गशूलडमरूनभयं दधानम् ।
रक्ताङ्गमिन्दुशकलाभरणं त्रिणेत्रं
पञ्चाननाब्जमरुणांशुकमीशमीडे ॥

ओं नमः पशुपतये ओं नमो भूताधिपतये ओं नमो रुद्राय लल खड्गरावण विहर विहर सर सर नृत्य नृत्य श्मशानभस्मार्चि(श्चि)तशरीराय घण्टाकपालमालाधराय व्याघ्रचर्मपरिधानाय शशाङ्ककृतशेखराय कृष्णसर्पयज्ञोपवीतिने चल चल वल्ग वल्ग अनिवर्तिकपालिने हन हन भूतान् त्रासय त्रासय मण्डलमध्ये घट्ट घट्ट रुद्रांकुशेन समयं प्रवेशय प्रवेशय आवेशय आवेशय चण्डासिधाराधिपतिः रुद्र आज्ञापयति स्वाहा ॥

खड्गरावणमन्त्रोयं सप्तत्यूर्ध्वशताक्षरः ।

अयुतद्वितयं जपेत् । घृतसिक्तेन पायसेन दशांशं जुहुयात् पुरश्चरणार्थम्॥

अथ पूजाविधिः –

प्राक् प्रासादविधानोक्तशैवपीठे खं इति बीजेन मूर्तिं संभाव्य मूलेन समावाह्य समर्चयेत् । अङ्गैः दळमूलेषु प्रथमावृतिः । चुलुकुण्डायै० प्रस्खलन्त्यै० कृष्णपिङ्गळायै० फल्गुन्यै० चिरमळ्ळायै० मत्तमालिकायै० ठेङ्किण्यै० वज्राङ्कितजटायै० ८ इति द्वितीयावृतिः । मातृभिस्तृतीया । रौद्राय० पिङ्गळाय० श्मशानाङ्काय० भीषणाय० दृढकण्ठाय० भृङ्गिरिटये० आमामर्दाय० महाकालाय० ८ एते अष्टौ द्वारपालाः द्वौ द्वौ पूर्वादिदिक्षु । पुनः कुम्भकर्णाय० अशोकाय० भल्लाटकाय० जातहारकाय० ४ इति कोणेष्वेकैकम् । एवं द्वारपालैश्चतुर्थ्यावृतिः । इन्द्रादिभिः पञ्चमी । इत्थं संपूजयेत् । भूतनिग्रहप्रधानोयं मन्त्रः ॥

अथ खड्गरावणमन्त्रप्रसङ्गात् शरभसाळुवमन्त्रोपि रौद्रत्वसामान्येन कल्पान्तरोक्तोऽत्र योग्यतावशाल्लिख्यते —

वामदेव ऋषिः । अतिजगती छन्दः । कालाग्निरुद्रो देवता । अथवा कालाग्निरुद्र ऋषिः । जगती छन्दः । शरभो देवता ॥ ओं खं बीजम् । स्वाहा शक्तिः । ओं खें (खं) खां खं फट् हृत् । प्राणग्रहासि प्राणग्रहासि हुं फट् शिरः । सर्वशत्रुसंहरणाय शिखा । शरभसाळुवाय कवचम् । पक्षिराजाय हुंफट् स्वाहा अस्त्रम् । ओं इति दिग्बन्धः । ध्यानम् —

चन्द्रार्काग्निस्त्रिदृष्टिः कुलिशवरनखश्चञ्चलात्युग्रजिह्वः
काली दुर्गा च पक्षौ हृदयजठरगौ भैरवो जाठराग्निः ।
ऊरुस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातादि(ति)वेगः
संहर्ता सर्वशत्रून् स जयति शरभस्साळुवः पक्षिराजः ॥

मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।

घोरवक्त्रश्चतुष्पादः ऊर्ध्ववक्त्रश्चतुर्भुजः ॥

कालान्तदहनौ[1] पुण्यौ नीलजीमूतनिस्वनः ।
अरिस्तद्दर्शनादेव विनष्टबलविक्रमः ॥

सटाच्छटोग्ररूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमश्शरभमूर्तये ॥

ओं खं खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वशत्रुसंहरणाय शरभसालुवाय पक्षिराजाय हुं फट् स्वाहा। इति मन्त्रः ॥

ओं नमोऽष्टपादाय सहस्रबाहवे द्विशिरसे त्रिनेत्राय, द्विपक्षायाग्निवर्णाय मृगविहङ्गरूपाय वीरशरभेश्वराय ओं इति मन्त्रान्तरम् ॥

त्रयोदशाष्टचतुष्पञ्चाष्टनववर्णैरङ्गानि । ऋष्यादि पूर्ववत् । रक्षाकराविमौ मन्त्रौ । द्विचत्वारिंशदर्णसहस्रं जपेत् ॥

अस्यैव शरभस्य ध्यानान्तरम्—

अष्टाङ्घ्रिश्च सहस्रबाहुरनलच्छायाशिरोयुग्मभृत्
द्विव्यक्षोऽतिजवो द्विपुच्छ उदितस्साक्षान्नृसिंहासहः ।
अर्धेनापि मृगाकृतिः पुनरथाप्यर्धेन पक्ष्याकृतिः
श्रीवीरश्शरभस्स पातु सुचिरं नीत्वा सदा मां हृदि ॥

क्षीरोदेन दशांशं पुरश्चरणाहोमः ॥

अस्यैव यन्त्रमाह—

रेकारं पूर्वमालिख्य तद्बाह्ये वर्तुलं न्यसेत् ।

---

१. पग्यो इति ख, ग, ङ पाठः ।

तद्बाह्ये चतुरश्रं च तद्बाह्येऽष्टदळं भवेत् ॥

तद्बाह्ये षोडशारं च तदग्रे वृत्तमालिखेत् ।
तदग्रे पञ्चकोणं च रंकारे साध्यनामकम् ॥

वर्तुळे मूलमालिख्य चतुरश्रे द्रांद्रींह्रूंक्षूम् ।
अथ तत्र कवर्गस्य द्वितीयं कोणतो लिखेत् ॥

दळाष्टके लं रं शं पं वं यं सं हं तथैव च ।
लोकेशबीजान्येतानि मिळित्वा षोडशे पुनः ॥

षोडशाख्यान् स्वरान्वृत्ते साध्यकाख्यां समन्ततः ।
पञ्चकोणेषु द्रां द्रींक्लींब्लूं सः इत्यादि विन्यसेत् ॥

यन्त्रमेवं समालिख्य तालपत्रे प्रयत्नतः ।
स्नुहिक्षीरेण तं लिप्य तत्र यन्त्रं च निक्षिपेत् ॥

चुल्योपरि घटे स्थाप्य तापयेत् सर्वशत्रवः ।
गृहे स्थिताः पलायन्ते प्रसादात्साळुवस्य च ।
साधकस्सर्वमाप्नोति देशान्तरगतोऽपि वा ॥

अस्यार्थः — प्रथमं सबिन्दुकं रेफं विलिख्य तन्मध्ये साध्यनामादीन् विलिखेत् । तद्बहिर्वृत्तं विलिख्य तस्मिन्वृत्ते मूलमन्त्रेण वेष्टयेत् । तद्बहिश्चतुरश्रं विलिख्य चतुरश्रदिक्षु द्रां द्रीं ह्रीं क्षूं इत्यस्यैकैकमक्षरं विलिखेत् । खं खं इति विदिक्षु विलिखेत् । तद्बहिरष्टदळं विलिख्य तेषु दळेषु लं रं शं पं वं यं सं हं, प्रागग्नीशनिर्ऋति जलेश वायु सोम प्रेतेश दिक्ष्वेकैकं यथायथं विलिखेत् । तद्बहिष्षोडशदळं विलिख्य तेषु दळेषु षोडशस्वरान् विलिखेत् । तद्बहिर्वृत्तं विलिख्य परितस्साध्यवर्णैर्वेष्टयेत् । तद्बहिः पञ्चकोणं विलिख्य

तेषु कोणेषु द्रां द्रीं क्लीं ब्लूं सः इत्यस्यैकैकमक्षरं विलिखेत् । एवं ताळपत्रे विलिख्य यन्त्रं स्नुहिक्षीरेण विलिप्य घटे स्नुहिक्षीरं विसृज्य चुल्योपरि संस्थाप्य तापयेत् । उच्चाटनं भवति ॥

स्नुहिक्षीरं—चीकणीरूपारीचारस । திருகுகள்ளிப்பால்.

त्रिकोणं विलिखेत्पूर्वं तद्बाह्ये तु दळद्वयम् ।
द्वादशारं तु तद्बाह्ये तद्बाह्ये तु नवाश्रकम् ॥

सप्ताश्रं च तु पञ्चाश्रं भूपुरं च क्रमाल्लिखेत् ।
पावकादिपृथिव्यन्तं लिखेद्यन्त्रं यथाक्रमम् ॥

तद्बहिः कोणषट्के तु प्रागारभ्य मनुं शिवे ।

खट् फट् जहि तथा छिन्धि भिन्धि हन्धि लिखेत् क्रमात् ॥
पदषट्कमित्यर्थः ॥

अकारादिक्षकारान्तं वेष्टयेद्बिन्दुसंयुतम् ।
महायन्त्रमिदं पुण्यं सप्तावरणकं परम् ॥

सर्वभूतवशीकारं सर्वशत्रुजयं सुखम् ।
नानाज्वरहरं यन्त्रं नानाक्षुद्रनिवारणम् ॥

अथ प्रयोगः—

आजं माहिषकं चैव नवनीतं तु यो नरः ।
हुनेत्तत्र तु मूलेन साध्यनामपुरस्सरम् ॥

साध्यो वश्यो भवेत्क्षिप्रं सत्यं सत्यं न संशयः ।
नारी च दासी भवति शिवेन परिभाषितम् ॥

प्रयोगान्तरम्—

दूर्वाङ्कुरामृताखण्डैः गोधूमैश्च विशेषतः ।

तिललाजैस्सर्षपैश्च मिश्रीकृत्य हुनेत्ततः ॥

त्रिदिनान्ते सुसंघाताः पलायन्ते न संशयः ।

प्रयोगान्तरम् —

द्विपन्तमुद्दिश्य सहस्रवारं जप्त्वा घृतं तेन हुनेत् हुताशे ।
दिनावसानात्पुरतो रिपूणां शरीरनाशाय सुसिद्धमन्त्री ॥

पायान्नो देवश्शरभस्त्वपायात्
सदाऽरेः रोगाद्विपिनोरगाभ्याम् ।
वैश्वानराखुकरिऋक्षकेभ्यः
परेभ्यो भूतेभ्यो रुषः कृतान्तात् ॥

इति शरभमन्त्रः ॥

आथर्वणमिदं मन्त्रममोघं दुरितापहम् ।
सर्वसंरक्षणं श्रेष्ठं सर्वसौभाग्यदायकम् ॥

प्रयोगान्तरम् –

मधु मधूकं मधुकं दशाहं सहस्रमेकैकदिनं वरेण्ये ।
होमं प्रकुर्यात्प्रयतो मनीषी समस्तदुर्वारभयाद्विमुक्त्यै ॥

लवङ्गमेलं मधुकं च कोष्ठं तिलं घृतं चम्पककुड्मलं च ।
दिनं सहस्रं प्रयतो दशाहमुन्मादतापज्वरभूतशान्त्यै ॥

श्रीभार्गवीभिर्नवरात्रहोमैः प्रयान्ति शान्तिं कुपिताश्च देवाः ।
उदुम्बराश्वत्थसमित्सहस्रैः कुर्याच्चतुर्थज्वरभूतशान्त्यै ॥

पलाशशाखाभिरभीष्टसिद्ध्यै रक्षां च कुर्यादथ खादिरोत्थैः ।
उदुम्बरोत्थैर्बहुमित्रकामस्त्वनन्तरायाय शमीसमिद्भिः ॥

पुष्टाय कुर्यादथ दीपिकाभिः प्रसादसिद्ध्यै करवीरपुष्पैः ।

वश्याय कुर्यान्मधुसिक्तपद्मैराकर्षणाय स्मरपञ्चबाणैः ।
विद्वेषणायाथ विषाङ्घ्रिपोत्थैः स्तम्भक्रियायै दविजाप्रसूनैः ॥

उच्चाटनाय स्नुहिबालपत्रैः संहारणायार्ककटुस्नुहीभिः ।
धुत्तूरशाखाफलपत्रपुष्पैरुन्मादनायास्य शिफा विमुक्त्यै ॥

यद्धान्यहोमं (कर्त्रे) हुतमस्य शीघ्रं तद्धान्यराशेस्तनुते विवृद्धिम् ।
दाडिमैः कुसुमजालकैर्नराः मन्मथत्वमुपयान्ति सुभ्रुवाम् ॥

एवमेव नियुतं रवेर्दिने कारयेदखिलकाम्यसिद्धये ।
अन्नेन चान्नं पयसा पयोधं घृतेन भाग्यं मधुना च नादम् ॥

तैलेन सारं दधिभिश्च पुष्टिं चूतप्रवालैरभिरूपसिद्धिम् ।
त्रिकटुसर्षपहिङ्ग्वजमोदकान्युरगमौलिससैन्धवजीरकम् ।
सघृतपारदटङ्कणयुक्तं शरभहोममरिक्षयमेतत् ॥

साध्यर्क्षवृत्ति(मूर्तिं) परिकल्प्य तस्मिन् वायुं समुत्पाद्य मनोऽश्शतेन ।
श्वेतार्कदुग्धेन ततोऽष्टचूर्णं पिष्ट्वा समालिप्य वितप्य वह्नौ ॥

लिप्य प्रताप्याथ पुनः प्रलिप्य ताप्य प्रलिप्य निखनेत् श्मशाने।
दत्त्वा बलिं मन्त्रमथ त्रिवारं जप्त्वा ततस्स्नानमथाचरित्वा ॥

जपेत्सहस्रं शरभेश्वराख्यं जपावसाने निखिलैरवेद्यः ।
शरीरपिण्डं तरसा विहाय सद्यो रिपुः कालपुरीं प्रयाति ॥

तत्र होमद्रव्याणां नामानि लिख्यन्ते —

मधु–मद தேன். मधुकं இலுப்பைப்பூ. मधुकं–अतिमधुरम् । श्रीभार्गवी-श्वेतार्कम् । खादिरं–खैर கருங்காலி दीपिक–पुत्रदीपिके । पञ्चबाणः — अरविन्द, अशोक, चूत, தேமா, சிறுசண்பகம், கருநைதல் विषांघ्रिपं-विषमुष्टि எட்டி दविजाप्रसूनं–सैर तस्य संज्ञा । दाडिमी-दाडिंबं ।

त्रिकटु-शुण्ठि-मिरे-पिप्पली। धुत्तूरं-धोत्ता। शिफेति मूलमुच्यते। सर्षपं-मोहरया। हिंगु-हिंगु। अजमोदकं-वोंवा அஜமதம் उरगमौलि-तत्संज्ञमेव। सैन्धवं-मीठ இந்துப்பு टङ्कं-टाकणसार வெண்காரம் पारदः-रसः। अष्टचूर्णं-शुण्ठी-मिरे-पिप्पल्या-काळीजीरे-जीरे-सैन्धव-लवण-हिङ्गुवोंवा ८ சுக்கு, மிளகு, திப்பிலி, கருஞ்சீரகம், நல்லஜீரகம், இந்துப்பு, பெருங்காயம், அஜமதம். 8 इति॥

प्रयोगान्तरम् —

तद्गृह्य तत्साध्यविहङ्गमाङ्गं सूत्रेण कोदण्डमिवाथ बध्द्वा।
साध्याङ्गजैर्दक्षपदाङ्गमृद्भिः कृत्वाऽऽकृतिं वै परिकल्प्य वायुम्।
मञ्जिष्ठमालिप्य मुखे च कण्ठे त्वलातचूर्णं त्वथ शेषदेहे॥

तदस्थिशेषेण करेण कण्ठे मन्त्रं समुच्चार्य विमुच्य चैनम्।
शतप्रयोगात्स्वरिपुः स्वदेहात् प्रयाति याम्यं पुरमाशु घोरम्॥

कृत्वा साध्यचतुष्पदास्थिनिचयैपृत्कृष्टकां कृत्तिकां
तस्याः काणकवस्त्रभूषणसुमालेपाञ्जनैश्चन्दनैः।
आभूष्य स्वकरेण मूर्ध्नि निकटे स्पृष्ट्वा शतं मारुतं
जप्त्वा मन्त्रसहस्रकं च विधिवत् खड्गेन तां पीडयेत्॥

यस्मिन् पीडितमत्र शत्रुतनुषु क्षिप्रं तु तस्मिन्स्थले
पीडां कुर्वति नूनमग्नितपनादाविज्वराङ्गो भवेत्।
अर्कक्षीरकटुत्रयेण सहितां वह्नौ प्रदग्ध्वा तदा
शत्रुः कालपुरीं प्रयाति तरसा श्रीसाल्वाज्ञावशात्॥

कृत्तिं कृत्वाथ साध्यर्क्षसमुचिततरोः क्षीरमालिप्य तस्यां
वायुं संस्थाप्य जप्त्वा मनुमथ शतकं क्षारतोयेऽनलाक्तम्।
कुर्यान्निक्षिप्तमत्र प्रवचनकरणैश्शत्रुलोकास्तदानीं
प्रायस्सन्तापपूर्वज्वरवरसहितास्सम्यगार्ता भवन्ति॥

साध्यद्रुत्वङ्गनोष्ठां द्विविधिकृतियुतां तन्तुनैकीकृतां तां
यायुं संस्थाप्य तस्याशिरसि तनयकं जन्तुमावेशयित्वा ।
नासे गौळीं च कण्ठे भ्रमरयुगमथो जाठरे त्वाखुयुग्मं
जप्त्वा मन्त्रं तु मन्त्री द्विशतमथ खनेर्द्धरिनाशाय कोष्ठे ॥

अथ वन्ध्याचिकित्साख्यमभिषेकं वदाम्यहम् ।
वीर्यवन्तीं वधूं शुद्धां ऋतुस्नानदिनादितः ॥

दशाहं जन्मवन्ध्याख्यां त्वधिकं काकवन्ध्यकाम् ।
मृतवन्ध्यां षोडशाहं तदन्ते तु विशेषतः ॥

ऋतं चेतितिचा(त्यृचा) कुम्भं शतवाराभिमर्शितम् ।
अभिषिच्य ततः पश्चाद्रक्षां कुर्वीत बुद्धिमान् ॥

सीसं षाण्मासवीर्यं तु ताम्रं वत्सरवीर्यकम् ।
त्रिलोहं वत्सरार्धं तु रजतं च त्रिवार्षिकम् ॥

भूर्जपत्रं चतुर्वर्षं पञ्चाब्दं पञ्चलोहकम् ।
दशवर्षं च कार्ष्णीयं कनकं यावदायुषम् ॥

तस्माद्धिरण्मये पट्टे साध्ययन्त्रं विलिख्य तु ।
तद्यन्त्रकेऽक्षरं यद्यत्तत्तदावाह्य दैवतम् ॥

अक्षरदेवताः पूजाविधाने वक्ष्यन्ते ॥

प्रत्येकं शतवारं तु प्राणमन्त्रं जपेद्बुधः ।
षोडशाद्युपचारं तु कुर्यात्सर्वं यथाक्रमम् ॥

मूलेन च सहस्रं तु प्रत्यहं प्रजपेत् शुभे ।
अभिषेकावसाने तु प्रमज्जन्तीं वधूं जले ॥

बध्वा तु पत्रिकां कण्ठे पश्चादुत्थापयेत् शिवे ।
अथ सा शुद्धचित्ताख्या शुद्धाङ्गा शुद्धवाससी ॥

ततस्तदादि षण्मासं निम्नगां नातिलङ्घयेत् ।
भृगुवारे तु संस्नानं तदा यन्त्रस्य धूपकम् ॥

ब्राह्मणं भोजयेदेवं ऋतुस्नानदिने दिने ।
तदा घृतपयोक्तान्नमृतुस्नाता विपेष्य च ॥

भित्वा तदष्टकं (धा)पिण्डमुपलेपितभूतले ।
निक्षिप्य च करं धात्वा तोयेन परिवेष्टय च ॥

आकाशभूतलस्वर्गचारिणो देवताः स्वयम् ।
इहागत्य मुदा कालं वदन्त्वाशु सुतासुतम् ॥

दशवारमिदं जप्त्वा स्फोटयेत्तु करं पुनः ।
ततः पश्चात्प्रदेशस्थो जपेन्मन्त्रं पुनः पुनः ॥

प्रथमं काक आगत्य भक्षयेद्यत्तु पिण्डकम् ।
तद्दक्षिणादियुग्मं चेत्पुत्री भवति निश्चयम् ।
पुत्रस्त्वयुग्मकं नूनं पिण्डं चेत्स्याद्विशेषतः ॥

प्रथमं प्रथमे मासि द्वितीयादि यथाक्रमम् ।
तत्तल्लक्षणकाले तु सा नारी गर्भिणी भवेत् ॥

एतद्विधानकं गुह्यं सर्वशास्त्रोत्तमोत्तमम् ।
इत्थं ज्ञात्वा कलौ मन्त्री सर्वकार्याणि साधयेत् ॥

तुलायां वृषभे सिंहे मीने कुम्भे च वृश्चिके ।
रक्षाभिषेकौ कर्तव्यौ नान्ये मासि शुभाशुभे ॥

अयमेव सर्वत्र रक्षाबन्धनन्यायः ॥

अथ सर्वमन्त्रसाधारणचतुरङ्गविधिः लिख्यते —

जपश्च तर्पणं होमः ब्राह्मणाराधनं तथा ।
चतुरङ्गमिति ख्यातं तस्माद्यत्नेन कारयेत् ॥

स्वात्मनाथमुखान्मन्त्रं शुश्रुवे विधिवद्यदा ।
तदादिसिद्धिपर्यन्तं गर्भस्था मन्त्रदेवता ॥

जपे पूर्णे ततस्त्वन्ते जायते मन्त्रदेवता ।
तन्मनोदर्शनं यत्तत्प्रथमाङ्गमुदाहृतम् ॥

ततश्च तर्पणात्पूर्वं मन्त्र्यदेवो न वर्धते ।
वरेण्यं तर्पणं तस्माद्यत्नेनापि समाचरेत् ।
वर्धमानो भवेद्देवः तर्पणारम्भणादितः ॥

समाप्तौ वर्धितं यत्तद्द्वितीयाङ्गमुदाहृतम् ।
विधिनोक्तेन होमेन मन्त्रदेवः प्रभुर्भवेत् ॥

सर्वाधिकं प्रभुत्वं यत्तृतीयाङ्गमुदाहृतम् ।
ब्राह्मणाराधनाद्देवो दयावान्वरदो भवेत् ॥

तेन लब्धं प्रसादं यत्तच्चतुर्थमुदाहृतम् ।
मन्त्रिणां मन्त्रसिद्ध्यर्थं चतुरङ्गमुदाहृतम् ॥

इति चतुरङ्गविधिः ॥

अथ फलविशेषावाप्तये ऋग्विशेषा उच्यन्ते —

यस्मान्नराद्धनापेक्षा तत्समीपे जपेदिमाम् ।
किं ते कृण्वन्त्यृचं मन्त्री शतोत्तरसहस्रकम् ॥

स्वयमेव स सन्तुष्टस्तस्मै सर्वस्वदो भवेत् ।
तद्धनं सहसा लब्ध्वा सुखी भवति निश्चयम् ॥

विजने कानने घोरे राजचोरादिसङ्कटे ।
अभिव्ययस्वेति ऋचं जपेत्तद्भीतिशान्तये ॥

सङ्ग्रामे तुमुले प्राप्ते बलं धेहीत्यृचं जपेत् ।
सङ्क्रन्दनबलं प्राप्य सहसा विजयी भवेत् ॥

सङ्ग्रामे च महायुद्धे शत्रूणां मायया वृते ।
वयस्सुपर्णेति ऋचं जपेदष्टोत्तरं शतम् ॥

तरसा वैरिणां मायां क्षपां सूर्य इवोदये ।
जयित्वा सुप्रभावेन स मन्त्री विजयी भवेत् ॥

निम्नगातरणे काले ह्युदगादित्यृचं जपेत् ।
महाग्राहयुतां घोरां नदीं तीर्त्वा सुखं व्रजेत् ॥

विजहीष्वेति सूक्तेन शतवाराभिमर्शितम् ।
तत्तैलं पाययेद्देवि सा नारी सूयते द्रुतम् ॥

प्रथमे पञ्चमे मासि तृतीये सप्तमे तथा ।
यदा पीतं तदा नारी तत्क्षणादेव सूयते ॥

व्यतीतकाले संप्राप्ते विपिने निवसेद्यदि ।
यमस्मादित्यृचं जप्त्वा जप्त्वा शय्यानिवेशने ॥

तत्रैव काननाधीशो रक्षत्यनिशमम्बिके ।
तस्मात्सर्वप्रयत्नेन जपेत्सौख्यं लभेत्तदा ॥

विष्णुरित्यादिसूक्तेन नारीणां पुत्रसिद्धये ।
सहस्रवारं संमन्त्र्य तदाज्यं प्राशयेत् शिवे ॥

एवं दिनत्रयं कुर्यान्मासात्पुत्रफलं लभेत् ।
तदादि रक्षा कर्तव्या नारीणां गर्भवृद्धये ॥

गणानां त्वेत्यृचा मन्त्री जपेद्विघ्ननिवृत्तये ।
तस्य विघ्नभयं नास्ति जाग्रत्स्वप्नसुषुप्तिषु ॥

बृहत्सामेत्यृचामन्त्र्य रक्षां संपूज्य पार्वति ।
तद्रक्षाधारणं कुर्यात् जङ्गमाङ्गे वरानने ॥

तथाविधं समालोक्य यक्षगन्धर्वराक्षसाः ।
बहुशो भीतिमाशङ्क्य सन्निकर्षं न यान्ति ते ॥

भूतप्रेतपिशाचानां किमु सर्वग्रहादिनाम् ।
नराणामितराणां च जङ्गमानां वरानने ॥

अथ शरभसाळुवपूजाविधानमुच्यते —

त्रिकोणं विलिखेत्पूर्वं तद्बहिर्वृत्तमालिखेत् ।
तद्बहिश्चाष्टपत्रं तु द्वादशारं ततः परम् ॥

षोडशारं ततः पश्चात् ततो भूपुरयुग्मकम् ।
त्रिकोणमध्ये देवेशं शरभं साळुवेश्वरम् ॥

भसन्येतद्विलिख्यावाह्य तस्मिन्मण्डले परिवारैस्सह समर्चयेत् । चन्द्राय० सूर्याय० वह्नये० इति त्रिकोणेषु समर्चयेत् । भैरवाय० वाडबाग्नये० दुर्गायै० काळ्यै० इति त्रिकोणमध्ये चतुर्दिक्षु । अष्टदळेषु इन्द्रादीन्समर्चयेत् । व्याधये० मृत्यवे० इति पार्श्वद्वये त्रिकोणस्य । मदनाय० रक्तचामुण्ड्यै०

स्वयमेव स सन्तुष्टस्तस्मै सर्वस्वदो भवेत् ।
तद्धनं सहसा लब्ध्वा सुखी भवति निश्चयम् ॥

विजने कानने घोरे राजचोरादिसङ्कटे ।
अभिव्ययस्वेति ऋचं जपेत्तद्भीतिशान्तये ॥

सङ्ग्रामे तुमुले प्राप्ते बलं धेहीत्यृचं जपेत् ।
सङ्क्रन्दनबलं प्राप्य सहसा विजयी भवेत् ॥

सङ्ग्रामे च महायुद्धे शत्रूणां मायया वृते ।
वयस्सुपर्णेति ऋचं जपेदष्टोत्तरं शतम् ॥

तरसा वैरिणां मायां क्षपां सूर्य इवोदये ।
जयित्वा सुप्रभावेन स मन्त्री विजयी भवेत् ॥

निम्नगातरणे काले ह्युदगादित्यृचं जपेत् ।
महाग्राहयुतां घोरां नदीं तीर्त्वा सुखं व्रजेत् ॥

विजहीष्वेति सूक्तेन शतवाराभिमर्शितम् ।
तत्तैलं पाययेद्देवि सा नारी सूयते द्रुतम् ॥

प्रथमे पञ्चमे मासि तृतीये सप्तमे तथा ।
यदा पीतं तदा नारी तत्क्षणादेव सूयते ॥

व्यतीतकाले संप्राप्ते विपिने निवसेद्यदि ।
यमस्मादित्यृचं जप्त्वा जप्त्वा शय्यानिवेशने ॥

तत्रैव काननाधीशो रक्षत्यनिशमम्बिके ।
तस्मात्सर्वप्रयत्नेन जपेत्सौख्यं लभेत्तदा ॥

विष्णुरित्यादिसूक्तेन नारीणां पुत्रसिद्धये ।
सहस्रवारं संमन्त्र्य तदाज्यं प्राशयेत् शिवे ॥

एवं दिनत्रयं कुर्यान्मासात्पुत्रफलं लभेत् ।
तदादि रक्षा कर्तव्या नारीणां गर्भवृद्धये ॥

गणानां त्वेत्यृचा मन्त्री जपेद्विघ्ननिवृत्तये ।
तस्य विघ्नभयं नास्ति जाग्रत्स्वप्नसुषुप्तिषु ॥

बृहत्सामेत्यृचामन्त्र्य रक्षां संमृज्य पार्वति ।
तद्रक्षाधारणं कुर्यात् जङ्गमाङ्गे वरानने ॥

तथाविधं समालोक्य यक्षगन्धर्वराक्षसाः ।
बहुशो भीतिमाशङ्क्य सन्निकर्षं न यान्ति ते ॥

भूतप्रेतपिशाचानां किमु सर्वग्रहादिनाम् ।
नराणामितराणां च जङ्गमानां वरानने ॥

अथ शरभसाळुवपूजाविधानमुच्यते —

त्रिकोणं विलिखेत्पूर्वं तद्बहिर्वृत्तमालिखेत् ।
तद्बहिश्चाष्टपत्रं तु द्वादशारं ततः परम् ॥

षोडशारं ततः पश्चात् ततो भूपुरयुग्मकम् ।
त्रिकोणमध्ये देवेशं शरभं साळुवेश्वरम् ॥

भस्मन्येतद्विलिख्यावाह्य तस्मिन्मण्डले परिवारैस्सह समर्चयेत् । चन्द्राय० सूर्याय० वह्नये० इति त्रिकोणेषु समर्चयेत् । भैरवाय० वाडवाग्नये० दुर्गायै० काळ्यै० इति त्रिकोणमध्ये चतुर्दिक्षु । अष्टदळेषु इन्द्रादीन्समर्चयेत् । व्याधये० मृत्यवे० इति पार्श्वद्वये त्रिकोणस्य । मदनाय० रक्तचामुण्ड्यै०

मोहिन्यै० द्राविण्यै० शब्दाकर्षिणिकायै० वाण्यै० रमायै० मायायै० पुळिन्दिन्यै० शास्त्रे० क्षोभिण्यै० ज्येष्ठायै० १२ इति द्वादशदळेषु समर्चयेत् । *ब्रह्मणे नमः । पराशक्त्यै नमः । विष्णवे नमः । मायायै० वराहाय० पृथिव्यै० विधये० शिवाय० अश्विनौ द्वौ० (अश्विभ्यां) वीरभद्राय० भारत्यै० शिवाय० शङ्कराय० रुद्राय० कालरुद्राय० १६ इति षोडशदळेषु क्रमेण षोडशस्वरपूर्विकास्तत्तद्देवता-स्समर्चयेत् ॥

तद्बहिः प्रथमभूपुरे महादिग्गणेशाय० यमाय० स्कन्दाय० भैरवाय० इति समर्चयेत् । त्वरितायै० वीरभद्राय० वाडवानलभैरवाय० महामायायै० इति वायव्यादिविदिक्षु समर्चयेत् । तद्बाह्ये भूपुराष्टदिक्षु अष्टमातरस्समर्चनीयाः । तत्परितः पुनः ब्रह्मणे० जाह्नव्यै० गणेशाय० भैरवाय० कालाय० भद्रकाळ्यै० भीमकाळ्यै० जातवेदसे० अर्धनारीश्वराय० परमात्मने० पृथिव्यै० चन्द्राय० शुक्राय० विष्णवे० बलभद्राय० धनदाय० पराशक्त्यै० दुर्गायै० धर्माय० निर्विकल्पाय० अग्नये० भैरवाय० अश्विभ्यां० भार्गवाय० ईश्वराय० वायवे० कृशानवे० शक्राय० वरुणाय० शङ्कराय० द्वादशादित्येभ्यः० भारत्यै० सदा-शिवाय० पृथिव्यै० नृसिंहाय नमः ३५ इति ककारादिहलां वर्णदेवताः प्रोक्ताः । आभिः तद्वर्णपूर्विकाभिस्समर्चयेत् । एवं भस्मनि यन्त्रं विलिख्य संपूजयेत् । अस्य फलमाह —

तद्भस्मागमनं श्रुत्वा कम्पन्ते विग्रहा ग्रहाः ।
किंपुनर्दर्शनादार्ये भूतप्रेतादिराक्षसाः ॥

अथावरणदेवतामन्त्राश्च केचिल्लिख्यन्ते —

अघोर ऋषिः । विराट् छन्दः । भैरवो देवता । भं बीजम् । फट्

---

* ब्रह्मादिषु अश्विनौ द्वौ इति निर्देशात् तयोः स्थानद्वयं बोध्यम् । अथवा नामैकं योज्यम् ॥

शक्तिः । अभीष्टसिध्यर्थे विनियोगः । भां इत्यादिना करन्यासं एतेनैव षडङ्गं च ॥

कालाम्बुदश्यामलमानतास्यं करालमव्याहतमप्रमेयम् ।
लोलालकं लोकविनाशहेतुं लुठद्रिपुं नौमि धृताट्टहासम् ॥

ओं नमो भगवते उग्रभैरवाय सर्वविघ्न नाशय ठठ स्वाहा । चतुर्विंशतिसहस्रजपः ॥

अनलभवनमध्ये शक्तिबीजं फडर्णं
हरिहर जय हुंफट् चाष्टकोणे ससाध्यम् ।
बहिरथ वसुपत्रे मूलमन्त्रत्रिवर्णान्
भुवमथ लिपिवीतं भैरवं वैरिवज्रम् ॥

अस्यार्थः — प्रथमं त्रिकोणं तन्मध्ये ह्रीं फट् इति, तद्बहिरष्टकोणं, तत्कोणेषु हरिहर जय हुंफट् इति विलिखेत् । तद्बहिरष्टदलेषु मूलमन्त्रत्रिवर्णं, तद्बहिश्चतुरश्रं, तद्बहिर्मातृकया वेष्टयेत् ॥

भैरवं वह्निकोणे समर्चयेत् । अष्टकोणेषु भैरव्यै० अघोराय० गणेशाय० स्कन्दाय० विष्णवे० दक्षिणामूर्तये० चण्डोद्दण्डगणेशाय० आपदुद्धारणाय० इति यथाक्रमं समर्चयेत् । दलान्ते अष्टमातरः पूज्याः । नरान्तकाय० विजयाय० भीमाय० रक्तभैरवाय० इति प्रतीच्यादिदिक्षु समर्चयेत ॥ इति भैरवपूजाविधिः ॥

अथ सिद्धभैरवमन्त्रः —

शङ्कर ऋषिः । संकृतिः छन्दः । सिद्धभैरवो देवता । भं बीजम् । श्रीं शक्तिः । मोहने । भां ह्रां इत्यादिना करन्यासः । तेनैव षडङ्गं च ।

जलदपटलनीलं दीप्यमानोर्ध्वकेशं
त्रिशिखडमरुहस्तं चन्द्ररेखावतंसम् ।

विमलशूपनिरुद्धं चित्रशार्दूलवासं
विजयमनिशमीडे विक्रमोद्दण्डचण्डम् ॥

ओं नमो भगवते विजयभैरवाय प्रळयान्तकाय महाभैरव्यै(महाभैरवीपतये) महाभैरवाय सर्वविघ्ननिवारणाय शक्तिधराय चक्रपाणये वटमूलसन्निषण्णाय अखिलगणनायकाय आपदुद्धारणाय आकर्षयाकर्षय आवेशयावेशय मोहय मोहय भ्रामय भ्रामय भावय भापय शीघ्रं भापय ह्रूं ह्रीं त्रिपुरताण्डवाय अष्टभैरवाय* स्वाहा ॥

शान्तं त्रिमुखमालिख्य तेन संवेष्ट्य सर्वतः ।
अथो शूलं लिपार्श्वे च यन्त्रं विजयमद्भुतम् ॥

एतद्यन्त्रं लिखित्वा तन्मन्त्रेणानेन मन्त्र्य तत् ।
भस्मदर्शनमात्रेण क्षणादावेशमाप्नुयात् ॥

त्रिबिन्दुयुक्तं पकारं विलिख्य, अन्त्यबिन्दुरेखाग्रेण परितस्संवेष्ट्य. तस्य पार्श्वे शूलद्वयं विलिखेत् । एतद्यन्त्रं भस्मनि विलिख्य भैरवमन्त्रं जप्त्वा तद्भस्म क्षिपेत् । आवेशो भवति ॥

अथ वाडवानलमन्त्रः —

भास्कर ऋषिः । मति (अति) छन्दः । वाडवानलो देवता । रं बीजम् । स्वाहा शक्तिः । अभीष्टसिद्ध्यर्थे विनियोगः । रां इत्यादिना करन्यासः । तेनैव षडङ्गं च । ध्यानम् —

त्रिनयनमरुणं त्वां बद्धमौळिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालंकृताङ्गं कृशानुम् ॥

---

* भापय भापय स्वाहा इति ख, ग, ङ मातृकापाठः ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः । इति मन्त्रः ॥

पश्चाष्टकोणेषु यथाक्रमेण वैश्वानरं मन्त्रमथो लिखित्वा ।
रेखाग्रशूलं च तदग्रसाध्यं ताराघृतं वाडववह्निचक्रम् ॥

एतद्यन्त्रं समालिख्य लोहे ताम्रेथ सीसके ।
आवाह्य पूजयेद्वह्निमाग्नेयादि(भि)मुखोग्निके ॥

पश्चाष्टकोष्ठं चत्वारिंशत्कोष्ठम् । त्वमग्ने द्युभिरित्यादिवर्णचत्वारिंशं क्रमेण विलिखेत् ॥ शत्रुवसन् संहराग्ने [1]त्वं तद्देहं दह सत्वरं फट् स्वाहा ॥ इति मन्त्रः ॥

[2]अनेनैतद्यन्त्रं तु सपल्लवं जपेन्नूनमष्टोत्तरसहस्रकम् ।
तत्क्षणाद्वैरिवेश्मानि निर्दग्धानि भवन्ति हि ॥

मन्त्रान्ते हुंफडादितत्तत्क्रियोचितपदयोजनं पल्लव इत्युच्यते ।

तत्पश्चादुपसंहारः कर्तव्यश्च वरानने ।

तदर्थं मन्त्रः । सविता ऋषिः । अत्यष्टिः छन्दः । अग्निर्देवता । रं बीजम् । स्वाहा शक्तिः । उपसंहारे विनियोगः । मन्त्रस्य पादैः पूर्वोत्तरार्धैश्च करन्यासाङ्गन्यासानि कुर्यात् ॥ ध्यानम् —

सशराय सशार्ङ्गाय शक्तिहस्ताय वह्नये ।
कलापिने नमस्तुभ्यं मत्पापं दह मुञ्च तम् ॥

ओं भूर्भुवःस्वः ।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।

---

१ त्वं तद्देहं दह इति ख, ग, ङ, मातृकापाठः ।

२ सपल्लवं मन्त्रमेनं जपेदष्टसहस्रकम् । इति युक्तः पाठः ।

अर्कस्त्रिधातु रंजसो विमानो जस्रो घर्मो हविरसि नाम ॥

भूर्भुवस्स्वरों मत्पापं दह मुञ्च तं स्वाहा ॥

जस्वेत्यष्टोत्तरशतं ब्राह्मणान् भोजयेत्ततः ।

अथाग्नेयास्त्रमन्त्रः —

परब्रह्म ऋषिः । देवीगायत्री छन्दः । वडवामुखाग्निर्देवता । ओं बीजम् । व्याहृतिश्शक्तिः । इष्टसिद्ध्यर्थे विनियोगः । प्रणवपूर्विकाभिरनुलोमविलोमिताभिः पादशो गायत्रीभिः करन्यासाङ्गन्यासौ ॥ ध्यानम्—

बाणाग्रकोणस्थितमेधमानं परान्दहन्तं स्वमरीचिकोणैः ।
शोणाम्बरं चन्द्रकलावतंसं नमामि देवं वडवामुखाग्निम् ॥

शोचिष्केशाय विद्महे वैश्वानराय धीमहि ।
तन्नश्शुक्रः प्रचोदयात् ॥ इति मन्त्रः ॥

त्रिकोणे वह्निबीजं च वसुकोणेऽस्त्रमन्त्रकम् ।
पदशो बाह्यके साध्यं प्राणमावाह्य पावकम् ॥

मनसा तरसा साध्यं पश्चादस्त्रमनुं जपेत् ।

वसुकोणमष्टकोणम् ॥

अथ व्याधिमन्त्रः —

वीरभद्र ऋषिः । अनुष्टुप् छन्दः । शिवो देवता । व्यां बीजम् । हुं शक्तिः । व्यामित्यादिना करन्यासः । तेनैव षडङ्गं च ॥ ध्यानम्—

त्रिपादं त्रिभुजं भीमं त्रिमूर्धानं त्रिलोचनम् ।
त्रिशूलाहिकपालाढ्यं ज्वालास्यं वक्रदंष्ट्रकम् ॥

सप्तशृङ्गं* वसामालं श्वचर्माम्बरधारिणम् ।

* वसायाः मालाकारत्वमनुपपन्नम् । अतः वसायुक्त आन्त्रादिमालायुक्तमिति वा भावो बोध्यः ।

अशेपाङ्गव्रणोद्भूतक्रिमिजालसमाकुलम् ॥

वक्रनासं बृहत्स्कन्धं क्षुधया पीडितोदरम् ।
वैरिणां देहमालिङ्ग्य भक्षयन्तं विकीर्णकम् ॥

कलायकुसुमानीलं महाव्याधिकरं शिवम् ।
चिरं ध्यात्वा जपेन्मन्त्रं सहस्रं रिपुदिङ्मुखः ॥

ओं नमो भगवते रुद्राय महाव्याधिकराय देवदत्तं पीडय हुंफट् स्वाहा इति मन्त्रः ॥

तिर्यगूर्ध्वचतुर्दशरेखा मध्यतो विलिखेदथ मन्त्रम् ।
बाह्यशूलतदग्रकसाध्यं रोगचक्रमिदं रिपुनाशम् ॥

यन्त्रमालिख्य सीसे वा साध्यवृक्षेथवाम्बिके ।
आराध्य चाष्टचूर्णेन लिख्या जप्त्वा खनेन्निशि ॥

श्मशाने वलिपूर्वं तु पुनस्स्नात्वा जपेत्तथा ।
जपमेवं त्र्यहं कुर्याच्छत्रूणां रोगवृद्धये ।
अहेतुकं महारोगं रिपुस्संप्राप्य नश्यति ॥

यत्साध्यं लिखितं व्याधेस्तत्तद्व्याधिर्भविष्यति ।
तद्रोगं रिपुराश्रित्य सुभगे मा भवेध्रुवम् ॥

अयमर्थः— तिर्यगूर्ध्वं चतुर्दशरेखा विलिख्य, सर्वतो मध्यकोष्ठे मन्त्रं विलिख्य, रेखाग्रेषु शूलानि विलिखेत् ॥

अथ मृत्युमन्त्रः—

नारायण ऋषिः । उष्णिक् छन्दः । मृत्युर्देवता । ङं बीजम् । ह्रैं शक्तिः । जीवसंहारे० । ङां इत्यादिना करन्यासः । तेनैव षडङ्गं च ।

रक्तास्यं भीमदंष्ट्रं प्रकटितवदनं वक्रनासं कराब्जैः
शूलं पाशं कपालं फणिमुसलहलं वज्रखेटं वहन्तम् ।

भीमं कालाभ्रनीलं भ्रुकुटितनयनं सैरिभस्कन्धरूढं
नानाभूतैः करालैः परिवृतमखिलप्राणकालं भजामि ॥

ओं नमो भगवते मृत्यवे यमाय सर्वजीवहरणाय उग्राय दण्डहस्ताय [1]ङैं हैं देवदत्तं गृह्ण गृह्ण सर्वलोकभयङ्कराय नाशय नाशय हैं हुं फट् स्वाहा ॥

य इमं कालमन्त्रस्य निशामध्येऽयुतं पुनः ।
जप्त्वा ततो जपेन्मन्त्रं सहस्रं नामपूर्वकम् ॥

तज्जपस्यावसाने तु स रिपुर्मरणं लभेत् ।

अथ रक्तचामुण्डीमन्त्रः —

शङ्कर ऋषिः । अनुष्टुप् छन्दः । रक्तचामुण्डी देवता । श्रीं बीजम् । ह्रीं शक्तिः । अभीष्टार्थे० । श्रीं हृत् । ह्रीं शिरः । श्रीं शिखा । ह्रीं कवचम् । इत्यादि षडङ्गम्, तेनैव करन्यासश्च ॥ ध्यानम् —

रक्ताभां पीतवस्त्रां स्मितमुखकमलामिन्दुरेखावतंसां
दिव्यैर्माणिक्यमुक्तामणिगणखचितैर्भूषणैर्दीप्यमानाम् ।
पुण्ड्रेक्ष्विष्वासबाणारिजलजसुभुजां फुल्लपद्मायताक्षीं
चामुण्डीं स्रङ्नृमुण्डीं रिपुकुलमथनां शाङ्करीं भावयामि ॥

श्रीं ह्रीं फट् रक्तचामुण्डेश्वरी(रि)शत्रुजीवित[2]नाशनी(नि) एह्येहि शीघ्रमिष्टानाकर्षयाकर्षय स्वाहा । इति मन्त्रः । अक्षरसहस्रजपः ॥

अथ मोहिनीमन्त्रः —

ईशान ऋषिः । जगती छन्दः । मोहिनी देवता । ऐं बीजम् । ह्रीं शक्तिः । क्लीं कीलकम् । मोहने० ॥ ऐं ह्रां हृत् । ऐं ह्रीं शिरः । इत्याद्यङ्गानि करन्यासश्च ॥ ध्यानम् —

---

१ ङं हैं इति ख, ग, ट पाठः । २ नाशनि इति ख, ग, ड, पाठः ।

भुवनविजयदक्षा पुष्पबाणेक्षुचापा
जगति विविधरूपं दर्शयन्ती जनानाम् ।
तरुणतरणिशोभा श्वेतवासो वसाना
जयति निखिललोकान् जावनी मोहिनीयम् ॥

ऐं ह्रीं क्लीं ओं नमो भगवति महामोहिनि महामाये सर्वलोकवशंकरि देवदत्तस्य वाक्चक्षुश्चित्तं मोहय मोहय नानारूपाकृतीः शीघ्रं दर्शय दर्शय ह्रीं स्वाहा ॥ पञ्चसहस्रं जपः ॥

पञ्चकोणं लिखेच्छक्तिं मध्ये बीजेन वेष्टयेत् ।
पञ्चकोणे लिखेच्छक्तिं बाह्ये साध्यसमन्वितम् ॥

देवदत्तमुखे यन्त्रं दर्शयन्प्रजपेन्मनुम् ।
जङ्गमाजङ्गमानां च देवभूतादिरक्षमाम् ॥

पुरतो विविधं रूपं दर्शनं विस्मयं भवेत् ।

अथ लक्ष्मीमन्त्रः—

वामेश ऋषिः । बृहती छन्दः । श्रीर्देवता । श्रां हृत् । श्रीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम्—

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैस्स्नापिता हेमकुम्भैः
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥

ओं श्रीं क्लीं महालक्ष्मि महालक्ष्मि एह्येहि सर्वसौभाग्यं मे देहि स्वाहा । चतुर्विंशतिसहस्रजपः ॥

त्रिकोणेषु त्रिबीजं स्याद्वसुकोणे परं लिखेत् ।
त्रयोदशदळे शेषं बाह्य पञ्चाशदर्णकम् ॥

लक्ष्मीबीजावृतं यन्त्रं सर्वसौभाग्यदायकम् ।

चतुष्कोणमष्टकोणम् । पञ्चाशदर्णं मातृका ।

अथ मायामन्त्रः —

मङ्कण ऋषिः । उष्णिक् छन्दः । माया देवता । ह्रीं बीजम् । ह्रीं शक्तिः । मायाकरणे०(विनियोगः ।) ह्रीं हृत् । ह्रीं शिरः । इत्याद्यङ्गानि । ध्यानम् —

मायापटेन जगतां विवशं च मोहं
मायाकुतूहलमनोरथमाकरोति ।
नारायणप्रियतमा सुतमालनीला
शूलायुधा विजयते तुरगाधिरूढा ॥

ह्रीं महामाये जगन्मोहिनि सर्वजनवाङ्मनःकायचक्षुश्श्रोत्रघ्राणप्राणान् मोहय मोहय स्वेच्छाकुतूहलं शीघ्र दर्शय दर्शय ह्रीं स्वाहा ॥ पञ्चाशत्सहस्रजपः ॥

दर्शनादर्शनं चैव तथा दर्शनदर्शनम् ।
मन्त्रस्मरणमात्रेण भवेदेव न संशयः ॥

अथ पुलिन्दिनीमन्त्रः —

शङ्कर ऋषिः । जगती छन्दः । पुलिन्दिनी देवता । ई बीजम् । स्वाहा शक्तिः । प्रसादे० । ई इत्यनेन करन्यासः । तेनैव षडङ्गं च ।

बर्हापीडकलापाभिरामचिकुरां बिम्बोज्ज्वलचन्द्रिकां
गुञ्जाहारलतांशुजालविलसद्ग्रीवामधीरेक्षणाम् ।
माकन्दद्रुमपल्लवारुणपदामर्धेन्दुबिम्बाननां
देवीं दिव्यमयीं प्रसन्नहृदयां ध्यायेत्किरातादृताम् ॥

ई ओं नमो भगवति [1]श्रीं शारदादेवि अत्यन्तातुलभोज्यं देहि देहि एह्यागच्छागच्छ गन्तुकं हृदिस्थं कार्यं सत्यं ब्रूहि सत्यं ब्रूहि पुलिन्दिनि ई [2]स्वाहा ५४ पञ्चाशत् शतमात्रं जपः ॥

कार्याकार्यविवेकाभ्यां (थं) नित्यमष्टोत्तरं शतम् ।
जप्त्वा शयीत यस्तस्य स्वप्ने वदति साम्बिका ॥

साधकस्तद्वचः श्रुत्वा तथैवान्वहमाचरेत् ।
तस्य नास्ति भयं क्वापि सार्वकालं सुखी भवेत् ॥

अथ शास्तृमन्त्रः —

अर्धनारीश्वर ऋषिः । अनुष्टुप् छन्दः । महाशास्ता देवता । ह्रीं बीजम् । श्रीं शक्तिः । इष्टसिद्ध्यर्थे० । मन्त्रपदैः षडङ्गानि ॥

आश्यामकोमलविशालतनुं विचित्रवासोवसानमरुणोत्पलदानहस्तम् ।
उत्तुङ्गरत्नमकुटं कुटिलाग्रकेशं शास्तारमिष्टवरदं शरणं प्रपद्ये ॥

ह्रीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशाय मदगजवाहनाय महाशास्त्राय, (शास्त्रे) नमः ॥ त्रयस्त्रिंशत्सहस्रजपः ॥

अथ संक्षोभणमन्त्रः —

अगस्त्य ऋषिः । पङ्क्तिः छन्दः । संक्षोभिणी देवता । क्षं बीजम् । ह्रीं शक्तिः । क्षां इत्यादिना षडङ्गम् ॥

पर्वा पञ्चमुखारूढा परिघासिकराम्बुजा ।
सर्वारिहृदयक्षोभकारिणी पातु सर्वदा ॥

---

१. श्रीशारदादेवि इति घ मातृका पाठः ।

२. ई ओं नमो भगवति श्रीशारदा देहि अत्यन्तातुलभोज्यं देहि देहि एह्येह्या-गच्छागच्छागन्तुकं कार्यं सत्यं ब्रूहि ब्रूहि पुलिन्दिनि ई स्वाहा । इति पञ्चाशदर्णः प्रसिद्धः ।

क्षां ओं नमो भगवति अपवादहरे महाक्रूरे सर्वशत्रुविमर्दिनि देवदत्तमनःक्षोभं कुरु कुरु स्वाहा ॥ अक्षरसहस्रजपः ॥

मन्त्रावसानके वैरिनामभिश्रितपल्लवम् ।
सहस्रं प्रजपेन्मन्त्री भ्रष्टचित्तो भवेद्रिपुः ॥

शताभिमन्त्रितं भस्म निखनेदष्टदिक्षु सः ।
भवनं परितो मन्त्री रक्षणाय स्वकीयकम् ॥

शत्रुतस्करपीडा च जन्तुभूतादिपीडनम् ।
स्वप्नकालेपि नैवास्य वरेण्ये नात्र संशयः ॥

तत्र पल्लवं मन्त्रान्ते हुं फडादि तत्तत्क्रियोचितपदयोजनम् ॥ वैरिनामभिश्रितमिति मच्छत्रुमनःक्षोभं कुर्वित्यर्थः ॥

अथ धूमावतीमन्त्रः —

नृसिंह ऋषिः । पङ्क्तिः छन्दः । ज्येष्ठादेवी देवता । धूं बीजम् । स्वाहा शक्तिः । निग्रहे० । धूं इत्यादिना षडङ्गम् ॥

ध्यायेत्काळाभ्रनीलां विचलितरदनां काकनासाक्षिकण्ठां
संमार्जन्युल्कशूर्पैर्युतमुसलकरां वक्रदन्तां त्रिपास्याम् ।
ज्येष्ठां निर्वाणवेषां भ्रुकुटितनयनां मुक्तकेशामुदारां
शुष्कोत्तुङ्गातितिर्यक्स्तनभरयुगळां निष्कृपां शत्रुहन्त्रीम् ॥

धूं धूमावती(ति) स्वाहा । सप्तसहस्रजपः ॥

ऋतुकोणस्थवृत्तान्तः बीजं कोणे मनुं लिखेत् ।
कोणाग्रशूलके साध्यं ज्येष्ठायन्त्रमिहोच्यते ॥

संपूज्य विधिवद्यन्त्रं जपित्वा तु सहस्रकम् ।
श्मशाने तु निशामध्ये निखनेत् बलिपूर्वकम् ॥

रिपुगेहेऽधरा कुर्यात्खननं बलिवर्जितम् ।
भूयो जपेत्त्रिरात्रं तु तत्कालोचितदिङ्मुखः ॥

स्तम्भनोच्चाटने चैव निग्रहे चित्तविभ्रमे ।
सम्रक्षणे च विद्वेषे प्रकुर्यात्सावधानतः ।
अनात्माभिमुखीं ध्यात्वा गच्छन्तीं वैरिणं प्रति ॥

यो जपेन्निशि साहस्रं तस्य शत्रुर्विनश्यति ।
ताडयन्तीं महावेगं शूर्पेण रिपुवक्षसि ॥

ध्यात्वा जपेत्सहस्रं तु नष्टचित्तो भवेद्रिपुः ।
मार्जयन्तीं क्षणात् शत्रोः धनधान्यादिकं चिरम् ॥

ध्यात्वाष्टोत्तरसहस्रं जपेद्भाग्यक्षयाय च ।
दीप्यमानोल्ककेनैव दहन्तीं चापि वैरिणम् ॥

ध्यात्वा जपेत्तथा मन्त्रं स्तम्भनायाम्बिके बुधः ।
त्रिकोणं विलिखेत्पूर्वं तन्मध्ये बीजमालिखेत् ॥

कोणाग्रे तु लिखेच्छूलं तच्छूलान्तर्लिखेन्मनुम् ।
तदग्रे विलिखेत्साध्यं ज्येष्ठायन्त्रं वरानने ॥

संपूज्य विधिवद्यन्त्रं निशामध्ये श्मशानके ।
बलिपूर्वं खनित्वा तु पुनः स्नात्वा जपेन्मनुम् ॥

अष्टोत्तराष्टसाहस्रं दृढचित्तोऽरिदिङ्मुखः ।
वैरिणः तत्क्षणादेव यान्ति वैवस्वतं पुरम् ॥

विद्वेषणे तथा देवि जपेदेकाग्रमानसः ।
अन्योन्यकलहं क्षिप्रं शत्रूणां जायते ध्रुवम् ॥

विलोमेन जपेनैव निवृत्तिस्स्यात्सहस्रशः ।

नान्यमन्त्रैः निवृत्तिः स्यात्प्रयत्नेपि कृतेम्बिके ॥

अथ प्रसङ्गात् कल्पान्तरोक्तो धूमावतीमन्त्रोप्यत्र लिख्यते—

क्षपण ऋषिः । आगच्छन्दः । श्मशानगामिनी देवता । यं बीजम् । रं शक्तिः । मारणोचाटविद्वेषणार्थे विनियोगः । यां इत्यादिना षडङ्गम् ॥

द्विभुजां कृष्णवर्णां च त्रिनेत्रां सर्पभूषणाम् ।
कपालशूलं दधतीं चिन्तयेच्चितिवासिनीम् ॥

ओं यं रीं धू धूमावती(ति)ओरुच्चुडले गिरि गिरि अर्पल् अर्पल् वित्तर-कोण्डेन् कल्ळन् नरम्बिनुळ्ळे अरण्डु अरण्डु इरुन्दु इरुन्दु *कडुघ कडुघ गिरिग गिरिगप्पोह स्वाहा । इति मन्त्रः । अयुतं जपेत् । सर्षपमिश्रित-चरुणा दशांश होमः । अथ प्रयोगा वक्ष्यन्ते—

प्रेतवासिस शत्रोराकृतिं विलिख्य धूमे अग्निधूमे स्वाहा, पादधूमे कालधूमे स्वाहा, हस्तयोर्धूमे स्वाहा, अन्तर्धूमे स्वाहा, नेत्रधूमे स्वाहा, मृत्युधूमे स्वाहा, श्रवणधूमे स्वाहा, अक्षिधूमे स्वाहा, नासिकाधूमे स्वाहा यमधूमे स्वाहा, लिङ्गधूमे स्वाहा, ज्वालाधूमे स्वाहा, धूमे धूमावती स्वाहा ॥

एतान्मन्त्रान् हृदये विलिख्य तीक्ष्णाग्रैः कण्टकैः पुनः ।
वेधयेल्लेपयेदष्टविषैः पश्चात्तु तापयेत् ॥

संस्थाप्याथ च वल्मीके निखनेच्छत्रुमारणम् ।
भवेन्मण्डलतः पूर्वमुद्धृते मोक्ष एव हि ॥

तीक्ष्णकण्टक — काण्टे कोळसा ।

* कुटक कुटक इति ङ पाठ ।

ग्रहधूमवह्निस्वरणलवणोपणहेमवारिभिर्मिळितैः ।
विषमतिभीषणमुक्तमहिताहितनिग्रहेषु हितम् ॥

अस्यार्थः — गृहधूम – ஒட்டடை घरवेसा । वह्नि – कोडिवेलि । लवण – मीठ - உப்பு ऊषणं - शुण्ठी, मिरे, पिप्पल्या - சுக்கு மிளகு திப்பிலி हेमवारि — सोनधोत्र्यें रस — பொன்னூமத்தை இலைச்சாறு. एतानि विषसंज्ञानि । यन्त्रम् —

सीसपट्टे लिखेद्यन्त्रं चतुष्षष्टिपदं ततः ।
चतुष्कोणेषु हुं शेषान्मन्त्रेणानेन पूरयेत् ॥

शूलाङ्कितं महायन्त्रं विषेण तु विलेपयेत् ।
कारस्करमये पत्रे निधाय निशि साधकः ॥

श्मशाने निखनेद्यन्त्रं शत्रूणां कुलनाशनम् ।

प्रयोगान्तरम् —

कारस्करस्य पत्रेष्वष्टविषेणैव चोररूपं हि ।
कृत्वा तु मन्त्रमेनं विलिखेद्गात्रेषु काकपक्षेण ॥

कारस्करं तु रूपं कृत्वा हृदि निक्षिपेच्च यन्त्रमिदम् ।
पश्चाद्भूमौ निखनेत्तदुपर्यथ वह्निमाशु संपूज्य ॥

कारस्करस्य समिधां जुहुयात्सम्यक् त्रिसाहस्रम् ।
भूयाच्छत्रुविनाशस्तेन तथा चोद्धृते मोक्षः ॥

यन्त्रान्तरम् —

चतुष्पथाच्च वल्मीकात् कुम्भकाराच्च मृत्तिकाम् ।
निर्गुण्डीं च तथा चाष्टविषमादाय बुद्धिमान् ॥

कनकस्य रसे सम्यक् पेषयेच्छवकर्पटे ।
यन्त्रं विरचयेन्मन्त्री त्रिकोणं मध्यतस्सुधीः ॥

तद्बहिर्द्वादशदळं बहिर्वायुपुरत्रयम् ।
तद्बहिश्चतुरश्रं स्याद(चाप्य)ष्टशूलान्समालिखेत् ।
त्रिकोणे च लिखेच्चोरमारणं कुरु कुर्विति ॥

स्वाहान्तं षट्सु कोणेषु तथा धूमावतीं द्विठाम् ।
दळद्वादशके मूलमन्त्रार्णान् शरसंख्यया ॥

विभज्य विलिखेद्भूयो वायुगेहे हुताशनम् ।
चतुष्कोणेषु हुंकारं शूलरन्ध्रे फडित्यपि ॥

लिखित्वैवं यन्त्रमिदं मन्त्रं जप्त्वा सहस्रकम् ।
कुजवारे तु मन्दांशे श्मशाने निखनेत्सुधीः ॥

चोराणां मारणं चाशु भवेन्मोक्षस्तदुध्दृतौ ।

वायुपुरत्रयं षट्कोणत्रयम् । कनक-सोनधोत्रा । பொன்னூமத்தை निर्गुण्डी-निर्गुडी-நொச்சில் द्विठान्तं-स्वाहान्तम् ।

प्रयोगान्तरम् —

कारस्करमयं कीलं सप्तांगुलमनुत्तमम् ।
अयुतं साधितं कृत्वा शत्रुनामविदर्भितम् ॥

शत्रूणां गृहमध्ये तु निखनेद्गुळिकोदये ।
उच्चाटनं भवेत्तेषां कुलं चैव विनश्यति ॥

प्रयोगान्तरम् —

सप्तांगुलमितं कीलमुन्मत्तस्य तु साधयेत् ।
अष्टोत्तरसहस्रं तु शत्रुनाम विदर्भितम् ॥

शत्रूणां दक्षिणे पादे खनेन्मत्तो भविष्यति ।

[1]स्वातीनामर्जुनं कीलं स्वसप्तांगुलमानतः ॥

अष्टोत्तरशतं जप्त्वा शत्रोः पध्दूळिमिश्रितम् ।
श्मशाने निखनेच्छत्तोरष्टमे राशिके यदि ॥

मासेन मृत्युस्तस्य स्याद्यदि नोध्द्रियते ततः ।
वैकङ्कतं विशाखायां कीलकं तु दशांगुलम् ॥

दशाभिमन्त्रितं कृत्वा शत्रुमूत्रे खनेद्यदि ।
मूत्रस्तम्भो भवेत्तद्वन्नास्ति नास्ति प्रतिक्रिया ॥

अथ नदीतरणयन्त्रम्—

भूपुरद्वन्द्वमालिख्य मध्ये पार्थिवमक्षरम् ।
चतुष्कोणे तु लंकारमष्टदिक्षु ठमालिखेत् ॥

परितो वायुबीजं च नैरन्तर्यं तु संमुखम् ।
प्रतिष्ठाप्यानिलं यन्त्रे तोयसन्तरणे बुधः ॥

कृत्वा यन्त्रं जले देवि तत्परं निम्नगां तरेत् ।
यन्त्रोपरि स्वयं स्थित्वा देवदत्तं प्रकल्प्य वा ॥

चतुष्कोणे तु लंकारमष्टदिक्षु ठमालिखेव ।
त्रिवारं मनसा मन्त्रं जपेदेकाग्रमानसः ।
निम्नगां तरसा तीर्त्वा सुखं गच्छति मानवः ॥

अस्यार्थः—प्रथममष्टकोणं मध्ये लंकारं, बहिश्चतुष्कोणे लंकारं, अष्टकोणे ठंकारं, ओं नमः शरभसाळुवपक्षिराजाय सर्वभूतमयाय सर्वभूर्तये रक्ष रक्ष शीघ्रं तारय तारय ओं श्रीं ह्रीं [2] लं क्षं लं टं लं यं प्रतरणाय स्वाहा,

१. स्वातिमे त्वर्जुनं इति शोधिते सुगमार्थः स्यादिति भाति ।

२. ह्रींकार क्षंकारयोर्मध्ये लंकारो न दृश्यते ङ मातृकायाम् ।

ओं नमो भगवते महाशरभसाल्वपक्षिराजाय वरवरद अष्टमूर्तये अखिलमयाय पालय पालय भक्तवत्सलाय प्रणतार्तिविनाशनाय उत्तारयोत्तारय शीघ्रमुत्तारय श्रां ह्रूं ओं हां देवदेवाय उत्तारणाय स्वाहा ॥

पञ्चवारं जपेनैव साल्वेशो जगन्मयः ।
तस्य हस्तं समुद्गृह्य तत्क्षणादुद्धरेज्जलात् ॥

अथ चित्रविद्यामन्त्रः —

संवर्तक ऋषिः । शक्वरी छन्दः । चित्रविद्या देवता । ठं बीजम् । [1]छूं शक्तिः । इष्टसिद्ध्यर्थे० । बीजशक्तिभ्यां करन्यासः । मन्त्रपादैः षडङ्गानि ॥

अमलकमलमध्ये चन्द्रपीठे निषण्णा-
मम्मृतकलशदानाभीतिमुद्राग्रहस्ताम् ।
प्रणतशिरसि पूरं संस्रवन्ती सुधायाः
शरणमहमुपैमि श्रीशिवां चित्रविद्याम् ॥

[2]वं सं झं झं युं जुं ठं ह्रीं श्रीं ओं भगवति चित्रविद्ये महामाये अमृतेश्वरि एह्येहि [3]वरदे वरदे प्रसन्नवदने अमृतं प्लावय प्लावय अनलं शीतलं कुरु कुरु सर्वविषं नाशय नाशय सर्वतापज्वरं हन हन सर्वपैत्योन्मादं मोचय मोचय आज्योष्णं शमय शमय सर्वजनं मोहय मोहय मां पालय पालय श्रीं ह्रीं ठं जुं झं झं सं वं स्वाहा ॥

अयुतं सहस्रं वा जपेत् ॥

वृत्तमालिख्य तन्मध्ये बीजपट्कं लिखेत्ततः ।

---

१. झं इति ख, ग, घ, ङ मातृकापाठः ।

२. वं सं झं झं जुं ठं इति ख ङ मातृकापाठः ।

३. वरे वरदे इति ख-ङ मातृकापाठः ।

मायया[1] च श्रियावेष्टय मनसा साध्यमूर्धनि ॥

तत्सुधासेचितं ध्यात्वा देशिकं मूर्ध्नि चिन्तयन् ।
विशेत् स्पृशेत् हरेत् सेचेत् चित्रविद्यामनुस्मरन् ॥

कारयेद्वाऽखिलं चान्यैः पैत्योन्मादे तु सुन्दरि ।
वृत्तद्वयं समालिख्य बहिश्शूलाष्टकं लिखेत् ॥

वृत्तमध्येऽष्टबीजं च मन्त्रं तस्यान्तराळके ।
शूलाग्रे विलिखेत्साध्यमष्टबीजद्वयं तथा ॥

स्पृशन्मन्त्री द्विधा जप्त्वा वाहनाद्युपचारकान् ।
कृत्वा तच्छतवारं तु मन्त्री मश्चित्रविद्यया ॥

तत्पत्रं गुळमध्यस्थं खादयित्वा प्रवेशयेत् ।
पुष्पवत्सुधरेज्जन्तुं प्रविष्टं हव्यवाहनः ॥

अष्टबीजद्वयं प्रतिलोमानुलोमितम् ।
अष्टबीजानि तु मन्त्रादावुक्तानि ॥

अथ सुब्रह्मण्यमन्त्र. —

काश्यप ऋषिः । त्रिष्टुप् छन्दः । सुब्रह्मण्यो देवता । सं बीजम् । सां शक्तिः । सां सुब्रह्मण्याय स्वाहा हृत् । सीं इत्यादि मूलसहितैरङ्गन्यासः ॥

शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननम् ।
दारुणं रिपुरोगघ्नं भावयेत्कुक्कुटध्वजम् ॥

सुं सुब्रह्मण्याय स्वाहा । त्रिसहस्रजपः ॥

अथ शरभमन्त्रप्रसङ्गात् वीरभद्रमन्त्रोपि मन्त्रसारोक्तोत्र योग्यतावशात् लिख्यते —

---

१. चित्रया इति ङ पाठः ।

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । वीरभद्रो देवता ॥ ओं ह्रौं वीरभद्राय हृत् । अतिक्रूराय शिरः । रुद्रकोपसंभवाय शिखा । सर्वदुष्टकवचम् । निबर्हणाय नेत्रम् । हुंफट् स्वाहा अस्त्रम् ॥

गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं
शूलं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्माम्बराढ्यम् ।
वेतालारूढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं
ध्यायेद्भोगीन्द्रभूषं निजगणसहितं सन्ततं वीरभद्रम् ॥

ओं ह्रौं वीरभद्रायातिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुंफट् स्वाहा ॥ इति द्वात्रिंशदक्षरो मन्त्रः । रक्षाप्रधानोयं मन्त्रः । द्वादशलक्षजपः ॥ रक्तहयारिपुष्पैर्वा (त्रि)मधुरसिक्तैः *कमलैर्वा दशांशं पुरश्चरणाहोमः ॥ हयारिपुष्पम्—அரளிப்பூ करवीरम् ॥

अथ पूजा—

प्राक् प्रासादविधानोक्तशैवपीठे समावाह्य समर्चयेत् । तत्पुरुषाय नमः । अघोराय नमः । सद्योजाताय नमः । वामदेवाय नमः । ईशानाय नमः ॥ इति प्राक् दक्षिणोत्तरपश्चिमदिक्षु ईशानमैशान्ये समर्चयेत् ॥

निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० शान्त्यतीतायै० इति तच्छक्तयः आग्नेयादिकोणेषु, शान्त्यतीतामैशान्ये समर्चयेत् । एवं प्रथमावृतिः । अङ्गैर्द्वितीया । परशवे० डमरुकाय० खड्गाय० खेटाय० कपालाय० शूलाय० अभयाय० वरदाय ८ इति तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी । वज्रादिभिः पञ्चमी ॥

अथ प्रयोगः—

* सितैः कमलैर्वा इति ङ पाठः ।

संपूज्य देवदेवं जुहुयादिध्मैश्च पञ्चगव्याक्तैः ।
खरमञ्जरीसमुत्थैस्त्रिशतं कृत्यादिशान्तये रात्रौ ॥

खरमञ्जरी — आघाडा - நாயுருவி.

प्रयोगान्तरम् —

अमुं वीरभद्रं हरिद्राभमुग्रं गदामुष्टिहस्तं करालाट्टहासम ।
समावाह्य वह्नौ रिपुस्तम्भनार्थं हरिद्रारजोभिः सहस्रं जुहोतु ॥

हरिद्रा–हळखुण्ड ॥

प्रयोगान्तरम् —

भुजङ्गगणभूषणं भुजगतत्रिशूलाहत-
स्वशत्रुरुधिरोक्षितं भयदफालनेत्राननम् ।
दिगम्बरमनुस्मरन् जपतु वीरभद्रं मनुं
निशीथसमये शतं शितमतिर्निहन्तुं रिपुम् ॥

अथ वीरभद्रबलिप्रकारः —

अतः परं प्रवक्ष्यते मनोरमुष्य संग्रहात्
बलिक्रमो विधानतो हिताय मन्त्रजापिनाम् ॥

कृत्वा गोमयसलिलैः स्थण्डिलमस्मिन्विलिख्य यन्त्रवरम् ।
वीरेश्वरस्य भूयो रजोभिरापूरयेत् क्रमान्मन्त्री ॥

पीतेन मध्यमरुणेन च कोणषट्कं
श्यामेन सन्धिमरुणेन दळाष्टकं च ।
कृष्णेन सन्धिमसितेन च गेहरन्ध्रं
सीमास्सितेन सकलाः परिपूर्य पश्चात् ॥

अस्यार्थः — अत्र यन्त्रलेखनप्रकारोपि पीतेन मध्यमरुणेन च कोण-

पद्कमित्यादिना अर्थादुक्तः । तत्र कर्णिकास्थानेषु मन्त्रवर्णानेकैकं दळेषु त्रिशः । तत्र पीतादिद्रव्याणि प्राक् एकविंशपटले सुदर्शनविधाने प्रोक्तानि ॥ पुनः,

बलिमण्डलमस्य च दक्षिणतः प्रविधाय चतुर्युतषष्टिपदं ।
सितपाटलपीवरजोभिरथो परिपूर्य च ह्रामिति तत्र लिखेत् ॥

तत्र सितादिद्रव्यं खण्डक्रमेणेत्यर्थः ॥

अस्योत्तरे पङ्कजमष्टपत्रं विलिख्य तद्वत्परितोऽष्टदिक्षु ।
पद्मानि शालीः प्रणिधाय तेषु पीठाष्टकं तत्र निधाय तस्मिन् ॥

अरुणांशुकतण्डुलाहिपत्नक्रमुकाऽसिप्रभृतीर्निधाय भूयः ।
विधिना चरमामुपास्य सन्ध्यामथ संवन्द्य गुरून् गणाधिपं च ॥

अस्त्रेण तालत्रितयादि कृत्वा वाय्वादिबीजैरपि देहशुद्धिम् ।
संवन्द्य देवं परिवारयुक्तमावाह्य संपूज्य हृदम्बुजे स्वे ॥

यन्त्रोत्तरस्थपत्रे शैवं पीठं प्रपूज्य कलशमपि ।
न्यस्य च मृण्मयमस्मिन् मलयजपुष्पाक्षतानि कूर्चं च ॥

निक्षिप्य रक्ततोयैः प्रपूर्य चूतादिपल्लवान्यस्य ।
तण्डुलपुष्पोपेतान् विनिक्षिपेच्चक्रिकां तदूर्ध्वं च ॥

तत्र रक्ततोयमिति हरिद्राचूर्णप्रसिद्धचूर्णलोळिततोयमित्यर्थः । चक्रिकेति पत्रपुटस्थाक्षतम् ॥ पुनः,

रक्तांशुकेन कुम्भं संच्छाद्यावाह्य वीरभद्रमिह ।
इष्ट्वा जप्त्वा च मनुं वसुसंख्यं व्यापकं ततोऽङ्गं च ॥

कृत्वा रक्षां पश्चात् पाशुपतास्त्रेण मन्त्रवित् कुर्यात् ।
पिप्पलपत्रे रक्ताः प्रतिपदमनेन कल्पिता मुद्राः ॥

अस्यार्थः — पिप्पलोऽश्वत्थः । मुद्राः पिण्डानीत्यर्थः ॥ प्रतिपदं प्रतिकोष्ठम् ॥ पुनः,

बलिमण्डले निधाय क्रमेण संपूज्य मूलमन्त्रेण ।
पूर्वोदितेषु पीठेष्वावाह्य ततः सुरक्तपुष्पाद्यैः ॥

ईशादिपूजनीया ब्राह्मयाद्या मातरः क्रमादष्टौ ।
तदनु यन्त्रवरे विधिनाऽनलं प्रतिनिधाय परिस्तरणादिकम् ।
सकलमग्निमुखं च करोतु तत् स्वचरणोदितवन्मनुवित्तमः ॥

आहूय विप्रौ द्वौ शुद्धौ तयोरेकं नियोज्य च ।
साध्यसंरक्षणायान्यमपि नीराजनाय च ॥

ततस्सुरक्ते परिधाय वस्त्रे जलैस्समाचम्य विशुद्धदेहः ।
खड्गैः परीस्तीर्य निशातधारैः द्रव्यैरमीभिर्जुहुयात् क्रमेण ॥

तिलसर्षपपञ्चगव्यदूर्वावटदुग्धान्नमयूरकाक्षतैश्च ।

अस्यार्थः — पञ्चगव्यमिति । पञ्चगव्यं सर्वं मिळित्वा एकं द्रव्यम् । मयूरं–आघाडा ॥ पुनः,

वसुसंख्यमथो पृथक् घृताक्तैरपि पूर्णाहुतिमन्तरान्तरा च ।
मुद्राश्चतुष्षष्टिमिताः पुरोक्ताः सुधामया दीपिकया समेताः ॥

अस्यार्थः — दीपिकया समेताः, दीप्तवर्तिसमेताः इत्यर्थः ॥

नीराज्य नीराज्य हुतान्तरा ताः स्थाप्यास्तथेशादि पुरोवदेवम् ।

अस्यार्थः — एकैकद्रव्येणैकैकाहुत्यनन्तरं एकैकया मुद्रया साध्यं नीराज्य नीराज्य ईशादिकोष्ठेष्वेव संस्थापनीयाः ॥ पुनः,

प्रतिहुतमनुजपकर्ता सुमनोगन्धाक्षसंयुतं दीपम् ।

साध्यं नीराज्य ततो मूलेन विनिक्षिपेच्च रक्तोदे ॥

अस्यार्थः — एकैकद्रव्यहोमानन्तरं अनुजपकर्ता गन्धपुष्पदीपयुक्तेनान्येन पिण्डेन साध्यं नीराज्य नीराज्य मूलमन्त्रेण हरिद्राचूर्णप्रसिद्धचूर्णमिळित-रक्तोदके विनिक्षिपेत् ॥

इति मूलेनाद्यो हुत्वा परिवारव्याहृतीभिरेकैकम् ।
हुत्वा घृतेन भूयः समापयेद्धोमकर्म विशदमतिः ॥

संपूज्य भूयः परिवारयुक्तं गन्धादिदीपान्तममुं प्रसन्नम् ।
आराध्य पुष्पैः निजवाञ्छितानि संप्रार्थ्य चोद्वास्य यथोपदेशम् ॥

मातृस्समुद्वास्य शिवं च भूयः पुरो निधायान्नकृतं सुरक्तम् ।
तारेण संपूज्य सदीपिकान्तं नीराज्य कुम्भस्य मुखे निधाय ॥

अवाङ्मुखो रक्तजलैर्युतस्य दीपोज्वलेनापि च तेन मन्त्री ।
नीराज्य मूलेन पुरोवदेनं निक्षिप्य संक्षाल्य करौ जलेन ॥

गत्वा प्राङ्गणदेशे गोमयसलिलैस्समुक्षिते पश्चात् ।
कदलीकाननबुद्ध्या सदळां कदलीं निखन्य फलसहिताम् ॥

तस्या मूले पीठं निधाय चावाह्य तत्र वीरेशम् ।
संपूज्य पूर्वक्लृप्त्या त्वादाय च पुत्तलीं तथा साध्यम् ॥

तत्र अन्नेन सक्तुना वा पुत्तळीं ॥ पुनः,

नीराज्य पीठिकायां संस्थाप्य समुज्वलैस्तथा दीपैः ।
समलंकृत्य च कदलीं रक्तोदकमग्रतो निधाय ततः ॥

सुरभिसमाख्यां मुद्रां सन्दर्श्य सुधामयं विचिन्त्य जलम् ।
सन्तर्पयेत्पुरस्तादेकैकं पीठमन्त्रपरिवारैः ॥

मूलेनाष्टोर्ध्वशतं पञ्चशतं वा सहस्रसंख्यं वा ।
सन्तर्प्य सुप्रसन्नं विचिन्त्य देवं प्रपूज्य गन्धाद्यैः ॥

ततश्शङ्खतोयैस्समभ्युक्ष्य साध्यं समुद्वास्य देवं गृहाभ्यन्तरे च ।
प्रवेश्याथ साध्यस्य रक्षां च कृत्वा घटाग्न्यादि सर्वं गृहीत्वा सशिष्यः ॥

गृहाद्विनिष्क्रम्य च चत्वरेऽथो गत्वा समभ्युक्ष्य च तत्र कुम्भम् ।
संस्थाप्य तत्रापि च दक्षिणेऽग्निं निधाय वह्निं परितश्च दर्भैः ॥

सम्यक् परिस्तीर्यच [1]भूतक्रूरयुक्तेन चान्नेन बलिं च दद्यात् ।
अनेन मन्त्रेण सपुष्पतोयं प्रीत्यै गणानां परितोऽष्टदिक्षु ॥

ओं नमो रुद्रगणेभ्यः सर्वशान्तिकरेभ्यः प्रतिगृह्णन्त्विमं बलिं स्वाहा ॥

बलिमन्त्रोयमुद्दिष्टो भूतानां प्रीतिवर्धनः ।
पललं रजनीचूर्णं लाजा दधिसक्तवश्च पञ्चैते ।

मिळितास्तु भूतक्रूरं भूतानां प्रीतिदं बुधाः प्राहुः ।
पललमिति–तिलम् ।

विसृज्य वह्निं निजरक्षणाय पञ्चाक्षरं मन्त्रवरं प्रजप्य ।
तत्सर्वमग्न्याद्यनिरीक्ष्यमाणः शिष्यैस्समं मन्दिरमाशु यायात् ॥

[2]त्रिरात्रमेवं नियमेन कुर्यात् बलिं सहोमं विधिना यथावत् ।
कृत्याज्वरापस्मृतिरोगनागपिशाचभूतापदि तन्निवृत्त्यै ॥

ततः स्थण्डिलं भूतले गोमयाद्भिः समालिप्य शुद्धे प्रगे वह्निमति ।
प्रगे इति प्रातःकाले ॥

निधायाज्यसंस्कारमारभ्य कृत्वा स्वगृह्योक्तमार्गेण वह्नेर्मुखं च ।

---

१ भूतकूर इति ख, ग, मातृकापाठः ।

२ एवं इति ख, ग, पाठः ।

वह्नेर्दक्षिणभागे वसुपत्रं कमलमारचय्यात्र ।
कलशं कापायजलैः परिपूर्य चूतादिपञ्चपत्राण्यस्य ॥

कषायजलं क्षीरद्रुमचर्मक्वथिततोयम् ॥

आवाह्यास्मिन्देवं प्रपूज्य वसनद्वयेन संवेष्ट्य ।
संरक्ष्यास्त्रेण ततो घृतेन चाष्टोत्तरं शतं हुत्वा ॥

दुग्धान्नेन च तावत् हुत्वा शिष्टेन भोजयेद्विप्रान् ।
द्वादशसंख्यानपि वा वसुसंख्यान् जलधिपरिमितानथवा ॥

समाप्य होमं कलशस्थतोयैः संसिच्य संपातममुष्य दत्वा ।
साध्यस्य सोपि प्रतिपूज्य विप्रान् सुवर्णगोधान्यधराम्बराद्यैः ॥

ततो यथाशक्ति महीसुवर्णधेन्वम्बराद्यान् गुरवे वितीर्य ।
तेन प्रसन्नेन समीरिताभिराशीर्भिरिद्धः सुचिरं स जीवेत् ॥

इत्थं वीरभद्रबलिप्रकारस्समाप्तः ॥

अथ मृत्युञ्जयमन्त्रविधानमुच्यते —

कहोळक ऋषिः । देवीगायत्री छन्दः । मृत्युञ्जयरुद्रो देवता । जुं बीजम् । सः शक्तिः । सां हृत् । सीं शिरः । इत्याद्यङ्गानि । नाभिहृत् भ्रूमध्येषु अक्षरान्न्यसेत् । ध्यानम् —

स्फुटितनळिनसंस्थं मौळिबद्धेन्दुरेखा-
गळदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रापाशवेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि ॥

तत्र वेदो हरिणशिशुः । *ओं जुं सः, इति मन्त्रः ॥

* ॐ जूं सः इति मृत्युञ्जयमन्त्रः । ॐ वं जूं सः इति अमृतमृत्युञ्जयमन्त्रः इति मन्त्रज्ञानामाशयः ।

रसप्तमः कर्णयुतोर्ध्व(र्ध)चन्द्रवान् कुपश्चमो विन्दुयुतो भृग्वादिकः ।
मनुस्त्वयं मृत्युजयात्मकः स्फुटं समीरितस्साधकरक्षणक्षमः ॥

इति मन्त्रोद्धारः । त्रिलक्षजपः । गडूच्या दुग्धमिश्रिताज्यसिक्तया दशांशं जुहुयात् । पुरश्चरणाहोमः । आयुःप्रधानोयं मन्त्रः ॥

अथ पूजा—

प्रासादोक्ते शैवपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । इन्द्रादिभिर्द्वितीया । वज्रादिभिस्तृतीया ॥

अस्य यन्त्रमाह—

आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां
दिक्पत्रेष्वप्यपरमपरं चापि तत्कोणकेषु ।
भूयो भूमेः पुरमनुसृगाङ्कं तदश्रेषु टान्तं
जप्त्वा वद्धं ग्रहगदविषध्वंसि यन्त्रं तदेतत् ॥

प्रथममष्टपत्रं पद्मं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य तदन्तस्साध्यनामादीन् विलिखेत् । पुनः पूर्वादिदिक्पत्रचतुष्टये तु जु इति विलिखेत् । पुनः आग्नेयादिकोणपत्रचतुष्टये तु सः इति विलिखेत् । पुनस्तद्बहिश्चतुरश्रं विलिख्य तद्बहिरावृतिरूपेण ठ इति विलिख्य चतुरश्रकोणेषु चतुर्ष्वपि ठं इति विलिखेत् ॥ एवं विलिख्य जप्त्वा धारयेत् । ग्रहगदादिध्वंसनकरमायुष्करं च (भवति) ॥

अस्मिन्मण्डले शैवपीठं संपूज्य, कलशं संपूर्य मूर्तिं संपूज्य जप्त्वाऽभिषिञ्चेत्साध्यम् ॥ श्रीवश्यकरं ग्रहाभिचारहरं (च भवति) ॥

प्रयोगान्तरम्—

ततः छिन्नोद्भवानां तु समिद्भिश्चतुरंगुलैः ।
दुग्धसिक्तैस्समिद्धेऽग्नौ पद्महस्रद्वयं हुनेत् ॥

यस्तु यह्नौ जुहोत्येवं यावत्संख्येन साधकः ।
तावत्संख्यैस्सुधाकुम्भैरग्निः प्रीणाति शंकरम् ॥

आप्यायितोऽग्निना शर्वः साधकस्येप्सितान्वरान् ।
प्रदद्यादायुराद्यांश्च दुरन्तान्प्रळयान्तिकान् ॥

छिन्नोद्भवं–गुळवेळ சீந்தில் கொடி चतुरंगुलं– கொன்றை आरग्वध-श्चतुरंगुल इति वचनात् ॥ उभाभ्यां संभूय द्वादशसहस्रमित्यर्थः ॥

ओं जुं सः इत्यनन्तरं पालयपदयुगळयुक्तं साध्यनाम चोक्त्वानन्तरमपि सः जुं ओं इति प्रतिलोमेन योजयेत् । इदमपि मृत्युञ्जयमन्त्रान्तरम् ॥

अथ पूर्वोक्तमन्त्रस्यैव प्रयोगान्तरम्—

अमृतावटतिलदूर्वाः पयो घृतं पायसं क्रमेणेति ।
सप्त द्रव्याण्युक्तान्येतैर्जुहुयात्पृथक् सहस्रतयम् ॥

तीव्रे ज्वरे घोरतरेऽभिचारे सोन्मादके दाहगदे च मोहे ।
तनोति शान्तिं नचिरेण होमः संजीवनं चाब्दशतप्रमाणम् ॥

संभोजयेत् होमदिनेषु विप्रान् सप्ताधिकान् स्वादुभिरन्नजातैः ।
सतर्णका गां च हुतावसाने दद्यात् द्विजेभ्यो हुतकर्मकृद्भ्यः ॥

अयमर्थः— उक्तान्यमृतादिसप्तद्रव्याणि क्रमेण नित्यशः एकैकं सप्तदिनं सहस्रसंख्यं हुनेत् दिनशः सप्तगुणितत्वेन भोजयेच । सापत्यां गां चाध्वर्यवे दद्यात् । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्—

चतुरंगुलपरिमाणैरमृताकाण्डैरथार्कसाहस्रम् ।
जुहुयाच्च दुग्धसिक्तैरारोग्यायायुषे च लक्ष्म्यै च ॥

अर्कसहस्रं द्वादशसहस्रम् ॥

प्रयोगान्तरम् —

निजजन्मदिने शतं शतं यो जुहुयाद्द्रव्यवरैश्च सप्तसंख्यैः ।
मधुरैः प्रतिभोजयेच्च विप्रानभिवाञ्छन्नियमेन दीर्घमायुः ॥

अयमर्थः — प्रतिमासं जन्मानुजन्मत्रिजन्मदिने अमृताद्युक्तसप्तद्रव्याणि सर्वाण्येकैकं शतसंख्यया जुहुयात् । मधुरान्नैः ब्राह्मणान् भोजयेच्च दीर्घमायुरभिकांक्षन् ॥

प्रयोगान्तरम् —

अथवा सप्तभिरेतैर्द्रव्यैरेकेन वा सहस्रतयम् ।
जन्मर्क्षहोममात्रान् निरुपद्रवमुत्तमं व्रजेदायुः ॥

अयमर्थः — जन्मानुजन्मत्रिजन्मदिने पूर्वोक्तसप्तद्रव्यैस्सर्वैस्संभूय सहस्रं हुनेत् । अथवा एतैर्द्रव्यैरेकैकैरेव सहस्रसंख्यं क्रमेण प्रतिनक्षत्रं जुहुयात् । निरुपद्रवेण दीर्घमायुर्भवति ॥

प्रयोगान्तरम् —

दूर्वात्रितयैः पयसा जुहुयादेकादशाहुतीर्दिनशः ।
जित्वापमृत्युरोगान् प्रयात्यसावायुषश्च दैर्घ्यमपि ॥

दूर्वात्रितयं पयस्सिक्तं जुहुयात् ॥

प्रयोगान्तरम् —

जन्मर्क्षाणां त्रितये छिन्नाकाश्मर्यवकुळजैरिध्मैः ।
क्रमशो हुनेत्सहस्रं नश्यन्त्यपमृत्युरोगदुरितानि ॥

अयमर्थः — अश्वतीमघमूलमित्यादिजन्मानुजन्मत्रिजन्मनक्षत्रेषु एकैकमेकैकस्मिन् दिने सहस्रसंख्यं हुनेदिति ॥

छिन्ना—गुळवेळ । काश्मर्य—प्यरंकुमुळ्-பெருங்குமிழ் वकुळं—घोळसरी-மகிழ்.

प्रयोगान्तरम्—

सितसिद्धार्थसहस्राहुत्या नश्यत्युपद्रवो ज्वरजः ।
तद्वदपामार्गहुतान्मर्त्यो जयमप्यरोगतां लभते ॥

सितसिद्धार्थे-पाण्डरामोहरया । अपामार्गे-आघाडा ॥

प्रयोगान्तरम्—

एतदेव सप्तकृत्वो हुनेदिति मृत्युञ्जयविषये कल्पान्तरे उक्तत्वात्, 'विकारानुगुणं मन्त्री वर्धयेद्धोमवासरान् ।' इति शारदातिलके सप्तद्रव्य-मृत्युञ्जयविषये उक्तत्वाच्च, एतैरमृतादिसप्तद्रव्यैः सप्तकृत्व एकोनपञ्चाशद्भि-र्दिनैर्हुनेत् ॥ *तत्र सप्तद्रव्यैः एकवारहोमे जाते तस्य न मृत्युर्भवति । इति प्रसिद्ध(द्धि)बलात् प्राणबाधावस्थायां एकवारं सप्तद्रव्याणि क्रमेण हुत्वा, पुनरपि क्रमेणारभ्य, पुनरपि समापयेत् । एवं सप्तकृत्वो हुनेत् । अन्यथा तु स्वस्थावस्थायां चेत्, प्रथमद्रव्यमेव सप्तदिनैर्हुत्वा पुनर्द्वितीयद्रव्यं च सप्तदिनैर्हुनेत् । एवं प्रकारेण सप्तद्रव्याण्यपि समापयेत् । एतन्महा-मृत्युञ्जयसंज्ञं भवति ॥

इति प्रपञ्चसारसारसङ्ग्रहे गीर्वाणेन्द्रविरचिते
षड्विंशः पटलः ॥



* तत इति क पाठः ।

# अथ सप्तविंशः पटलः ॥

—:※:—

अथ शारदातिलकोक्तमृत्युञ्जयत्र्यक्षरीविधानमुच्यते —

मन्त्रश्च होमादिद्रव्यं च पूर्ववदेव। तेन हेतुना विस्तरेण नोक्तम्। मन्त्रोद्धार उच्यते —

तारस्थिरासकण्ठेन्दुभृगुसर्गविभूषितः।
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयाह्वयः ॥

ऋषिः कहोळो देव्यादिगायत्री छन्द ईरितः।
मृत्युञ्जयो महादेवो देवतास्य महामनोः ॥

भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत्।

ध्यानम् —

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्।
कोटीरेन्दुगळत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥

गुणलक्षं जपेन्मन्त्रं तद्दशांशं प्रसन्नधीः।
जुहुयादमृताकाण्डैः शुद्धदुग्धाज्यलोळितैः ॥

शैवे संपूजयेत्पीठे मूर्तिं मूलेन कल्पयेत्।
अङ्गावरणमाराध्य पश्चाल्लोकेश्वरान्यजेत् ॥

तदस्त्राणि ततो बाह्ये पूजयेत्साधकोत्तमः।
जपः पूजादिकः सिद्धे मन्त्रेऽस्मिन्मनुनाऽमुना ॥

कुर्यात्प्रयोगान्कल्पोक्तानभीष्टफलसिद्धये ।
दुग्धसिक्तैस्सुधाखण्डैः मन्त्री मासं सहस्रकम् ॥

आराधितेग्नौ विधिवज्जुहुयाद्विजितेन्द्रियः ।
सन्तुष्टश्शङ्करस्तेन सुधाप्लावितविग्रहः ॥

आयुरारोग्यसंपत्तियशः पुत्रान् प्रवर्तयेत् ।
सुधावटौ तिला दूर्वाः पयस्सर्पिः पयोहविः ॥

इत्युक्तैस्सप्तभिर्द्रव्यैर्जुहुयात्सप्तवासरम् ।
क्रमाद्दशशतं नित्यमष्टोत्तरमतन्द्रितः ॥

सप्ताधिकद्विजान्नित्यं भोजयेन्मधुरान्वितम् ।
विकारानुगुणं मन्त्री वर्धयेद्धोमवासरान् ॥

होतृभ्यो दक्षिणां दद्यात्तरुणा गाः पयस्विनीः ।
गुरुं संप्रीणयेत्पश्चात् धनाद्यैर्देवताधिया ॥

अनेन विधिना साध्यः कृत्यारोगग्रहादिभिः ।
विनिर्मुक्तश्चिरं जीवेच्छरदां शतमञ्जसा ॥

अभिचारे ज्वरे तीव्रे रोगोन्मादे शिरोगदे ।
असाध्यरोगे क्ष्वेळार्तौ मोहे दाहे तथाऽऽमये ॥

होमोयं शान्तिदः प्रोक्तः सर्वसंपत्प्रदायकः ।
द्रव्यैरेतैः प्रजुहुयात् त्रिजन्मसु यथाविधि ॥

भोजयेन्मधुरैर्भोज्यैः ब्राह्मणान्वेदपारगान् ।
दीर्घमायुरवाप्नोति वाञ्छितां विन्दति श्रियम् ॥

एकादशाहुतीर्नित्यं जुहुयात्साधु दूर्वया ।
अपमृत्युजिदेतत्स्यादायुरारोग्यवर्धनम् ॥

त्रिजन्मसु सुधावल्लीकाश्मीरमधुरोद्भवैः ।
समिद्वरैः कृतो होमः सर्वमृत्युगदापहः ॥

काश्मीरं-कुङ्कुमम् । मधुरसमित्-अतिमधुरम् ।

सिद्धार्थैर्विहितो होमो महाज्वरविनाशनः ।
अपामार्गसमिद्धोमः सर्वामयनिषूदनः ॥

प्रणवरचितनाळं मन्त्रमध्यार्णपत्रं
भृगुविलसितमध्यं पत्रयुग्मं तदन्तः ।
कृतवसतिमुमेशं वर्णनिर्यत्सुधार्द्रं
कलयतु हृदि नित्यं सर्वदुःखप्रशान्त्यै ॥

यन्त्राढ्ये कलशे सौम्ये कलशप्रोक्तवर्त्मना ।
नवरत्नसमायुक्तं दुकूलाभ्यामलंकृतम् ॥

आपूर्य सलिलैश्शुद्धैस्तस्मिन्देवं प्रपूजयेत् ।
उपचारैष्षोडशभिर्विधानेन विधानवित् ॥

अभिषिञ्चेत्प्रियं साध्यं विनीतं दत्तदक्षिणम् ।
आधिव्याधिमहारोगकृत्याद्रोहनिकृन्तनम् ॥

अभिषेकोऽयमाख्यातः कीर्तिश्रीविजयप्रदः ।

मध्ये साध्याक्षराढ्यं प्रणवमपि लिखेन्मध्यमं दिग्दळस्थं
कोणेष्वन्त्यं मनोस्तत्क्षितिभवनमथो दिक्षु चन्द्रं विदिक्षु ।
ठान्तं यन्त्रं तदुक्तं सकलविषरिपुक्ष्वेलभूतापमृत्यु-
व्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रदं कामदं च ॥

अयमर्थः — मन्त्रस्य मध्यमाक्षरं दिक्षु, अन्त्याक्षरं कोणदळेषु, चतुरश्रस्य दिक्षु ठं इति विलिखेत् ॥

अथ कल्पान्तरोक्तं यन्त्रं लिख्यते —

मध्ये सार्णविदर्भितं प्रपुटितं मृत्युञ्जयत्र्यक्षरैः
क्षान्तस्थं निजसाध्यनाम विलिखेत् किञ्जल्कसंस्थान्स्वरान् ।
पत्रेष्वष्टसु नामवर्णपुटितं वर्गांस्तदग्रेष्वथो
यन्त्रं पद्मपुटीकृतं निगदितं मृत्युञ्जयाख्यं परम् ॥

कर्णिकामध्यस्थजीवस्य परितः मन्त्रपुटितमातृकार्णान् विलिख्य, तस्य क्षकारस्यान्तः साध्यनाम विलिखेत्। अष्टदळेषु साध्यनामपुटितं त्र्यक्षरं कादिवर्गान् दळाग्रेष्वित्यर्थः। इदमपि मृत्युञ्जययन्त्रम्। इति शारदातिलकोक्तमृत्युञ्जयकल्पस्समाप्तः ॥

अथ मृत्युञ्जयमन्त्रप्रसङ्गात् मन्त्रसारोक्तो रोगशान्तिकरधन्वन्तरिमन्त्रोऽपि लिख्यते —

अपान्तरतमा ऋषिः । त्रिष्टुप्छन्दः । धन्वन्तरिर्देवता । ओं बीजम्। स्वाहा शक्तिः । सर्वरोगविनाशनार्थे विनियोगः । ओं नमो भगवते हृत् । धन्वन्तरये शिरः। अमृतकलशहस्ताय शिखा। सर्वामयविनाशनाय कवचम् । त्रिलोकनाथाय नेत्रम् । विष्णवे स्वाहा अस्त्रम् ॥ ध्यानम् —

शङ्खं चक्रं जलूकां दधदमृतघटं चापि दोर्भिश्चतुर्भिः
सूक्ष्मस्वच्छातिहृद्यांशुकपरिविलसन्मौलिमम्भोजनेत्रम् ।
कालाम्भोदोज्ज्वलाङ्गं कटितटविलसच्चारुपीताम्बराढ्यं
वन्दे धन्वन्तरिं तं निखिलगदवनप्रौढदावाग्निलीलम् ॥

ओं नमो भगवते धन्वन्तरये अमृतकलशहस्ताय सर्वामयविनाशनाय त्रिलोकनाथाय विष्णवे स्वाहा । इत्येकचत्वारिंशदक्षरो मन्त्रः ॥

अक्षरन्यास उच्यते —

शीर्षालिकश्रुतिविलोचनघोणगण्ड-
दन्तोष्ठपाणिपदसन्धिषु साग्रकेषु ।
आधारनाभिजठरस्तनपृष्ठहृत्सु
मन्त्राक्षराणि शितधीर्न्यसतु क्रमेण ॥

एवमक्षरन्यासं कृत्वा लक्षं जपेत् । आज्यसिक्तैः पायसैर्वा पयस्सिक्ताभिर्दूर्वाभिर्वा दशांशं पुरश्चरणाद्धोमः । रोगनिवृत्तिप्रधानोयं मन्त्रः ॥

अथ पूजाविधिः —

पूर्वमष्टाक्षरविधानोक्तवैष्णवपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । केशवादिद्वादशनामभिर्द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी ॥

अथ प्रयोगविधिः —

चतुरंगुलप्रमाणैरमृताकाण्डैर्जुहोति यो वह्नौ ।
रोगैर्विमुक्तदेहो विहरेच्छरदां शतं सुखेनासौ ॥

अमृताकाण्डं—गुळवेळ ॥ प्रयोगान्तरम् —

अरत्निमात्रैरयुतं घृताक्तैः समिद्भिरग्नावथ काश्मरीणाम् ।
आरोग्यसिद्ध्यै प्रजुहोतु मन्त्री दीर्घायुषे सर्वसमृद्धये च ॥

काश्मरी—பெருங்குமிழ் प्रयोगान्तरम् —

प्रादेशमात्रैर्वटभूरुहेध्मैः जुहोतु वह्नावयुतं सशुङ्गैः ।
दीर्घायुषे रोगविषग्रहादिविमुक्तये सर्वसमृद्धये च ॥

वटभूरुहेध्मं—वटाचामसिधा । सशुङ्गैरिति—साग्रैरित्यर्थः ॥

प्रयोगान्तरम् —

ससितेन च पायसेन दूर्वात्रिकयुक्तेन च गोविपलकेन ।

अयुतं जुहुयात्ससर्पिषाऽग्नौ दुरितौघप्रशमाय रोगशान्त्यै ॥

अयमर्थः — सितेति-शर्करा । बोधिपत्रं-अश्वत्थपत्रम् । सितामिळितेन, पायसेन च सह गृहीतदूर्वात्रिकेन च बोधिपत्रगतेन च साज्येन च अयुतं जुहुयात् । तस्मादुक्तफलं स्यादिति ॥

प्रयोगान्तरम् —

हवनकर्म करोतु फलैर्नवैः अयुतमामलकीतरुसंभवैः ।
दुरितरोगविषग्रहविभ्रमप्रशमनाय च सर्वसमृद्धये ॥ इति ॥

आमलकीफलं-अवळे । प्रयोगान्तरम् —

देवं रविबिम्बस्थं मनोहराङ्गं प्रसन्नमुखकमलम् ।
अमृतघटं सजलूकं करयुगळेनादधानममलगतिः ॥

ध्यात्वा वसुसंख्यमसुं जप्त्वात्मानं दृशा निरीक्षन्तम् ।
स्मृत्वा षोडशसंख्यं जप्त्वा तस्यान्तिकं समारभ्य ॥

स्वाज्ञावधिसोपानरूपमयं प्रतिविचिन्त्य मन्त्रममुम् ।
द्वात्रिंशत्संख्यमथो जप्त्वा संचिन्त्य तेन मार्गेण ॥

अवतीर्याग्रे स्थित्वा निजरोगगणं तदा जलूकिकया ।
सकलमपि चूषयित्वा नीरोगस्यात्मरोगममृतजलैः ॥

अभिषेचयन्तमेनं ध्यात्वा धन्वन्तरिं जपेन्मन्त्री ।
अष्टोत्तरं सहस्रं स्थैर्याय च यौवनस्य वश्याय ॥

आरोग्याय समृद्ध्यै कान्त्यै दीर्घायुषे विमुक्त्यै च ॥ इति ।

वसुसंख्यमष्टसंख्यम् । प्रयोगान्तरम् —

मन्त्रेणानेन संजप्त्वा भोज्यजातं दिने दिने ।

भुङ्क्ते योऽसौ नरो रोगैः विमुक्तस्सुखभाग्भवेत् ॥

प्रयोगान्तरम् —

औषधादिकमनेन जापितं नित्यमेव जुषतां तथा नृणाम् ।
आमयग्रहविषस्मृतिभ्रमाद्यापदो ननु भवन्ति जातुचित् ॥ इति ॥

अथ यन्त्रं वक्ष्ये —

ससाध्याख्यं मध्ये प्रणवमपि षट्कोणविवरे
सुधार्णं किञ्जल्के स्वरयुगळमष्टच्छदमनु ।
लिखेन्मन्त्रस्यार्णानपि शरमितान्व्यञ्जनवृतं
कुगेहोद्यच्छान्तं भिषगधिपतेर्यन्त्रमुदितम् ॥

एतद्विलिख्य यन्त्रं हैमे पट्टे सुवर्णलेखिन्या ।
शोभनतरे मुहूर्ते रुचकादिषु भूषणेषु संयोज्य ॥

संधारयन् सुजप्तं कृतार्चनाद्यं च सिक्तसंपातम् ।
आरोग्यायुःकान्तिश्रीधनधान्यैस्समं चिरं जीवेत् ॥

इदमेव विलिख्य साधु यन्त्रं नवनीते प्रतिजप्य मन्त्रमेनम् ।
लिहतां विलयं प्रयान्ति सद्यो निखिला रोगपरंपरा नराणाम् ॥

अस्यार्थः— प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां प्रणवं विलिख्य तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत्। पुनः षट्सु कोणेषु ठं इत्यमृतबीजं विलिखेत्। पुनस्तद्बहिरष्टदलं पद्मं विलिख्य तद्दळमूलेषु केसरस्थानेषु स्वराक्षरद्वन्द्वं क्रमेण विलिख्य तद्दळमध्येषु मूलमन्त्रवर्णान् प्रणवं विहाय द्वितीयाक्षराद्यान् पञ्चशः पञ्चशो विलिखेत्। पुनस्तद्बहिः वृत्तं विलिख्य तस्मिन् कादिवर्णैर्वेष्टयेत्। पुनस्तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु ठं इति अमृतबीजं विलिखेत्। एवं स्वर्णादिपट्टे स्वर्णादिलेखिन्या विलिख्य जप्त्वा समर्च्य पुनस्तेनैव मन्त्रेणाज्याहुतिं कृत्वा तत्संपातमग्निनिकटे यन्त्रे

विलिप्य साध्यं धारयेत्। तस्मादुक्तफलं स्यात्। अथवा नवनीते विलिख्योक्तप्रकारेण कुर्यात्। तथा कृतस्योक्तफलं स्यात्॥ अथैतदेव यन्त्रं तण्डुले विलिख्य तस्मिन् कुम्भं संस्थाप्य गव्यक्षीरेण कलशं संपूरयेत्। आरोग्यार्थं विमुक्त्यर्थं च॥

[1]अथ कलशपूरणविधिं सकलकलशपूजासाधारण्येन वक्ष्ये—

अथ कथयामि समासात् त्रिकालपूजाविधिं विधानेन।
आरोग्याय समृद्ध्यै कान्त्यै दीर्घायुषे विमुक्त्यै च॥

आलिप्य गोमयजलैः स्थण्डिलमस्मिन् विलिख्य यन्त्रमिदम्।
तत्कर्णिकान्तरमथो पीतेन च कोणषट्कमरुणेन॥

असितेतरवर्णैः यन्त्रं विरचय्य कर्णिकामध्ये।
विन्यस्यांशुकमहतं तस्मिन् शालीस्सतण्डुला विधिवत्॥

आच्छाद्यांशुकशेषो (शेषं त्व)स्मिन् विन्यस्य साक्षतं कूर्चम्।
अहतेनाथ च धृत्वा वासोयुगळेन नूतनेन ततः॥

आचम्य शुद्धदेहः प्राङ्मुख उपविश्य विष्टरे मन्त्री।
यन्त्रोपरिस्थकूर्चे ध्रुवेण विन्यस्य [2]वज्रं लोहं वा॥

राजतमथवा पात्रं पयसा गव्येन पूरयित्वाऽस्मिन्।
संस्थाप्य मन्त्रजापी सालग्रामं यथाशिला नित्यम्॥

अधिवसति यत्र विष्णुः सर्वात्मा शाश्वतस्सदानन्दः।
अश्वत्थाद्यैः स्तबकैरुज्ज्वलमावेष्टय वसनयुगळेन॥

पूर्ववदभिवाह्यास्मिन् परिवारैस्तं प्रपूज्य गन्धाद्यैः।

---

१ अथ इत्यस्य स्थाने तत्र इति ङ मातृकापाठः।

२ वाज्रं इति ग पाठः वाज्र इति ङ पाठः।

अथ कथयामीत्यादीनां प्रपूज्य गन्धाद्यैः इत्यन्तानां ग्रन्थानामयमर्थः— प्रथमं गोमयजलैर्मण्डलं विलिप्य तस्मिन् तण्डुलचूर्णं प्रविकीर्य तस्मिन् धन्वन्तरियन्त्रं दर्भाग्रेण प्रविलिख्य, तत्कर्णिकामध्यं पीतेन वर्णेन एकत्रिंशपटले प्राक् सुदर्शनविधानोक्तद्रव्येण, कोणपट्कमरुणेनापि प्राक् तत्रैवोक्तद्रव्येण, अष्टदळमध्यं तु कृष्णवर्णेनापि प्राक् तत्रैवोक्तद्रव्येण संपूर्य, तद्बहिः रक्तवर्णेन तत्रैवोक्तद्रव्येण, तस्य यन्त्रस्य कर्णिकामध्ये अखण्डवस्त्राग्रं प्रसार्य, तस्य वस्त्रस्योपरि द्रोणादिप्रमाणेन शालीः प्रविकीर्य, तदुपरि प्रस्थादिप्रमाणेन तण्डुलान् प्रविकीर्य, तदुपरि तस्यैवाखण्डवस्त्रस्येतराग्रेणाच्छाद्य, तदुपरि साक्षतं कूर्चं विन्यस्य, पुनराचार्यः स्वयमखण्डवस्त्रेण परिधाय, तथैव नूतनाखण्डवस्त्रेण उत्तरीयं च कृत्वा, आचम्य आसने प्राङ्मुख उपविश्य, तण्डुलवस्त्रादेरुपरिस्थितकूर्चोपरि वज्रलोहमयं पात्रं वा रजतमयं पात्रं वा तन्तुना संवेष्टितं धूपितं चाधोमुखेन प्रणवोच्चारणपूर्वकं निधाय, वैष्णवपीठं तदुपरि संपूज्य पश्चादूर्ध्वमुखेन निधाय, तस्मिन्पात्रे साक्षतं कूर्चं निधाय, गव्यक्षीरेण मातृकाप्रतिलोमजपावसाने मूलमन्त्रेण त्रिवारं जप्त्वा तत्पात्रं पूरयेत् । सर्वत्रैवमेव कलशपूरणविधिः । तदुक्तं च क्रमदीपिकायाम्—

अथ क्वाथतोयैः क्षकारादिवर्णैः अकारावसानैस्समापूरयेत्तम् ।
स्वमन्त्रत्रिजापावसानं +॥ इति ॥

तत्र प्रथमं यत्र यत्र येन येन शुद्धजलादिद्रव्येण कलशं पूर्यते तेन तेन जलादिना शङ्खमापूर्य तस्मिन्नष्टगन्धान् विडोळ्य तस्मिन् चतुर्नवतिकलाः समावाह्य तेन शङ्खस्थजलेन प्रथमं कुम्भमापूर्य पश्चात् शुद्धोदकादिना पूरयेत् ॥

तत्र प्रथमं वैष्णवदेवताविषयकलशपूजाविधानं चेत् तद्विषयाष्टगन्धविलोडितकषायोदकादिना शङ्खमापूर्य गन्धादिभिः समभ्यर्च्य कलादिचतुर्नवतिदेवताः समावाह्य तज्जलं कलशे विनिक्षिपेत् ॥

शैवदेवताविषयं चेत् तद्विषयाष्टगन्धेनैवं कुर्यात्। दौर्गे चेत् तद्विषयाष्टगन्धेनैवं कुर्यात्। चतुर्नवतिकलादयः सर्वविषयेऽपि समाना एव। तत्र त्रिविधान्यष्टद्रव्याण्युच्यन्ते —

चन्दनकर्पूरागरुकुंकुमकपिमांसिरोचनाचोराः ।
गन्धाष्टकं च शक्तेस्सान्निध्यकरं च लोकरञ्जनकृत् ॥

चन्दनहिरि(ह्री)वेरागरुकुष्ठासृगुशीरमांसिमुरमपरम् ।
एवं वैष्णवगन्धाष्टकम् ॥ पुनः
चन्दनकर्पूरागरुदलरुधिरकुशीतरोगजलमपरम् ।

इति शैवगन्धाष्टकम्। उशीरं–वाला–(விளாமிச்சம்) रोगं–शङ्खलनीरु कोष्टम्। जलं–काळावाळा। मांसी–जटामांसी। मुरं–दवना, मुरसंज्ञमेव वा। चोरः–अम्बै हळेद्–கஸ்தூரிமஞ்சள் (மருக்கொழுந்து) रोचना-गोरोचना। असृक्–कुंकुमम्। कुष्ठं–சங்கழநீர் கோட்டம் दलं–पाचचेझाड பச்சிலைமரம் कुशीतं–रक्तचन्दनम्। ह्रीवेरं–இருவேலி कपितिप्पिलिमूलम्। रुधिरं–कुंकुमम् ॥ इति ॥

तत्र चतुर्नवतिकलादिमन्त्राः कथ्यन्ते —

सृष्ट्यै० ऋध्यै० स्मृत्यै० मेधायै० कान्त्यै० लक्ष्म्यै० द्युत्यै० स्थिरायै० स्थित्यै० सिध्यै० १० एता अकारोत्था दशकलाः हंसः शुचिषदित्यृक्पूर्विकाः समावाहयेत्। पुनः,

जरायै० पालिन्यै० शान्त्यै० ऐश्वर्यै० रत्यै० कामिकायै० वरदायै० आह्लादिन्यै० प्रीत्यै० दीर्घायै० १० इमा उकारजाः कलाः, प्रतद्विष्णुरित्यृक्पूर्विकाः समावाहयेत्। पुनः,

तीक्ष्णायै० रौद्रायै० भयायै० निद्रायै० तन्द्र्यै० क्षुधायै० क्रोधिन्यै० क्रियायै० उत्कार्यै० मृत्यवे० १० इमा मकारजाः कलाः, त्र्यम्बकमित्यृक्पूर्विकाः समावाहयेत् ॥ पुनः,

निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० इन्धिकायै० दीपिकायै० रेचकायै० मोचकायै० परायै० सूक्ष्मायै० सूक्ष्मामृतायै० ज्ञानामृतायै० आप्यायिन्यै० व्यापिन्यै० व्योमरूपायै० अनन्तायै० १६ इमा नादजाः कलाः, विष्णुर्योनिं कल्पयतु इति ऋक्पूर्विकाः समावाहयेत् ॥

तत्र तावत् प्रथमं तया तया ऋचा समावाह्य, पुनस्तत्संबन्धिनीः कलाः क्रमेण समावाहयेत् । अस्त्यत्रोपदेशः ॥

प्रथमं षोडशस्वरवर्णैकैकपूर्वोच्चारणेन नादकलाः षोडश क्रमेण समावाह्य, पश्चात् ककारादिदशवर्णोच्चारणपूर्वकं अकारकला दश समावाह्य, पुनः टकारादिदशवर्णपूर्वकमुकारकला दश समावाह्य, पुनः पकारादिदशवर्णपूर्वकं मकारकला दश समावाह्य, पकारादिचतुर्वर्णकं बिन्दुकलाश्चतस्रः समावाह्य, पुनः क्षकारपूर्वकं अन्त्यस्वरोक्तामनन्तायै० इत्येकां कलां समावाहयेत् । एवं कृते एकपञ्चाशद्वर्णाश्च तावत्यः प्रणवकलाश्च विनियुक्ता भवन्ति । मातृकावर्णप्राधान्यादेवं क्रमः ॥

तत्र कला यद्यप्यत्र चतुर्थ्यन्तत्वेन लिखिताः, तथापि समावाहनसमये द्वितीयान्तत्वेनैव कलास्समावाहयेत् ॥

पुनरष्टत्रिंशत्कलाः । तत्प्रकारः कथ्यते —

मं धूम्रार्चिषे नमः । ऊष्मायै० ज्वलिन्यै० ज्वालिन्यै० विस्फुलिङ्गायै० सुश्रियै० सुरूपायै० विमलायै० हव्यवाहायै० क्षं कव्यवाहायै० १० इत्यग्न्यात्मिका दशकलाः । मकारादिळकाररहितक्षान्तवर्णदशकपूर्विकाः समावाहयेत् ॥

पुनःसूर्यकलाः —

कं भं तपिन्यै नमः । खं बं तापिन्यै नमः । धूम्रायै नमः । मरीच्यै नमः । ज्वालिन्यै नमः । रुच्यै नमः । सुषुम्नायै नमः । भोगदायै० विश्वायै० बोधिन्यै० धारिण्यै० क्षमायै० १२ इति द्वादशसूर्यकलाभिः

प्रथमवर्गप्रथमाक्षराद्येकैकेन सह पञ्चमवर्गचतुर्थाक्षराद्येकैकं प्रतिलोमेनादौ संयोज्य समावाहयेत् ॥ पुनः इन्दुकलाः षोडश —

अं अमृतायै० आं मानदायै० पूषायै० तुष्टयै० पुष्टयै० रत्यै० धृत्यै० शशिन्यै० चन्द्रिकायै० कान्त्यै० ज्योत्स्नायै० श्रियै० कीर्त्यै० अङ्गदायै० पूर्णायै० पूर्णामृतायै० १६ इति सोमात्मिकाभिः स्वरवर्णैकैकपूर्विकाभिः समावाहयेत् ॥

इत्थमावाहनविधावष्टत्रिंशत्कलाः यद्यपि चतुर्थ्यन्तत्वेन लिखिताः तथाप्यावाहनसमये द्वितीयान्तत्वेन समावाहयेत् । इत्थं ऋचः पञ्च, प्रणवकलाः एकपञ्चाशत्, अष्टत्रिंशत् कलाश्च, संभूय चतुर्नवतिसंख्याकाः कलादयः एताश्शङ्खजले समावाह्य मूलमन्त्रेण च समावाह्य तज्जलं कुम्भे विनिक्षिप्य, अवशिष्टेनापि कषायोदकेन कुम्भमापूर्य, तत्र तत्र कलशविधौ या यास्साध्यदेवताः तस्याः (तस्याः) प्राणप्रतिष्ठां च तस्मिन् कुम्भोदके कुर्यात् । एवं सर्वत्र कलशपूरणविधिः ॥

अत्र तु पुनस्तस्मिन् क्षीरमध्ये द्वादशसंख्यं यथालब्धं वा सालग्रामं निधाय, पुनस्तत्पात्रमुखे मङ्गलार्थं अश्वत्थचूतपनसवृक्षाणां स्तवकान्यूर्ध्वमुखेन निधाय तदुपरि पुष्पफलतण्डुलांश्च निधाय, शतमखवल्या कुम्भमाकलयेत् ॥ पुनः नववस्त्रयुगळेन तदुपरि पिधाय पुनरावाहयेत् ॥ सालग्रामस्थापनानन्तरोक्ताः सर्वाः क्रियाः सर्वकलशविधानेऽपि समानाः ॥ तदुक्तं च क्रमदीपिकायाम् —

सहकारबोधिपनसस्तबकैः शतमन्युवल्लीकलितैः कलशम् ।
पिदधातु पुष्पफलतण्डुलकैः अभिपूर्णयापि शुभचक्रिकया ॥

चक्रिका—पत्रपुटम् ॥

अभिवेष्टयेत्तदनु कुम्भमुखं नवनिर्मलांशुकयुगेन बुधः ॥ इति ॥

पुनरत्र धन्वन्तरिमूर्तिं तस्मिन् क्षीरे समावाह्य प्रागुक्तविधानेन आवरणैस्सह समर्चयेत् इति । एवं, 'अथ कथयामि समासात्' इत्यादि-ग्रन्थानामर्थ उक्तः । पुनः,

धन्वन्तरिं प्रसन्नं पुष्पैराराध्य संस्थितं क्षीरे ।
एवं ध्यात्वा प्रजपेन्मन्त्रं कूर्चेन साधु संस्पृश्य ॥ इति ।

धन्वन्तरिमित्यादिग्रन्थस्यायमर्थः । इत्थमुक्तप्रकारेण धन्वन्तरिं समभ्यर्च्य, तस्मिन् क्षीरे कूर्चाग्रं संस्थाप्य, तत्कूर्चपृष्ठं बहुभिः ब्राह्मणैः स्पृष्ट्वा, वक्ष्यमाणेन ध्यानेन ध्यात्वा, धन्वन्तरिमन्त्रं यथाशक्ति कार्य-गौरवानुसारेण जापयेत् ॥ इति । ध्यानमुच्यते —

पयोधेर्मध्यस्थं दशशतभुजादण्डविलसत्-
घटौघास्यान्निर्यत्सुविमलसुधासारसलिलैः ।
सदा स्नान्तं साध्यं सुरुचिरममुं जपतात्
भवेदायुर्दीर्घं दुरितविषरोगैर्विरहितम् ॥

एवं ध्यानम् । पुनः,

एवं यजेद्दिनादौ दिनमध्येष्वेवमेव सायं च ।
प्रयजेत्त्रिकालमेवं रक्षां कुर्यात्तथास्त्रमन्त्रेण ॥

अपरेद्युरथ मथित्वा प्रातस्संगृह्य साधु नवनीतम् ।
आलिख्य यन्त्रमस्मिन्प्रजप्य मन्त्रं समाहूय ॥

साध्यं तस्मै दद्यात् प्रभक्षयेत्सोपि तत्सुधाबुद्ध्या ।
साध्यस्य नाभिदेशे स्पृष्ट्वा मन्त्रं जपेद्गुरुस्सम्यक् ॥

अष्टोत्तरशतसंख्यं रक्षां कुर्यात्तथास्त्रमन्त्रेण ।
एवं त्रिपञ्चसप्तद्वादशदिवसानि वा यजेद्भक्त्या ॥ इति ॥

एवं यजेद्दिनादौ इत्यादि यजेद्भक्त्या इत्यन्तानां ग्रन्थानामयमर्थः ॥ एवमुक्तप्रकारेण तस्मिन् क्षीरे धन्वन्तरिं ध्यात्वा प्रजप्य त्रिकालमप्येवमेव तत्रैव संपूज्य, पूजानन्तरं ब्राह्मणैः कूर्चं स्पृष्ट्वा, धन्वन्तरिमन्त्रं कार्यगौरवानुसारेण यथाशक्ति जापयित्वा, पुनस्तस्मिन् दिने तत्रैव संरक्ष्य पुनरप्यपरेद्युः प्रातस्समये उद्वास्य एतत्क्षीरं-मथित्वा तन्नवनीतं संगृह्य, तत् कदलीपत्रे विलिप्य तस्मिन् प्रागुक्तं धन्वन्तरियन्त्रं विलिख्य स्पृष्ट्वा यथाशक्ति जपित्वा साध्याय दद्यात् । सोपि तन्नवनीतं अमृतबुद्ध्या स्वीकुर्यात् ॥ पुनराचार्यः साध्यस्य नाभिदेशे स्पृष्ट्वा मूलमन्त्रमष्टोत्तरशतं जपेत् ॥ पुनः सुदर्शनेन साध्यस्य रक्षां कुर्यात् । इत्थं त्रिदिनं वा पञ्च दिनानि वा सप्तदिनानि वा द्वादशदिनानि वा कार्यगौरवानुसारेण नित्यशः एवमेव संपूज्य, परेद्युः प्रातर्मथित्वा उक्तप्रकारेण गुरुः साध्याय नित्यशो दद्यात् ॥ एवं त्रिपञ्चसप्तादिदिने जाते, तदनन्तरे दिने कर्तव्यविशेषमाह—

अपरेद्युर्यन्त्रमिदं दक्षिणवामक्रमेण संलिख्य ।
पूर्ववदभिपूर्य ततो रजोभिरत्युज्ज्वलं विधाय तयोः ॥

विन्यस्य याम्यसंस्थे शालीतण्डुलतिलानि राजीश्च ।
नूतनवसनेन पृथक् क्रमेण संच्छाद्य तत्र कूर्चमिदम् ॥

विन्यस्य कुम्भमस्मिन् निधाय धूपादिवासितं मन्त्री ।
क्षीरद्रुचर्मसिद्धक्वाथैरापूर्य शुद्धतोयैर्वा ॥

अश्वत्थचूतपनसस्तबकैर्वसनद्वयेन चावेष्ट्य ।
आवाह्यास्मिन्देवं विधिवत्संपूज्य गन्धपुष्पाद्यैः ।
स्पृष्ट्वा प्रजप्य मन्त्रं संरक्ष्यास्त्रेण मन्त्रविद्भूयः ॥ इति ।

अपरेद्युर्यन्त्रमित्यादीनां मन्त्रविद्भूयः इत्यन्तानां ग्रन्थानामयमर्थः । त्रिपञ्चसप्तादिदिनमानेन पूर्वोक्तक्षीरजपे जाते ततः परेद्युरिदमेव धन्वन्तरी-

यन्त्रं, उभयत्र दक्षिणवामतः प्रागुक्तप्रकारेणैव विलिख्य, तथैव वर्णैरापूर्य च, तयोर्मध्ये अहतनूतनवस्त्राग्रं पूर्ववदेव प्रसार्य, तस्मिन् शालीतण्डुलांश्च तिलांश्च राजीश्च पूर्वपूर्वोपरि वस्त्रेणाच्छादनपूर्वमुपर्युपरि एतानि द्रव्याणि निधाय तदुपरि कूर्चं निधाय, तस्मिन् धूपपूरितं तन्तुवेष्टितं कुम्भमधोमुखेन निधाय, तदुपरि वैष्णवपीठं संपूज्य, पुनरूर्ध्वमुखेन तं कुम्भं तारजापी निधाय तदन्तस्साक्षतं कूर्चं निधाय, पुनरश्वत्थवटौदुम्बरप्लक्षाणां त्वचः क्वाथयित्वा तैर्जलैर्वा शुद्धजलैर्वा तं कुम्भं पूर्ववदष्टगन्धे चतुर्नवतिकलाद्यावाहनपूर्वकं मातृकाप्रतिलोमपूर्वकं मूलमन्त्रेण संपूजयेत् । पुनस्तस्मिन् स्वर्णरत्नादीनि निधाय, अश्वत्थचूतपनसस्तवकान् पूर्ववत् कुम्भमुखे निधाय शतमखवन्या संवेष्टय, तदुपरि नूतनाहतवस्त्रद्वयेन संच्छाद्य अस्मिन्कुम्भोदके धन्वन्तरिमूर्तिमावाह्यावरणैस्समभ्यर्च्य निवेद्यं कृत्वा प्रसन्नपूजां च कृत्वा तं कुम्भं स्पृष्ट्वा मूलमन्त्रं जप्त्वा, पुनरावरणदेवतास्सर्वा अपि मूलदेवतायां विलाप्य, पुनस्तां मूलदेवतां तत्रैव परं तेजोरूपेण स्मरेत् ॥

पुनस्तत्र पूजामण्डलमण्डपकुण्डवितानादिगतं, यत्संसर्गवशादेवतासान्निध्यं तदपि तस्मिन्नेव कलशे अभियोज्य कुसुमैरभ्यर्च्य, पुनरष्टोत्तरशतं मन्त्रं जप्त्वा, पुनः सुदर्शनेन रक्षां कृत्वा पुनस्तत्रैव संरक्षेत् । अत्र तु सान्निध्ययोजनादिप्रकारो धन्वन्तरिविधानग्रन्थे, अनुक्तोपि सर्वत्र कलशविधावेवमेव न्यायः ॥ तदुक्तं च क्रमदीपिकायां,—

वपुष्यथो दितिजजितः समावृतीः
विलाप्य तास्तदपि नयेत्सदात्मताम् ॥

ध्वजतोरणदिक्कलशादिगता-
मपि मण्डपमण्डलकुण्डगताम् ।
अभियोज्य चितिं कलशे कुसुमैः
परिपूज्य जपेत्पुनरष्टशतम् ॥ इति ॥

पुनस्सौम्यभागस्थे यन्त्रे कर्तव्यमाह—

अथ यन्त्रे सौम्यस्थे निधाय वह्निं विधानतो मन्त्री ।
अग्निमुखादिकमखिलं स्वचरणविहितक्रमेण कृत्वाऽग्नौ ॥

आवाह्य वैद्यनाथं परिवारयुतं प्रपूज्य गन्धाद्यैः ।
अष्टोत्तरं सहस्रं ससर्पिषा पायसेन हुत्वा च ॥

विधिवत्समाप्य होमं संपूज्याग्निं विसृज्य निशितमतिः ।
अभिषिच्य कलशतोयैः साध्यं दत्वा च तस्य संपातम् ॥

नवनीतं च सुजप्तं वसुधाधिया सोपि भक्षयित्वा तत् ।
मृष्टैर्भूर्यन्नाद्यैर्विप्रान् सन्तर्प्य देशिकस्यापि ।
धनधान्यधेनुवासोलंकृतिभूवासुरत्नशय्याद्यान् ॥

दत्वा तेन च हर्षादाशिष उक्ता द्विजैश्च संहृष्टैः ।
शिरसोपगृह्य नत्वा प्रसादयेद्देशिकं मुरारिधिया ॥

प्रोक्तक्रमेण विधिवत् परिपूजयेद्यो
　भक्त्या त्रिकालमखिलामयधूमकेतुम् ।
धन्वन्तरिं स तु चिराय विमुक्तरोगः
　जीवेत्परत्र परमं पदमेति विष्णोः ॥ इति ॥

अथ यन्त्रे सौम्यस्थे इत्यादीनां पदमेति विष्णोरित्यन्तानां ग्रन्थानामयमर्थः ॥ एवं कुम्भं संपूज्य, पुनः कुम्भस्योत्तरभागेपि पूर्वोक्तकुंभासनयन्त्रवदेव यन्त्रं विलिख्य तस्मिन्यन्त्रे अग्निं निधाय, आचार्यः स्वचरणविधानेन अग्निमुखादिकं कृत्वा, पुनरग्नौ वैष्णवपीठं संपूज्य, तस्मिन् धन्वन्तरिं समावाह्य, पूर्वोक्तक्रमेणावरणैस्सह संपूज्य तत्राज्यसिक्तेन पायसेन च अष्टोत्तरसहस्रं संपातग्रहणपूर्वकं हुत्वा, पुनः प्रसन्नपूजां च कृत्वा, अग्निं विसृज्य, पुनराचार्यः साध्यमाहूय शुद्धवस्त्रादिकं धारयित्वा, शुद्धाचमन-

प्राणायामादिकं च कारयित्वा, तमन्तिके निधाप्य तस्य देहे गुरुः प्राणायामभूतशुद्धिमातृकान्यासादीन् कृत्वा पुनः पीठन्यासं च कृत्वा, तस्यास्य शिरसि मूलमन्त्रेण जलगन्धादिभिरभ्यर्च्य, गन्धयुताक्षतकुसुमदूर्वास्तस्य शिरसि निधाय, पुनराशीर्वादनादित्रादिभिस्सह तं कलशं गुरुरुद्धृत्य, तेन रत्नमन्त्रौषधादियुक्तेन चामृतीकृतेन च परतेजोरूपेण जलेन शिष्यतनौ गुरुर्मातृकाप्रतिलोमजपान्ते त्रिवारं मूलमन्त्रजपपुरस्सरमभिषिच्य अङ्गऋष्यादींश्च कुर्यात् ॥

अत्र तु अभिषेचनसमये शिष्यदेहे प्राणायामपीठन्यासादिविधिरनुक्तोऽपि सर्वत्र कलशाभिषेचनसमये एवमेव कार्यः। तदुक्तं च क्रमदीपिकायाम्—

अथ शिष्य उपोषितः प्रभाते
कृतनैत्यस्सुसिताम्बरस्सुवेषः ।
धरणीधनधान्यगोदुकूलैः
धिनुयाद्विप्रवरान् हरेः प्रसक्त्यै ॥

भूयः परीत्य प्रणिपत्य देशिकं
तस्मै परस्मै पुरुषाय देहिने ।
तां वित्तशाठ्यं परिहृत्य दक्षिणां
दत्वा तनुं स्वां च समर्पयेत्सुधीः ॥

अथाऽभिषेकमण्डपे सुखोपविष्टमासने
गुरुर्निशोधयेदमुं पुरेव शोधनादिभिः ॥

पीठन्यासावसानं वपुषि विमलधीः न्यस्य तस्याधिकाये
मन्त्रेणाभ्यर्च्य दूर्वाक्षतकुसुमयुतां रोचनां के निधाय ।
आशीर्वादैर्द्विजानां विशदपटुरवैर्गीतवादित्रघोषैः
माङ्गल्यैरानयेत्तं कलशमभितस्तत्समीपं व्यतीतः ॥

तेनाभिलीनमणिमन्त्रमहौषधेन
धाम्ना परेण परमामृतरूपभाजा ।

संपूरयन्वपुरमुष्य ततो वितन्वन्
तत्सामरस्यमभिषेचयताद्यथावत् ॥

साद्यैरान्तैर्वर्णैरभिपूर्णवपुस्त्रिरुक्तमन्त्रान्तैः ॥ इति ॥

तन्त्रसमुच्चये तु शिष्यदेहे पीठं समभ्यर्च्य समावाह्य पाद्यादि दद्यात् । स्नानस्थाने कलशैरभिषिच्य पुनरवशिष्टोपचारान् दद्यात् ॥ तत्र निवेद्यस्थाने सर्वरसमयमर्घ्यं दद्यादिति प्रोक्तः । एवमभिषेकं कृत्वा पुनस्तस्मै साध्याय संपातं च, पूर्वदिने पूजितं क्षीरं मथित्वा तन्नवनीतं च मूलमन्त्रेण जप्त्वा दद्यात् ॥ पुनस्सोपि साध्यस्तदाज्यद्वयं सुधाधिया संलिह्य, पुनर्मृष्टान्नैर्ब्राह्मणान् भोजयेत् । गुरुदक्षिणां च दद्यादुक्तप्रकारेण ॥ तस्मादुक्तफलं स्यात् ॥

तत्र यत्र यत्र त्रिपञ्चसप्तादिदिनैः कलशविधौ होमविधौ वा कलशं वा अग्निं वा संरक्ष्यैव अजस्राग्निरूपेण वा अजस्रकलशरूपेण वा क्रियते, तत्र सर्वत्र दिने दिने त्रिकाले पीठपूजावाहनावरणपूजादयस्सर्वेपि कर्तव्याः चैतन्यस्फूर्त्यर्थम् । उद्वासनं त्ववसानदिने । नित्यशो निष्कलभावेनैव । कलशे तु कदापि न कर्तव्यम् । अयं न्यायः सर्वत्र समान एव । तत्रावाहनमिति अभिमुखीकरणमिति च द्विविधम् । तत्र प्रथमावाहनमेव आवाहनसंज्ञम् । द्वितीयावाहनं तु अभिमुखीकरणमिति शेषः । अयं तु नवनीतप्रयोगोऽतिरहस्य एव । अवश्यमुक्तफलप्रदश्च ॥

अथ प्रयोगान्तरम्—

राकातुषारकरमण्डलमध्यसंस्थं
धन्वन्तरिं प्रतिविचिन्त्य यथोक्तरूपम् ।
अष्टोत्तरं दशशतं मनुवर्यमेनं
जप्याद्विशुद्धचरितः क्षयरोगशान्त्यै ॥

अस्यार्थः — पौर्णमास्यामिन्दुमण्डलमध्यस्थं धन्वन्तरिं पूर्वोक्तध्यानेन ध्यात्वा अष्टोत्तरं सहस्रं धन्वन्तरिमन्त्रं नियमस्थो जपेदिति ॥

प्रयोगान्तरम् —

यद्वा विचिन्त्य निजमूर्ध्नि मनोहराङ्गं
दोर्द्वन्द्वसक्तघटवक्त्रगलत्सुधार्द्रम् ।
स्वात्माङ्गयष्टिमनया परिषिच्यमानं
ध्यात्वा जपेदुपरि रोगविषादशान्त्यै ॥

अस्यार्थः — साधकः स्वमूर्ध्नि उक्तविशेषणविशिष्टं धन्वन्तरिं ध्यात्वा तदमृतघटस्थसुधया साधकस्य स्वस्यात्मानं परिषिच्यमानं ध्यात्वा अष्टोत्तर-सहस्रं जपेत् । इति ॥

अस्य मन्त्रस्य फलमाह —

एवं जपार्चाहवनादिभिर्वा धन्वन्तरिं यो भजते नरोसौ ।
रोगैर्विमुक्तश्चिरकालमस्मिन् विहृत्य चान्ते परमेति धाम ॥

इति मन्त्रसारोक्तधन्वन्तरिविधानं समाप्तम् ॥

अथ धन्वन्तरिमन्त्रप्रसङ्गात् रोगनिवृत्तिफलप्रदत्वात् कल्पान्तरोक्तः श्रीपञ्चामृतमन्त्रोपि लिख्यते —

रोगनाशन ऋषिः । पंक्तिः छन्दः । अमृतात्मा महाविष्णुर्देवता । हरये हृत् । अमृताय शिरः । अनन्ताय शिखा । हरये कवचम् । अमृताय नेत्रम् । अनन्ताय अस्त्रम् । ओं अं अच्युताय नमः । ओं सं अनन्ताय नमः । ओं ठं अमृताय नमः । ओं एं गोविन्दाय नमः । ओं वं विष्णवे नमः । इति पञ्चामृतमन्त्रः । पञ्चलक्षं जपेत् । रोगनिवृत्तिमोक्षप्रधानोयं मन्त्रः ॥

अथास्य न्यास उच्यते —

प्राङ्मुख उपविश्य गुर्वादीन् संवन्द्य क्ष्रौं इत्यनेन नृसिंहबीजेन दिग्बन्धनं कृत्वा, वं इत्यनेन सलिलबीजेन रेचकं कृत्वा, ठं इत्यनेन अमृतबीजेन पूरकं कृत्वा, उभाभ्यां कुम्भकं कृत्वा, पुनः ग्लौं इति भूबीजं स्वगळे स्मृत्वा काठिन्यं संभाव्य, पुनर्हृत्पद्मं चिद्रूपं तं विष्णुं ध्यायेत् ॥

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतेमौक्तिकानां
मालाक्लृप्तासनस्थस्फटिकमणिनिभो मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नः पुनीयादरिनळिनगदाशङ्खपाणिर्मुकुन्दः ॥

एवं ध्यात्वा वक्ष्यमाणक्रमेण उक्तैरच्युतादिभिः पञ्चभिर्मन्त्रैः दशकृत्वो न्यसेत् ॥ न्यासस्थानमुच्यते —

शिखाशिरोगण्डसघोणगण्ड-
घ्राणेषु दृक्कर्णकुचुकोष्ठयुग्मे ।
सव्यादिकण्ठा(र्णा)क्षिसचिसह्विनेत्र
चिह्नीषु फाले रसने च मन्त्री ॥

हृल्भिस्तु कण्ठे सभुजोपरार्ध-
शिष्टार्धयुग्मे ककुदि स्वपृष्ठे ।
कट्यां च पार्श्वद्वयजत्रुवक्षः-
क्रोडेषु नाभौ च नितम्बदेशे ॥

स्तनद्वयोरुद्वयगुह्यदेशस्फिक्जानुजङ्घायुगपद्द्वयेषु ।
गुल्फे सपार्ष्ण्यग्रिकपार्श्वपाणिपादद्वये च न्यसतु क्रमेण ॥

अत्रोद्दिष्टशिखास्थाने प्रणवः सर्ववाचकः ।

इति, शिखास्थाने प्रणवपूर्वकं मन्त्रं न्यसेदित्यर्थः । एवं पञ्चभिर्मूलमन्त्रैः दशा-

दृत्या सर्वेपूक्तस्थानेषु न्यस्त्वा, त्रिवारं तथा विन्यसेत् । पुनः प्रथमं प्रणवमुच्चार्य पश्चान्मातृकायाः प्रथमवर्णमुच्चार्य ततः पश्चात् प्रथमं मन्त्रं न्यसेत् । पुनः प्रणवं च मातृकाद्वितीयवर्णं च तदन्ते द्वितीयवर्णं च न्यसेत् । एवं त्रिवारं वा *न्यसेत् । एवं क्रमेण पूर्वोक्तस्थानेष्वेव विन्यसेत् । तत्र षोडशस्वरस्थाने प्राप्ते प्रणवषोडशस्वरान्ते पूर्णामृतात्मने इत्युच्चार्य तदन्ते तत्रोचितपञ्चामृत-मन्त्रपदं न्यसेत् । एवं त्रिवारं विन्यसेत् । एवं सहस्रवारं विन्यस्तं चेत् पापाद्रोगान्मुच्यते । पुनः प्रणवेन करतलं संमृज्य, प्रणवेनैवांगुलिन्यासं च कृत्वा पूर्वोक्तषडङ्गं च कृत्वा, प्रणवेन मूर्ध्नि वक्त्रे हृदि च न्यसेत् । पुनरपि ऋष्यादीन् पूर्ववत् कृत्वा पुनरपि ध्यायेत् ॥

मकुटकनकमालाहारकेयूरकाञ्ची-
कनकमणिविचित्रं चन्द्रकोटिप्रकाशम् ।
ललितललितमाद्यं मन्दहासेन्दुभासा
मुदितमुनिचकोरं चिन्तयेदम्बुजाक्षम् ॥ इति ।

अथ आरोग्यार्थं च समृद्ध्यर्थं चान्तरा वक्ष्यमाणक्रमेण ध्यायेत् । तत्प्रकारस्तु ग्रन्थबाहुल्यभयात् मूलग्रन्थैर्विना केवलमर्थतो लिख्यते —

अथारोग्यसमृध्यर्थमन्तरा चिन्तयेत्सुधीः ।

इत्यादिग्रन्थानामर्थः । मूलाधारे चतुरश्रं ध्यात्वा, तन्मध्ये चतुर्दलं पद्मं ध्यात्वा, तत्कर्णिकायां षट्कोणं ध्यात्वा, तन्मध्ये दीपाकारेण पञ्चामृतविष्णुं ध्यायेत् ॥

पुनर्नाभौ अर्धचन्द्राकारं अम्बुबिम्बं (अम्बुजं) ध्यात्वा तन्मध्ये अष्टदळपद्मं ध्यात्वा तत्कर्णिकायां चिद्रूपं सर्वशान्तिकरं शिवं पञ्चामृतविष्णुं ध्यायेत् ॥

---

१. विन्यसेत् इति ख, ङ मातृकापाठः ।

पुनर्हृदि द्वादशदळं पद्मं भानुकराकारं विचिन्त्य तन्मध्ये भानुरूपं लोकानुरञ्जनं पञ्चामृतविष्णुं ध्यायेत् ॥

पुनर्भ्रूमध्ये द्विदळं पद्मं ध्यात्वा तन्मध्ये जलबुद्बुदसन्निभं बीजं ध्यात्वा तन्मध्ये सर्वपापहरं शिवं पञ्चामृतविष्णुं ध्यायेत् ॥

पुनर्द्वादशान्ते अर्धचन्द्राकारं सलिल (ज) बिम्बं ध्यात्वा तन्मध्ये धवलमाराग्रप्रमाणं देहे अमृतधारया वर्षन्तमायुःप्रदं शिवं पञ्चामृतविष्णुं ध्यायेत् ॥

एवमान्तरिकध्यायेन ध्यात्वा, पुनः चक्रं शङ्खं जलूकामित्यादिना धन्वन्तरिविधानोक्तक्रमेण ध्यात्वा सहस्रं मूलमन्त्रं जपेत्। एवं दिनशः कृते आयुष्मान् भवेत् ॥

ध्यानान्तरमुच्यते—

द्वादशान्ते चन्द्रबिम्बं सूक्ष्मवृत्ताकारं ध्यात्वा, तन्मध्ये पञ्चामृतविष्णुं ध्यात्वा तस्य गुल्फे पीयूषधारया आर्द्ररूपं च प्रसन्नं भक्तवत्सलं च ध्यायेत्। तस्मात् शिरोरोगज्वरोन्मादपिळकादिभिः पित्तार्तिक्षुत्पिपासाभ्यश्च विमुच्यते। नात्र संशयः ॥

प्रयोगान्तरम्—

सितकमलनिषण्णं काशकुन्देन्दुगौरं
रथचरणदराढ्यं भावयेद्वासुदेवम्।
सितगरुडकरोद्यत्कुम्भपीयूषसिक्तं
सकलदुरितशत्रुक्ष्वेळकृत्यादिशान्त्यै ॥ इति ॥

अस्यार्थः — कमले स्थितं धवलदेहं चक्रशङ्खधरं च शुभ्रगरुडस्य कराभ्यां पीयूषमभिषेचयिष्यमाणं पञ्चामृतविष्णुं ध्यायेत् ॥ इति।

अथ दीक्षाकलशपूजाविधिः—

स्वविष्टरे समासीनो गुरुवन्दनपूर्वकम् ।
तालत्रयं च दिग्बन्धं कृत्वा च प्राणसंयमम् ॥

पूर्वोक्तन्यासमङ्गं च कृत्वा ध्यात्वाऽच्युतं प्रभुम् ।
अर्घ्येण पात्रं संयोज्य पुरतः स्थापयेद्बुधः ॥

गन्धपुष्पाक्षतादींस्तु क्षिपेत्तारेण वाग्यतः ।
मूलेन पूरयेत्कुम्भं कवचेनावकुण्ठयेत् ॥

जपेत् द्वादशवारं तु मूलमन्त्रेण मन्त्रवित् ।
अस्त्रेण रक्षयेद्भूयो द्रव्याण्यात्मानमेव च ॥

पुण्ड्रस्थानेषु सर्वेषु पूज्या द्वादशमूर्तयः ।
गन्धपुष्पादिभिर्मूर्ध्नि वासुदेवं पुनर्यजेत् ॥ इति ।

स्वविष्टरे सुखासीनं इत्यादिग्रन्थानामयमर्थः – गुरुस्सम्यगासने उपविश्य गुर्वादीन् संवन्द्य, सुदर्शनेन तालत्रयदिग्बन्धनाग्निप्राकारान् विधाय, प्रणवेन प्राणायामं कृत्वा, पूर्वोक्तप्रकारेण मूलमन्त्रन्यासं कृत्वा अङ्गऋष्यादींश्च कृत्वा ध्यात्वा जप्त्वा, सुदर्शनास्त्रमन्त्रेण कुम्भं संप्रोक्ष्य संशोध्य, पुरतः स्वस्तिकमण्डले धान्यादिपरिकीर्णे निधाय, तस्मिन् गन्धपुष्पादीन् प्रणवेन निक्षिप्य, कलादिचतुर्नवतिदेवतावाहनपूर्वकं शुद्धोदकैः मूलमन्त्रजपपूर्वकं कुम्भं परिपूर्य वस्त्रेण संवेष्टय, चूतादिस्तबकान् तन्मुखे निधाय, द्वादशवारं मूलमन्त्रं तं स्पृष्ट्वा जपेत्। पुनः सुदर्शनेन तं कुम्भं संरक्ष्य, तथैव पूजोपकरणानि आत्मानं च संरक्ष्य, पुनः, 'फालोदरहृद्गळकूपतले वामेतर-पार्श्वभुजादिगले । वामत्रयपृष्ठककुत्सु तथा मूर्धन्यपि' इत्येवमुक्तेषु स्थानेषु स्वशरीरे केशवादिद्वादशनामभिः जलगन्धैः समभ्यर्च्य, पुनः स्वमूर्ध्नि वासुदेवं जलगन्धैस्समर्चयेत् इति ॥

पुनस्तस्मिन् कुम्भे वैष्णवं पीठं संपूज्य पञ्चामृतमूर्तिं सपरिवारां

समावाह्य अङ्गन्यासादीन् विधाय, पीतवर्णस्वरूपं देवं ध्यात्वा अर्घ्यादि-भूषणान्तं मूलदेवतायाः, स्नानादिभूषणान्तं आवरणदेवतानां उपचारान्दत्वा, पुनस्सर्वत्र जलगन्धादिभिस्समर्चयेत् ॥

प्रथमं केशवादिद्वादशनामभिर्देवस्य ऊर्ध्वपुण्ड्रस्थानेषु समर्चयेत् । वासुदेवाय नम इति मूर्ध्नि समर्चयेत् । वैजयन्तीमालायै नमः । श्रीवत्साय नमः । कौस्तुभाय नमः । इत्येतान् देवस्य तत्तत्स्थानेषु उरःकण्ठादिषु समर्चयेत् ॥

पुनरङ्गैः प्रथमावृतिः । पुनः, अनन्ताय० गोविन्दाय० विष्णवे० अमृताय० इति पूर्वादिदिक्षु । कान्त्यै० लक्ष्म्यै० तुष्ट्यै० पुष्ट्यै० इति आग्नेयादिषु कोणेषु । एवं द्वितीयावृतिः । चक्राय० शङ्खाय० गदायै० पद्माय० चापाय० असये० मुसलाय० (वरदाय०) इति तृतीयावृतिः । ध्वजाय० पक्षीन्द्राय० चन्द्राय० आदित्याय० इति पूर्वादिदिक्षु । विघ्नाय० (विघ्नेशाय०) आर्याय० दुर्गायै० विष्वक्सेनाय० इति आग्नेयादिविदिक्षु । एवं चतुर्थ्यावृतिः । इन्द्रादिभिः पञ्चमी । वज्रादिभिः षष्ठी । एवं कलशे समभ्यर्च्य पायसं च निवेद्य, अग्नौ वैश्वदेवं च हुत्वा, पार्षदेभ्यो बलिं दत्वा देवं नत्वा आचम्य देवसन्निधौ गत्वा निवेद्यं विसर्जयेत् । पुनरापोशनं दत्वा निर्माल्यं विष्वक्सेनाय समर्पयेत् । पुनर्जलगन्धपुष्पधूपदीपैः समभ्यर्च्य, पुष्पाञ्जलिं कृत्वा, पुनर्मूलमन्त्रेण जलगन्धादिभिः शिष्यदेहं विशोध्य, तं कलशेनाभिषिञ्चेत् । पुनः स शिष्यः शुक्लवस्त्रद्वयं संधार्य गुरुमुपसृर्प्य नत्वा (नमेत ।) उपसन्नाय तस्मै शिष्याय गुरुः श्रीपञ्चामृतमन्त्रमुपदिशेत् । पुनः (शिष्यः) पञ्चलक्षं जप्त्वा तिलैः दशांशं वा पञ्चसहस्रं वा हुनेत् पुरश्चरणार्थम् ॥

अथ प्रयोगविधिः —

जुहुयात्पञ्चसहस्रं क्षीरेण ज्वलितेऽनले ।
ज्वर इत्यादिकं हित्वा शान्तिं पुष्टिमवाप्नुयात् ॥

प्रयोगान्तरम् —

घृतेन धनधान्याप्त्यै पायसेन समृद्धये ।
दीर्घायुषे च दूर्वाभिः सिद्धार्थैः शत्रुशान्तये ॥

यद्यदिच्छति तत्सर्वं जपमात्रेण सिध्यति ॥ इति ॥

सिद्धार्थ-मोहरया ෴

कलशविधानेऽत्रानुक्तं सर्वं पूर्वोक्तधन्वन्तरिविधानादप्याहर्तव्यम् ॥ इति श्रीपञ्चामृतविधिस्समाप्तः ॥

अथ अर्धनारीश्वरचिन्तामणिमन्त्रविधानमुच्यते —

काश्यप ऋषिः । अनुष्टुप् छन्दः । उमेशो देवता । अर्धनारीश्वरो वा देवता । रं बीजम् । ओं शक्तिः । रं हृदयम् । कं शिरः । पं शिखा । मं कवचम् । रं नेत्रम् । यं अस्त्रम् । ध्यानम् —

अहिशशिधरगङ्गाबद्धतुङ्गात्तमौलिः
त्रिदशगणनतांघ्रिः त्रीक्षणः स्त्रीविलासः ।
भुजगपरशुशूलान् खड्गवह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याचिरं वः ॥

उमेशपक्षे इदं ध्यानम् । अर्धनारीश्वरपक्षे तु ध्यानान्तरम् —

हावभावललितार्धनारिकं भीषणार्धमथवा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये ॥

ध्यानान्तरम् —

अथवा षोडशशूलव्यग्रभुजा त्रिनयनाऽहिनद्धाङ्गी ।
अरुणांशुकानुलेपनवर्णाभरणा च भगवती ध्येया ॥

इदं तु क्रूरप्रयोगे ध्यानम् ॥ क्ष्म्र्यूँ (र् क् प् म् र् य् औ ऊं, इत्येतेषां संघातात्मकोक्षरः) इति मन्त्रः ॥

अनलकरमरेफप्राण*संघातवाम-
श्रुतिहिमरुचिखण्डैर्मण्डितो मन्त्रराजः ॥

इति मन्त्रोद्धारः ॥ रेफ क प म पुनः रे फ य औ ऊं इत्येतेषां वर्णानां संयोगो मन्त्रः। सर्वकामफलप्रदः। मूकानां वाक्सिद्धिप्रदश्च । लक्षं जपेत् । त्रिमधुराद्रैस्तिलैस्तण्डुलैश्चायुतं हुनेत् । पुरश्चरणाहोमः ॥

अथ पूजा –

प्रासादोक्ते पीठे समावाह्य समर्चयेत् । पूजाविधिस्तु द्वेधा । तत्र(अयं) प्रथमो विधिः –

अङ्गैः प्रथमावृतिः । वृं वृषाय नमः । क्षं क्षेत्रपालाय नमः । चं चण्डेश्वराय नमः । दुं दुर्गायै नमः । मं महाकालाय नमः । नं नन्दिने नमः । गं गणेश्वराय नमः । सं सैन्यपालाय नमः ८ इति द्वितीयावृतिः । मातृभिस्तु तृतीया । लोकेशैः चतुर्थी । द्वितीयो विधिरुच्यते –

रं नमः । कं नमः । पं नमः । मं नमः । रं नमः । यं नमः । औं नमः । ऊं नमः । एतैर्मन्त्रवर्णैरष्टदिक्षु प्रथमावृतिः । मातृभिर्द्वितीया । लोकेशैस्तृतीया ॥

अथास्य मन्त्रस्य प्रयोगविशेषः –

कात्पूर्वं हसलिपिसंयुतं जपादौ
जप्तॄणां प्रवरमितीह केचिदाहुः ॥

अयमर्थः – ककारात्पूर्वं प्रथमरेफं त्यक्त्वा तस्य स्थाने ह् स् क्ष्म्र्यौऊं इति जप्तॄणां जपः वरं, इति केषाञ्चिन्मतम् ॥ प्रयोगान्तरम् –

* सद्यान्त इति ख ग घ मातृकापाठः सत्यान्त इति ङ मातृकायां शोधितः पाठः ।

प्रासादाद्ययुतजपेन मंक्षु कुर्यात्
आवेशादिकमपि नीरुजां च मन्त्री ॥

प्रथमरेफं त्यक्त्वा तस्य स्थाने हौं क्ष्म्यौं इत्येवं जपादिना नीरोगिणां स्वस्यावेशं कुर्यात् ॥ इति ॥

प्रयोगान्तरम्—

शिरसोऽवतरन्निशेशबिम्बे
स्थितमज्भिर्वृतमागळं सुधार्द्रम् ।
अपमृत्युहरं विपज्वराप-
स्मृतिविभ्रान्तिशिरोरुजापहं च ॥

अयमर्थः— स्वशिरसस्तावत् किञ्चिचन्द्रमण्डलमवतरध्यात्वा तस्मिन् मण्डले स्वात्मानं स्थितमिति ध्यायेत् । अजभिवृतं च आगळं सुधया आर्द्रीकृतं च ध्यायेत् । अपमृत्युहरणादिफलं भवति ॥

प्रयोगान्तरम्—

निजवर्णविकीर्णकोणवैश्वानरगेहद्वितयावृततिकोणे ।
विगतस्वरवीतमुत्तमाङ्गे स्मृतमेतत् क्षपयेत् क्षणात् ग्रहार्तिम् ॥

अयमर्थः— प्रथमं षट्कोणं विलिख्य षट्सु कोणेषु मन्त्रस्य रेफादिवर्णान् विलिख्य, पुनः षट्कोणमध्ये त्रिकोणं विलिख्य तन्मध्ये षोडशस्वरान् सबिन्दुकान् प्रतिलोमगतान् वृत्ताकारेण विलिखेत् । एवं स्वस्योत्तमाङ्गे स्मरेत् । ग्रहपीडा नश्यति ॥

प्रयोगान्तरम्—

वह्नेर्बिम्बे वह्निवत्प्रज्वलन्तं न्यस्त्वा बीजं मस्तके ग्रस्तजन्तोः ।
ध्यात्वाऽऽवेशं कारयेत् बन्धुजीवं तज्जप्तं वा सम्यगाघ्राण एव ॥

अयमर्थः — भूतग्रस्तस्य पुरुषस्य मस्तके त्रिकोणं लिखित्वा तदन्तरग्निवत् प्रज्वलन्तं मन्त्रबीजं लिखित्वा तादृशं ध्यायेत् । एवं कृते आविश्य सकलमुक्त्वा गच्छति भूतसंघः । अथवा एतद्बीजजप्तं बन्धुजीवमाघ्रापयेत् । तेनाप्यावेशो भवति ॥

बन्धुजीवं–उचिचिलन्दन् ॥

शुक्लादिः शुक्लभाः पौष्टिकशमनविधौ कृष्टिवश्येषु रक्तो
रक्तादिक्षोभसंस्तोभनविधिषु भ(ह)कारादिको हेमवर्णः ।
धूम्रोऽङ्गामर्दनोच्चाटनविधिषु समीरादिकोलादियुक्तः
पीताभः स्तम्भनादौ मनुरतिविमलो मुक्तिभाजामवादिः ॥

कृष्णाभं प्राणगेहस्थितमथ नयनध्यातमान्ध्यं विधत्ते
बाधिर्यं कर्णरन्ध्रेर्दितमपि वदने कुक्षिगं शूलमाशु ।
मर्मस्थाने समीरं शिरसि सपदि वा दुस्सहं शीरिरोगं
वाग्रोधं कर्णरन्ध्रेऽवनिवृतमथ तन्मण्डले बीजमेतत् ॥

प्रालेयत्विषि च स्वराप्तमिदं नेत्रे स्मृतं तद्रुजं
योनौ वामदृशां स्रवत्तिमथो कुक्षौ च शूलं जपेत् ।
विस्फोटे सविषे ज्वरे तृषि तथा रक्तामये विभ्रमे
दाहे शीर्षगदे स्मरेद्विधिमिमं संतप्तने मन्त्रवित् ॥

शुक्लादिः शुक्लभाः इत्यादिग्रन्थानामयमर्थः — शुक्लः सकारः । मन्त्रवर्णप्रथमं रेफं त्यक्त्वा तस्य स्थाने सकारः । तत्पूर्वं स्क्ष्म्यौँऊं इत्येवं संयोज्य चिन्तामणिमन्त्रं शुक्लस्वरूपेण ध्यायेन्मस्तके पौष्टिकफले च शमनफले च ॥

पुनः न्क्ष्म्यौँऊं इत्येवं रक्तपदवाच्यरेफादि संयोज्य चिन्तामणिमन्त्रं

रक्तवर्णं ध्यायेन्मस्तके आकर्षणवश्यादिषु । [1]हक्ष्म्र्यौं इत्येवं हकारपूर्वकं हेमवर्णं ध्यायेन्मस्तके संक्षोभणसंस्तम्भनादिषु । यक्ष्म्र्यौं इत्येवं वायुबीजपुरस्सरं मन्त्रं धूम्रवर्णं ध्यायेन्मस्तके अङ्गामर्दोच्चाटनकर्मणि । लक्ष्म्र्यौं इत्येवं पृथिवीपुरस्सरं मस्तके ध्यायेत् स्तम्भनकर्मणि । वक्ष्म्र्यौं इत्येवं वरुणपुरस्सरं मन्त्रं धवळं मस्तके ध्यायेत् मोक्षार्थम् । रक्ष्म्र्यौं इत्येवं अनलपुरस्सरं [2]कृष्णाभं नयने ध्यायेत् नयनयोरान्ध्यं भवति । एतद्बीजं कर्णरन्ध्रे ध्यायेत् बाधिर्यं भवति । एवमेव वदने ध्यातमर्दितं भवति । अर्दितं—मुखरोगविशेषः । एवमेव कुक्षौ ध्यातं शूलं नाशयेत् । एवं मर्मणि ध्यातं वायुं नाशयेत् । एवमेव शिरसि ध्यातं शीर्षरोगं शमयेत् । एवमेव कण्ठनाळचतुरश्रे भूबीजस्थं ध्यातं वाग्रोध करोति । नेत्रे ठकारमध्ये स्वराढ्यमिदं बीजम् ध्यातं नयनरोगं शमयति । एवमेव स्त्रीयोनौ स्रवन्तिं रक्तस्रावं शमयति । कुक्षौ ध्यातं चेत् शूलं शमयेत् । एवमेव विस्फोटे सविषे ज्वरे तृषि तथा रक्तामये विभ्रमे दाहे शीर्षगदे स्मरेत् तान् शमयेत्॥

प्रयोगान्तरम्—

[3]निजनामगर्भमथ बीजमित्यादीनामयमर्थः— साधकनामगर्भमिदं बीजं योनिसुषिरे ध्यायेत् । वशगा भवति । निजशिश्नशिरसीत्यादीनामयमर्थः। निजलिङ्गशिरसि बीजमन्त्रं स्मृत्वा योनौ प्रवेशयेत् तां योनिं द्रावयेत् । तां स्त्रियं वशयेच्च ॥

प्रयोगान्तरम्—

---

१ यथामातृकमत्र पाठो विलिखितः । तत्तद्बीजोपेतस्य कूटाक्षरमयस्य मन्त्रस्य स्वरूपं तु पण्डितैरवहितैर्वेद्यम् ॥

२ षट्कोणस्थं कृष्णाभं इति ख ग घ ङ पाठः ।

३ अत्र मातृकासु निजनामगर्भमित्यादिश्लोको न दृश्यते ॥

मधुरत्रयसंयुतेन शालीरजसा पुत्तलिकां विधाय तेन ।
मनुना जुहुयात् त्रिधा विभज्य त्रिदिनं यस्य कृते वशी भवेत्सः ॥

अयमर्थः — पुत्तळीति साध्यस्य प्रतिकृतिः । शालिचूर्णेन पुत्तलिकां संपाद्य तां त्रिधा विभज्य तां तिदिनैः हुनेत् अनेन चिन्तामणिमन्त्रेण ॥

प्रयोगान्तरम् —

विषपावकोद्यदभिधानगतं ठगतं कुकोणगतलाङ्गलिकम् ।
अहिपत्रजप्तपरिकल्पमिदं शिरसो रुजं प्रशमयेद्दनात् ॥

अयमर्थः — पूर्वं मकारं विलिख्य तदन्तरग्निबीजं विलिख्य तदन्तस्साध्यनाम विलिखेत् । तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु ठंकारं विलिखेत् । एवं ताम्बूलपत्रे लिखित्वा जप्त्वा अद्यात् । शिरोरोगान् शमयेत् ॥

प्रयोगान्तरम् —

कृत्वा वह्नेः पुरमनु मनुं बन्धुजीवेन तस्मि-
न्नाधायाग्निं विधिवदभिसंपूज्य चाज्यैश्शताख्यम् ।
त्रैलोहाख्ये विहितघृतसंपातमष्टोत्तरं तत्
हुत्वा जप्तं दुरितविषवेताळभूतादिहारि ॥

अयमर्थः — त्रिकोणं विलिख्य तदन्तः मन्त्रबीजं बन्धुजीवरसेन तस्मिन्नग्निं समाधाय संपूज्याज्यैश्शतवारं हुत्वा, प्राक् मातृकाविधानोक्तत्रिलोहनिर्मितांगुलीयके सम्पातं संगृह्याष्टोत्तरशतं जप्त्वा धारयेत् । दुरितवेताळादिशान्तिर्भवति । बन्धुजीवं—उच्चिचिलन्दन् ॥

प्रयोगान्तरम् —

साध्याख्यागर्भमेनं लिखतु शिखिपुरे कर्णिकायां षडश्रं
बाह्येऽश्रिष्वङ्गमन्त्रान्दळमनु परितो बीजवर्णान्विभज्य ।

भूयोऽधः कादियादी त्रिवृतिषु च क्षुगेहाश्रके नारसिंहं
तस्मिन्कार्यो यथावत्कलविधिरयं सर्वरक्षाकरस्स्यात् ॥

अयमर्थः – त्रिकोणं विलिख्य तदन्तश्चिन्तामणिबीजं साध्यनामगर्भं विलिखेम् । पुनर्बहिः षट्कोणेष्वङ्गमन्त्रान् विलिख्य, बहिरष्टदळं विलिख्य, तेषु दळेषु चिन्तामणिमन्त्रस्याष्टौ वर्णान् पूजाविधानोक्तान् विलिख्य, पुनर्वृत्तत्रयं विलिख्य, स्वरैः प्रथमे वेष्टयेत् । कादिभिर्द्वितीये वेष्टयेत् । यादिभिस्तृतीये वेष्टयेत् । पुनश्चतुरश्रं विलिख्य तत्कोणेषु नृसिंहबीजं विलिखेत् इति ॥

प्रयोगान्तरम् –

टान्ते लिख्यात्कलाभिः परिवृतमनलावासयुग्मेन वह्नि-
द्योतत्कोणेन बाह्ये तदनु सवितृबिम्बेन काद्यर्णभाजा ।
तद्बाह्ये क्ष्मापुराभ्यां लिखितनृहरियुक्ताश्रकाभ्यां तदेतत्
यन्त्रं रक्षाकरं स्याद्ग्रहभयविषमक्ष्वेळजूर्त्यादिरोगान् ॥

अयमर्थः – षट्कोणं विलिख्य तत्कर्णिकायां ठं इति विलिख्य, तन्मध्ये चिन्तामणिमन्त्रं स्वरैरावृतं विलिख्य षट्सु कोणेषु अनलबीजं विलिख्य बाह्ये वृत्तं विलिख्य कादिभिर्वर्णैर्वेष्टयेत् ॥ पुनश्चतुरश्रद्वयं विलिख्य तत्कोणेषु नृसिंहबीजं विलिखेदिति ॥

प्रयोगान्तरम् –

बिम्बद्वन्द्वे कृशानोर्विलिखतु मणिमेनं ससाध्यं तदश्रे-
ष्वग्न्यादीन्व्यञ्जनार्णान्स्वरयुगळमथो सन्धिषट्के यथावत् ।
तारावीतं च बाह्ये कुगृहपरिवृतं गोमयात्रोचनाभ्यां
लाक्षाबद्धं निबध्याज्जपमहितमिदं साधु साध्योत्तमाङ्गे ॥

लक्ष्म्यायुःपुष्टिकरं परं च सौभाग्यवश्यकृत्सततम् ।
चोरव्याळमहोरगभूतापस्मारहारि यन्त्रमिदम् ॥

अयमर्थः — षट्कोणं विलिख्य, तत्कर्णिकायां ससाध्यं चिन्तामणिबीजं विलिख्य षट्कोणेषु चिन्तामणिमन्त्रे यानि व्यञ्जनाक्षराणि रेफ-ककार पकार-मकार-रेफ-यकाराणि तानि षडालिखेत् । पुनः षट्कोणद्वन्द्वानां सन्धौ अभितः मन्त्राक्षरे शिष्टचतुर्दशाक्षरपष्टस्वरयुगळं आलिखेत् । तद्बहिः प्रणवेन वेष्टयेत् । तद्बहिश्चतुरश्रं विलिखेत् । एतद्यन्त्रं पटादौ गोमयाम्बुगोरोचनाभ्यां विलिख्य लाक्षयाऽभिवीतं कुर्यात् । लाक्षा जतुः । पट्टे चेल्लेखन्या संलिख्य पश्चादेतैर्जलैर्विलिखेत् । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम् —

साध्याख्याकर्मयुक्तं दहनपुरयुगे मन्त्रमेतत्तदश्रि-
प्वङ्गज्वालाश्च बाह्ये निगतरुविटपे साग्रशाखे लिखित्वा ।
जप्त्वाऽष्टोर्ध्वं सहस्रं नृहरिकृतधिया स्थापयेत्तत्र शत्रु-
व्याघ्राहिक्रोडचोरादिभिरपि च पिशाचादयो न व्रजन्ति ॥

अयमर्थः — षट्कोणं विलिख्य, तत्कर्णिकायां ससाध्यं चिन्तामणिबीजं विलिख्य, षट्सु कोणेषु अङ्गं मूलमन्त्रस्यावयवं सबिन्दुकं रेफं विलिख्य, बाह्ये वृत्तं विलिख्य, षट्कोणदेशवृत्तरेखां स्पृष्ट्वा अग्निज्वालाकारात्रिभङ्गिरेखाः कुर्यात् । एतद्यन्त्रं साग्ररेखाकारस्फुरवृक्षे फलकीकृते लिखित्वा नृहरिबुध्या स्थापयेत् ॥ इति ॥ विषतरु—எட்டி.

अथार्धनारीश्वरमन्त्रप्रसङ्गात् अर्धनारीश्वरदैवत्यो व्याख्यामन्त्रो विलिख्यते —

अङ्गऋष्यादिध्यानानि अर्धनारीश्वरचिन्तामणिमन्त्रोक्तान्येव । ओं ह्रीं ह्रूं ज्ञां विद्याराशिस्तम्भे(न्मे)धस्फुरद्भृङ्गिगोद्ध्वणउमासार्धशरीराय नमस्ते परमात्मने ज्ञां ह्रूं ह्रीं ओं ॥ इति मन्त्रः । अनेन मन्त्रजपेन व्याख्यानसामर्थ्यं भवति ॥

अथ चण्डेश्वरमन्त्रविधानमुच्यते —

त्रित ऋषिः । अनुष्टुप् छन्दः । चण्डेश्वरो देवता । चं बीजम् । फट् शक्तिः । दीप्तफट् हृदयम् । ज्वलफट् शिरः । ज्वालिनीफट् शिखा । तटफट् कवचम् । हनफट् नेत्रम् । सर्वज्वलिनि फट् अस्त्रम् ।

अव्यात्कपर्दकलितेन्दुकलः करात्त-
शूलाक्षसूत्रककमण्डलुटङ्करंशः(हस्तः) ।
रक्ताभवर्णवसनोऽरुणपङ्कजस्थो
नेत्रत्रयोल्लसितवक्त्रसरोरुहो वः ॥

ऊर्ध्वफट् इति मन्त्रः ॥ वश्यैश्वर्यफलप्रदः । त्रिलक्षं जपेत् । त्रिमधुरसिक्तैस्तिलतण्डुलैः दशांशं पुरश्चरणहोमः, व्याघातैर्वा ॥

व्याघातं—கொன்றை.

अथ पूजा –

प्रासादोक्तशैवपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । मातृभिः द्वितीया । लोकेशैस्तृतीया ।

अथ प्रयोगः—

कृत्वा पिष्टेन शाल्याः प्रतिकृतिमनलं चापि काष्ठश्चिताना-
माधायारभ्य पुंसस्त्रिमधुरलुलितां दक्षिणांगुष्ठदेशात् ।
छित्वा छित्वाष्टयुक्तं शतमथ जुहुयाद्योषितो वामपादात्
विप्रादीनां चतुर्णां वशकरमनिशं मन्त्रमेतद्धुतान्तम् ॥

तत्र स्त्रियः प्रतिकृतिश्चेत् वामपादादारभ्य पुंपश्चेत् दक्षिणांगुष्ठादारभ्य छित्वा छित्वा हुनेत् इत्यर्थः ॥

प्रयोगान्तरम्—

अनुदिनमष्टशतं यो जुहुयात्पुष्पैरनेन मन्त्रेण ।

सप्तदिनैस्स तु लभते वासस्तद्वर्णसंकाशम् ॥

चण्डचण्डाय विद्महे चण्डेश्वराय धीमहि । तन्नश्चण्डः प्रचोदयात् । इति चण्डेशगायत्री ॥ चं इति बीजम् ॥

अथ चण्डेश्वरमन्त्रप्रसङ्गात् क्षेत्रपालमन्त्रोपि लिख्यते —

ऋष्यादयः प्रसिद्धाः ॥ ओं नमो भगवते क्षेत्रपाल*व्याघ्राय सर्वभूषणाय कपालडमरुखड्वाङ्गत्रिशूलधारिणे ह्रीं ह्रीं हुं फट् स्वाहा ॥ अनेन मन्त्रेण भूतभविष्यत्ज्ञानं भविष्यति ।

अथातीतादिज्ञानप्रदक्षेत्रपालप्रसङ्गात् अतीतादिज्ञानप्रदकर्णविद्यामन्त्रोपि लिख्यते —

ऋष्यादयः प्रसिद्धाः । ह्रां इत्यादिषडङ्गम् ।

ध्यानम् —

कनकैर्वज्रवैडूर्यरत्नैर्मरतकैरपि ।
कृतकुण्डलहाराद्यैर्भूषिता नित्यशो भवेत् ॥

ह्रीं हे कर्णविद्ये मम कर्णविवरमनुप्रविश्यातीतानागतवर्तमानं मम कर्णे वद वद स्वाहा ॥

इति श्रीप्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्र-
विरचिते सप्तविंश. पटलः ॥



* व्याघ्राय इति ख ग घ ङ पाठः ।

# अथाष्टाविंशः पटलः ॥

अथ गायत्रीमन्त्रविधानमुच्यते —

पूर्वं गायत्रीन्यासप्रकार उच्यते । तत्रापि पूर्वं प्रणवस्य ऋष्यादीन् कुर्यात् । प्रजापति ऋषिः । देवीगायत्री छन्दः । परमात्मा देवता । प्रणवं यथाशक्ति जपित्वा, पुनः व्याहृतेः ऋष्यादीन् विन्यसेत् । जमदग्नि भरद्वाज भृगु गौतम काश्यप विश्वामित्र वसिष्ठा ऋषयः । गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्ती त्रिष्टुप्जगत्यः छन्दांसि । सप्तार्चिरनिलस्सूर्यो वाक्पतिर्वरुणो वृषा विश्वेदेवाः देवता(ताः) । ओं भूः, ओं भुवः, ओं सुवः, ओं महः, ओं जनः, ओं तपः ओं सत्यं, इति सप्त व्याहृतयः । एताभिर्व्याहृतीभिर्हृन्मुखांसोरुयुग्मेषु सोदरेषु क्रमान्न्यसेत् । एवं व्याहृतीभिर्न्यस्त्वा यथाशक्ति जपित्वा,

विश्वामित्र ऋषिः । गायत्री छन्दः । सविता देवता । एवं गायत्र्या ऋष्यादीन् न्यस्त्वा, पुनः, गायत्रीशिरसः ब्रह्मा ऋषिः । देवी गायत्री छन्दः । परमात्मा देवता । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्स्व(स्सुव)रों इति गायत्रीशिरः । अस्य ऋष्यादीनेवं न्यस्त्वा, पुनरपि हृन्मुखांसोरुयुग्मेषु सोदरेषु सतारव्याहृतीः न्यसेत् । ओं भूः ओं भुवः इत्यादि । पुनस्सप्त व्याहृतीरुच्चार्य, ततः प्रणवं, ततो गायत्रीं, ततश्शिरः ॥

एवं क्रमेण त्रिवारं जप्त्वा, पुनर्व्याहृतीभिर्व्यापयेत् । पुनश्शिरोयुत-गायत्र्या व्यापयेत् । पुनः अर्थसंहृतिपुरस्सरं, गायत्रीं सप्तव्याहृतिप्रणव-पूर्विकां जप्त्वा, पुनर्व्याहृतिः, गायत्री, तच्छिरश्च, एवं त्रयमपि त्रिवारं, ऋजुकायोऽनन्यधीर्निरुच्छ्वासः प्राणानायम्य, पुनष्षोडशपटले महागणपति-विधाने उक्तेन प्रकारेण, महागणपतिमन्त्रऋष्यादिपुरस्सरं ध्यात्वा, गमित्येतत् बीजं चतुश्चत्वारिंशद्वारं जपित्वा, गणानां त्वेत्यृचमेकवारं जप्त्वा, मालामन्त्र-पुरस्सरं मनुं चतुर्वारं जपेत् । मालामन्त्रः महागणपतिमन्त्रः मनुरिति । ओं श्रीं ह्रीं क्लीं ग्लौं गं महाविभूते वरे वरदे सर्वजनं मे वशमानय स्वाहा । इति मनुः ॥

पुनर्मातृकाविधानोक्ताङ्गऋष्यादिपुरस्सरं मातृकान्यासं त्रिवारं विन्यसेत्। पुनस्सप्तग्रहान् विन्यसेत्। अर्काय नमः। लोहिताय नमः। शुक्राय० बुधाय० बृहस्पतये० शनैश्चराय० शीतांशवे० वदने च बाहुपादद्वितये जठरे च वक्षसि न्यसेत्। एवं ग्रहन्यासं कृत्वा, पुनर्गायत्र्या अक्षरन्यासं कुर्यात्॥

पादसन्धिचतुष्कान्धुनाभिहृद्गळदोर्द्वयी।
सन्ध्यास्यनासागण्डाक्षिकर्णभ्रूमस्तकेष्वपि॥

वारुणैन्द्रययाम्यप्रागूर्ध्वाङ्घ्रिषु मुखेषु च।
क्रमेण वर्णान् विन्यसेत् गायत्र्या मन्त्रवित्तमः॥

एवमक्षरन्यासं कृत्वा, पादन्यासं कुर्यात्।

शिरोभ्रूमध्यनयनवक्त्रकर्णेषु वै क्रमात्।
हृन्नाभिगुह्यजान्वाख्यपादेष्वपि पदान् न्यसेत्॥

पुनर्गायत्र्या अङ्गन्यासं कुर्यात्। ब्रह्मणे नमः हृत्। विष्णवे नमः शिरः। रुद्राय नमः शिखा। ईश्वराय नमः कवचम्। सदाशिवाय नमः नेत्रम्। सर्वात्मने नमः अस्त्रम्॥

अथ गायत्रीयन्त्रमपि हृदि भावनार्थं कल्पान्तरोक्तमत्र योग्यतावशात् लिख्यते—

शक्तेः बाह्यकृशानुकोणविलसद्भूरादिसत्कर्णिकं
वस्वब्जे स्वरयुग्मकेसरदळे वर्गैस्त्रिवर्णैर्मनोः।
चूडामन्त्रतुरीयवेष्टितमिदं क्ष्माकोणवाराङ्कितं
गायत्र्याः कथितं महःप्रभृतिभिर्यन्त्रं तु दिक्ष्वङ्कितम्॥

अस्यार्थः—प्रथमं त्रिकोणं विलिख्य तत्कर्णिकायां भुवनेशीं विलिख्य, त्रिषु कोणेषु भूर्भुवः स्वः इत्येतत्पदत्रयं विलिख्य, तद्बहिरष्टपत्रं पद्मं विलिख्य, तस्य केसरेषु स्वरद्वन्द्वं विलिख्य, दळमध्ये कादिपञ्चवर्गान्

यशळादित्रिवर्गांश्च विलिख्य, दळाग्रेषु गायत्रीवर्णान् त्रिशस्त्रिशो विलिख्य, तद्बहिर्वृत्तद्वयं विलिख्य, प्रथमे ओमापो ज्योतिरित्यादिशिरोमन्त्रेण वेष्टयेत् । द्वितीये वृत्ते परोरजसेत्यादि तुर्यगायत्र्या, वक्ष्यमाणया वेष्टयेत् । तद्बहिः चतुरश्रं विलिख्य, तस्य कोणेषु प्रणवं विलिख्य, दिक्षु, महः, जनः, तपः सत्यं इत्येतानि पदानि विलिखेत् । इति ॥

अथ ध्यानम् —

मन्दाराह्वयरोचनाञ्जनजपाखाभैर्मुखैरिन्दुमत्
रत्नोद्यन्मकुटाङ्गसन्ततचतुर्विंशार्णचित्रातनुः ।
अम्भोजेऽरिदराह्वयौ गुणकपालाख्यौ च पाशांकुशे-
ष्टाभीती दधती भवेद्भवदभीष्टोत्तारणी तारणी ॥

तत्र गुण इति त्रिशूलम् । एवं ध्यात्वा त्रिवारं सप्तव्याहृतीरभ्यस्य, गायत्रीशिरश्च त्रिवारमभ्यस्य पुनर्व्याहृतित्रितययुतां गायत्रीं यथाशक्ति समभ्यसेत् नित्यशः ॥

अथ पूजार्थं पीठविधानमुच्यते —

त्रिगुणितयन्त्रं विलिखेत् । तदुच्यते —

शक्त्याविस्साध्यमिन्द्रानिलनिऋतिगबीजाभिबद्धं पुरेऽग्नेः
तत्कोणोल्लासिमायं हरिहरविलसद्दण्डमेभिस्समायैः ।
वर्णैश्चावेष्टितं तत्त्रिगुणितमिति विख्यातमेतत्सुयन्त्रं
स्यादायुष्यं च वश्यं धनकरममितश्रीप्रदं कीर्तिदं च ॥

इति प्राक् नवमे पटले भुवनेशीविधाने उक्तम् । अस्मिन् त्रिगुणितयन्त्रे सौरपीठं प्राक् चतुर्दशपटले प्रोक्तक्रमेण समर्चयेत् । अस्मिन् सौरपीठे गायत्रीमूर्तिं समावाह्य समर्चयेत् ॥

गायत्र्यै० सावित्र्यै० सरस्वत्यै० इति प्राग्रक्षोवायुदिक्षु, पुनर्ब्रह्मणे

विष्णवे रुद्रायेति वह्निवरुणेशादिक्षु समर्चयेत्। इति प्रथमावृतिः। पुनः आदित्याय इति मध्ये। रवये० भानवे० भास्कराय० सूर्याय० इति दिक्षु। उषायै० प्रज्ञायै० प्रभायै० सन्ध्यायै० इति विदिक्षु। इति द्वितीयावृतिः। प्रह्लादिन्यै० प्रभायै० नित्यायै० विश्वंभरायै० विलासिन्यै० प्रभावत्यै० जयायै० शान्त्यै० ८ इति तृतीयावृतिः। कान्त्यै० दुर्गायै० सरस्वत्यै० विद्युद्रूपायै० विशालायै० ईशायै० व्यापिन्यै० विमलायै० ८ इति चतुर्थावृतिः। तमोपहारिण्यै० सूक्ष्मायै० विश्वयोन्यै० जयावहायै० पद्मालयायै० परायै० शोभायै० भद्ररूपायै० ८ इति पञ्चम्यावृतिः। अरुणाय नम इत्यन्ताभिर्मातृभिष्षष्ठी। आदित्यादिनवग्रहैस्सप्तमी। इन्द्रादिभिरष्टमी॥

एवमुक्ते पीठे पञ्चगव्यैर्वा क्षीरद्रुमादिचर्मकथितजलैर्वा दीक्षाकलशं संपूर्य, एवमुक्तप्रकारेण संपूज्य समभिषिच्य, चतुर्विंशतिलक्षं जपित्वा, पायस-तिल-घृत-दूर्वा-क्षीरद्रुमसमिद्भिरेकैकं त्रिसहस्रसंख्यया हुनेत्। पुरश्चरणाहोमः॥

अथ प्रयोगः—

अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात्।
दुरितोच्छेदनविधये मन्त्री दीर्घायुषे च विशदमतिः॥

प्रयोगान्तरम्—

आयुष्कामो जुहुयात्पायसहविराज्यकेवलाज्यैश्च।
दूर्वाभिस्सतिलाभिस्सर्वैस्त्रिसहस्रसंख्यकं मन्त्री॥

अयमर्थः—पायसेन च आज्यसिक्तेन हविषा च केवलाज्यैश्च दूर्वाभिश्च तिलैश्च पृथक् पृथक् त्रिसहस्रसंख्यं हुनेत् इति॥

प्रयोगान्तरम्—

अथ तु त्रिमधुरसिक्तैररुणैर्जुहुयात्सरोरुहैरयुतम्।

नष्टश्रीरपि भूयो भवति मनोज्ञं समन्दिरं लक्ष्म्याः ॥

प्रयोगान्तरम् —

अन्नाद्यर्थमन्त्रैरपि पालाशैर्ब्रह्मवर्चसे जुहुयात् ।

अयुतसंख्यमित्यभिप्रायः ॥

अथ गायत्रीमन्त्रप्रसङ्गात् तुरीयाष्टाक्षरमन्त्रोपि गायत्र्याश्चतुर्थः पादः कल्पान्तरोक्तोऽत्र योग्यतावशात् लिख्यते —

ब्रह्मा ऋषिः । गायत्री छन्दः । परमहंसो देवता । फं बीजम् । परश्शक्तिः । चं कीलकम् । मोक्षार्थे (विनियोगः) । परः हृत् । रजसे शिरः । सावच्छिखा । ओं कवचम् । परोरजसे नेत्रम् । सावदों अस्त्रम् ॥ ध्यानम् —

यद्देवासुरपूजितं मणिनिभं सोमार्कतारागणैः
पुन्नागाम्बुजनागपुष्पवकुलैर्व्यासैस्सुरैरर्चितम् ।
नित्यं ध्यानसमस्तदीप्तिकिरणं कालाग्निरुद्रोपमं
तत्संहारकरं नमामि सततं पातालषष्ठं मुखम् ॥

"परो रजसे सावदों" इति मन्त्रः ।

अस्यैव तुरीयस्य यन्त्रमाह —

तारं सुवृत्तज्वलनद्वयाढ्यं कोणेषु तारं च *जकारयुक्तम् ।
पद्मं च पत्रं च मनुं निवेश्य त्रीण्यक्षराण्येव तुरीययन्त्रम् ॥

ज्वलनद्वयं षट्कोणम् । त्रीण्यक्षराणीति बालाबीजत्रयम् । दलमध्य इत्यर्थः ॥

अथ गायत्रीदीक्षाकलशे पञ्चगव्यैरापूर्येत्युक्तं किल, तत्प्रसङ्गात् पञ्चगव्ययोजनाप्रकारः कल्पान्तरोक्तोत्र योग्यतावशाल्लिख्यते —

*ऋकारयुक्तं इति ख, ग, घ, ङ पाठः ।

प्रस्थपादं घृतं चैव प्रस्थार्धं दधि चोच्यते ।
त्रिपादं क्षीरमित्युक्तं गोमयं तु चतुष्पदम् ॥

गोमूत्रं षट्पदं चैव पञ्चगव्यमिति स्मृतम् ।

अत्र तु पञ्चगव्ययोजनामन्त्र उच्यते —

गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥

तेजोसि शुक्रमित्याज्यं देवस्येति कुशोदकम् ।

गन्धद्वारां दुराधर्षामिति ऋक् । आप्यायस्व समेतु ते इत्यृक् । दधिक्राव्णो अकारिषमित्यृक् । शुक्रमसि ज्योतिरसीति यजुः । देवस्य त्वा सवितुः प्रसव इति यजुः ॥

अथ पञ्चगव्ययोजनाप्रकारान्तरम् —

गोमयात् द्विगुणं मूत्रं मूत्रात्सर्पिश्चतुर्गुणम् ।
दधि पञ्चगुणं प्रोक्तं क्षीरमष्टगुणं तथा ॥

एवं वा पञ्चगव्यं योजयेत् ॥

अथ पञ्चगव्ययोजनाप्रकारान्तरमुच्यते —

गोमूत्रगोमयोदकपयोदधिघृतांशकाः प्रोक्ताः ।
एकार्धधातुसत्वा ह्येके सर्वाणि वा समानि स्युः ॥ इति ॥

अथ पञ्चगव्ययोजनामन्त्रान्तरमुच्यते —

तारभवाभिरथर्ग्भिः क्रमेण संयोजयेच्च गव्यानि ।

हंसश्शुचिषदिति ऋक् । प्रतद्विष्णुस्तपते इत्यृक् । त्रियम्बकं इत्यृक् । तत्सवितुर्वरेण्यमित्यृक् । विष्णुर्योनिं कल्पयतु इत्यृक् । इमास्तारभवा ऋचः । एताभिस्संयोजयेत् ॥

अथवा आत्माष्टाक्षरमन्त्रैः योजयेत् । ओं ह्रीं हंसस्सोहं स्वाहा । इत्यात्माष्टाक्षरमन्त्रः । पदशः पञ्च । एतैः पञ्चभिर्वा पञ्चगव्यानि योजयेत् । उक्तेष्वेतेषु विधिषु एकेन विधिना सर्वत्र पञ्चगव्यं योजयेत् ॥

अथ पञ्चगव्ययोजनाप्रसङ्गात् पञ्चगव्यघृतप्रकारोपि अत्र कल्पान्तरोक्तो भूतग्रहादिशान्तिकरः पुत्रादिप्रदश्च योग्यतावशात् लिख्यते —

मुस्तैलाग्निविळ(विड)ङ्गयष्टिरजनीमाञ्जिष्ठपाठावचा-
शौण्डीरोहिणिकाफलत्रयवृषामृद्वीकदार्वीयुतम् ।
गव्ये तु प्रतिसाधितं घृतमिदं कान्तिप्रदं पावनं
पुत्रायुष्यकरं महाग्रहहरं भूतामयघ्नं परम् ॥

अयमर्थः – मुस्ता-मुत्तकाशु । एला-एलअरिशि । अग्नि–कोडिवेलि । विळङ्गं–विपालरिशि । यष्टि–अतिमधुरम् । रजनी–हळखुण्डे । (மஞ்சள்) माञ्जिष्ठं–मञ्जिट्टै । वचा-वेखण्ड । पाठा–पाडक्किषंगु । शौण्डी–पिप्पली । रोहिणिका–कडुकुरोहिणी । फलत्रयं-अम्ले, हिरेड, व्याहडे । கடுக்காய், நெல்லிக்காய், தானிக்காய் वृषा–आडातोडै । मृद्वीकं–मुन्दिरिकैप्पपम् । दार्वी–अम्बेहळेदे மரமஞ்சள் एतत्सर्वं पञ्चगव्येन साकं घृते संयोज्य क्वथित्वा (क्वाथयित्वा)तदाज्यं साध्यं प्राशयेत् । उक्तफलं भवति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
अष्टाविंशः पटलः ॥

---

# अथैकोनत्रिंशः पटलः ॥

—:⋙❀⋘:—

अथ त्रिष्टुभो विधानमुच्यते —

मारीचः काश्यप ऋषिः । त्रिष्टुप् छन्दः । जातवेदोग्निर्देवता । ह्रुं बीजम् । ह्रीं शक्तिः । जातवेदसे सुनवाम हृत् । सोममरातीयतः शिरः । निज(द)हाति वेदः शिखा । स नः पर्षदति कवचम् । दुर्गाणि विश्वा नावेव नेत्रम् । सिन्धुं दुरितात्यग्निः अस्त्रम् ॥

अथाक्षरन्यासः —

अंगुष्ठगुल्फजङ्घासु जानूरुकटिगुह्यके ।
सनाभिहृदयोरोजपार्श्वयुक्पृष्ठकेषु च ॥

स्कन्धयोरुभयोर्मध्ये बाहुमूलोपबाहुषु ।
प्रकोर्परप्रकोष्ठेषु मणिबन्धतलेषु च ॥

मुखे नासाक्षिकर्णेषु मस्तमस्तिकमूर्धसु ।
विन्यसेदक्षरान्मन्त्री क्रमात् मन्त्रसमुद्भवान् ॥

पदन्यासः —

शिरोललाटदृक्कर्णयुग्मोष्ठरसनासु च ।
सकण्ठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ॥

जङ्घाचरणयोर्न्यस्येत्पदानि त्रिष्टुभस्सुधीः ।

ध्यानम् —

उद्यद्विद्युत्कराळाकुलहरिगळसंस्थाऽरिशङ्खासिखेटे-
ष्वस्त्रासाद्यग्निशूलानरिगणभयदा तर्जनीं चादधाना ।

चर्मास्युद्घूर्णदोर्भिः प्रहरणनिपुणाभिर्वृता कन्यकाभिः
दद्यात्काशानवीष्टान् त्रिणयनलसिता चापि कात्यायनी वः ॥

जातवेदसे इत्यादिमन्त्रः । अभीष्टफलप्रदानोयं मन्त्रः । विशेषतो रक्षाकरप्रधानश्च । पञ्चगव्यैर्वा प्राक् सप्तमे पटले मातृकाविधाने प्रोक्तवर्णौषधिक्वथितजलैर्वा पशोः (गोः) मूत्रेण वा क्षीरेण वा जलेनैव वा दीक्षाकलशं संपूर्य समर्चयेत् ॥

अथ पूजार्थं पीठविधानमुच्यते —

पूर्वं भुवनेशीं विलिख्य, तदन्तः दीक्षकस्य (दीक्षणीयस्य) नाम संलिख्य, तद्बहिर्नवमे पटले भुवनेशीविधानोक्तषड्गुणितयन्त्रं विलिख्य तत्कोणेषु षट्सु दुः इति वर्णं विलिखेत् । बहिरष्टदलं पद्मं विलिख्य तस्मिन्मण्डले नवशक्तिभिर्यजेत् । जयायै० विजयायै० भद्रायै० भद्रकाल्यै० सुमुख्यै० दुर्मुख्यै० व्याघ्रमुख्यै० सिंहमुख्यै० दुर्गायै० (इति नवशक्तयः ।) अस्मिन्पीठे कलशं संपूर्य जातवेदोग्निमूर्तिं समावाह्य समर्चयेत् ॥

अङ्गैः प्रथमावृतिः । ग्निरत्यतारिदु नमः । धुंसिवनेना नमः । श्वाविणिर्गादु नमः । तिदपरि पनःस नमः । दोवेतिहादनि नमः । तोयतीरा मम नमः । सोमवानसु नमः । सेदवेतजा नमः । ८ एतैः प्रतिलोमगतैर्वर्णैः द्वितीयावृतिः । जातवेदसे नमः । सप्तजिह्वाय नमः । हव्यवाहनाय नमः । अश्वोदरजाय नमः । वैश्वानराय० कौमारतेजसे० विश्वमुखाय० देवमुखाय० ८ इति तृतीयावृतिः । पृथिव्यै नमः । अद्भ्यो नमः । अनिलाय० आकाशाय० ४ इति महादिक्षु समर्चयेत् । निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० ४ इति कोणेषु समर्चयेत् । इति चतुर्थ्यावृतिः ॥

आगतायै० तपन्यै० वेदगर्भायै० दहनरूपिण्यै० सेन्दुखण्डायै० शुम्भहन्त्र्यै० नभश्चारिण्यै० वागीश्वर्यै० मदवहायै० सोमरूपायै० मनोजवायै०

इत्येकादशशक्तीः पूर्वदिशि समर्चयेत् । मरुद्वेगायै० रात्र्यै० तीव्रकोपायै० यशोवत्यै० तोयात्मिकायै० नित्यायै० दयावत्यै० हरिण्यै० तिरस्क्रियायै० वेदमात्रे० दमरप्रियायै० ११ इति दक्षिणदिशि समर्चयेत् । समाराध्यायै० नन्दिन्यै० परायै० रिपुमर्दिन्यै० षष्ठ्यै० दण्डिन्यै० तिग्मायै० दुर्गायै० गायत्र्यै० निरवद्यायै० विशालाक्ष्यै० ११ इति पश्चिमदिशि समर्चयेत् । श्वासोद्वाहायै० नादिन्यै० वेदनायै० वह्निगर्भायै० सिंहवाहायै० धुर्यायै० दुर्विषहायै० निरंसायै० तापहारिण्यै० त्यक्तदोषायै० निस्सपत्नायै० ११ इत्युत्तरदिशि समर्चयेत् ॥ एताभिर्वर्णशक्तिभिः पञ्चम्यावृतिः । लोकपालैः षष्ठ्यावृतिः । तदायुधैः सप्तम्यावृतिः ॥

एवं दीक्षाकलशं संपूज्य समभिषिच्य, (षेचयेत् । सः)पीठविधानोक्तयन्त्रे उपविश्य जपेत् । गुरुसन्निधौ अक्षरसहस्रं पुरश्चरणाजपः । तत्र त्रिष्टुभः वह्न्यात्मकत्वात् तत्प्रशान्त्यर्थं द्विगुणसंख्यां गायत्रीं जपेत् ॥

तिलेन सर्षपेण अनलेन क्षीरद्रुमसमिद्भिश्च हविषा चाज्येन च एतैस्सर्पिस्सिक्तैः द्रव्यैः चतुश्चत्वारिंशद्युक्तचतुश्शतसमन्वितं चतुस्सहस्रसंख्यं हुनेत् पुरश्चरणाहोमः । अनल इति गुळवेळ கொடிவேலி पूजाविधिस्तु पूर्वमेव कलशविधावुक्तः ॥

ग्निरस्त्यतारिदु, धुंर्मिववेना, श्चाविणिगांदु, तिदपरिपनः स, दोवेतिहादनि, तोयतीरामम, सोमवा:सु, सेदवेतजा, ॥ एवं जातवेदोमन्त्रं जप्तुकामः एतानष्टौ पादान् एवं प्रतिलोमेन जपेत् । अनेन मन्त्रं दुष्टदूषितं क्षाल्यते ॥ मन्त्रस्य दोषास्तु कादिमते पञ्चविंशतिप्रकाराः कथिताः । ते यथा —

*पुंसष्षट्कर्णगो मन्त्रः तस्तस्स्यादधिकैर्जपैः ।*
*गर्वितस्त्नवधिप्राप्तः शत्रवो वैरिकोष्ठगाः ॥*

बाला लघ्वक्षराः प्रोक्ताः वृद्धा गुर्वक्षरान्विताः ।

निर्जिताः कर्मबाहुल्यात् दसहाः सत्वतर्जिताः ॥

अपूर्णरूपाः छिन्नास्स्युः स्तम्भितास्सानुनासिकाः ।
अकालविनियोगेन मूर्छिताः स्नापगा जपात् ॥

मत्ताः पत्रेषु पठनात् अर्णवर्णैस्तु कीलिताः ।
रुद्धा विसन्धिकाः प्रासदुःखा वैरिसमन्विताः ॥

खण्डीभूतास्त्वंशजपादङ्गहीनास्तमसंवृताः ।
अपूर्णेनोपदिष्टा ये हीनवीर्यास्तु ते मताः ॥

सदा प्रयोगात् कुण्ड(ण्ठ)त्वं क्लिष्टताऽतिविलम्बितात् ।
रुग्णः प्रलपनेर्जापादन्यमन्त्रैस्सहानिलाः ॥

उपेक्षानास्थया जापाद्वैषम्यादवमानिताः ।
पञ्चविंशतिरुद्दिष्टा दोषास्तान् शमयेद्गुरुः ॥

पुनरनुलोमेन जपे अनुलोमेन उक्तेन प्रकारेण षडङ्गानि । प्रतिलोमेन जपे अनुलोमेनोक्तवर्णसंख्यया प्रतिलोमेन षडङ्गानि । पुनः प्रतिलोमविधानेषु आवरणपूजादिकमपि प्रातिलोम्येन कार्यम् । प्रतिलोमेन जपादिकं प्रत्यङ्मुखेन कर्तव्यम् । उभयविधजपादेः नक्षत्रवारादिनियमश्च मूलग्रन्थे उक्तः ॥

एतत्सर्वं कल्पान्तरेप्युक्तम् । जपसंख्याग्नेयास्त्रपादकल्पत्यादि तत्कथम् ।

मन्त्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः ।
आग्नेयास्त्रमिदं प्रोक्तं विलोमाभिहितो मनुः ॥

प्रतिलोमक्रमादस्य षडङ्गानि प्रकल्पयेत् ।
वर्णन्यासपदन्यासौ विदध्यात्प्रतिलोमतः ॥

ध्यानभेदान् विजानीयात् गुरुदेशान्न चान्यथा ।

पूर्ववज्जपकल्पमिस्स्यात् जुहुयात्पूर्वसंख्यया ॥

पञ्चगव्ये सुपक्वेन चरुणा तस्य सिद्धये ।
अर्चनां पूर्ववत्कुर्यात् शक्तिस्तु प्रतिलोमतः ॥

सर्वत्र देशिकः कुर्यात् गायत्र्याः द्विगुणं जपम् ।
क्रूरकर्माणि कुर्वीत प्रतिलोमविधानतः ॥

शान्तिकं पौष्टिकं कर्म कर्तव्यमनुलोमतः ।

अष्टानां पादानां विलोमक्रमः—

ग्न्याद्यः पञ्चाक्षरः पादः ज्ञेयो ज्ञानेन्द्रियात्मकः ।
धुमाद्योन्यः पञ्चवर्णः स्मृतः कर्मेन्द्रियात्मकः ॥

स्वाद्यस्तृतीयः पञ्चार्णः पञ्चभूतमयः स्मृतः ।
त्याद्यस्सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ॥

दःपूर्वः पञ्चमः पाद ऊर्मिरूपष्षडक्षरः ।
तोवर्णादिष्षडर्णोन्यष्षट्कौशिकमयो मतः ॥

सोपूर्वः पञ्चवर्णोन्यश्शब्दादिमय ईरितः ।
सेवर्णाद्यष्टमः पादः पञ्चार्णो वदनादिकः ॥ इति ॥

अथ प्रयोगविधिः—

पीताऽयोमुष्टिगदाहस्ता महिषाज्यसंयुतपुलाकैः ।
वैभीतारिष्टसमिद्भिःकोद्रवकैः स्तम्भयेच्च हुतविधिना ॥

पुलाकं—पुल्लान्ति । वैभीतकसमित्—तानि । अरिष्टं—वेम्बु । कोद्रवं—वरकु । अयमर्थः—पीतामयोमयमुष्टिगदाहस्तां ध्यात्वा, महिषाज्यसिक्तपुलाकैश्च वैभीतकसमिद्भिश्च अरिष्टैश्च कोद्रवैश्च सहस्रं हुनेत् । शत्रुस्तंभनं भवति ॥

प्रयोगान्तरम् —

सुसितापाशांकुशयुक् विगळद्धारिप्रवाहसंभिन्ना ।
वेतससमिदाहुत्या मधुरयुजा मंक्षु वर्षयेद्दुर्गा ॥

अयमर्थः — सुसितेत्यादिविशेषणविशिष्टां दुर्गां ध्यात्वा वेतससमिधं त्रिमधुरसिक्तां, संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् वृष्ट्यर्थम् । वेतसं—नीर्वञ्जि ॥

प्रयोगान्तरम् —

रक्ता पाशांकुशा फलिनीकेसरोद्भवैः कुसुमैः ।
चन्दनरससंसिक्तैः होमाद्दुर्गा वशीकरोति जगत् ॥

एवं ध्यात्वा रात्रावुक्तकुसुमैर्हुनेत् सहस्रम् । वशीकरणं भवति । फलिनी-ஞாழல். केसरं—नागप्पू ॥

प्रयोगान्तरम् —

लवणैस्त्रिमधुरसिक्तैस्तत्कृतया वा जुहोतु पुत्तळ्या ।
उडुतरुकाष्ठैर्नक्तम् सप्ताहान्नृपतिमपि वशीकुरुते ॥

अयमर्थः — उडुतरुशकलैर्वा त्रिमधुरसिक्तैर्लवणैर्वा लवणकृतसाध्यप्रतिकृत्या वा आसप्ताहं पूर्ववत् ध्यात्वा सहस्रं जुहुयात् रात्रौ । सप्ताहाद्वशीकरणं भवति । घृतमधुगुळमिश्रं त्रिमधुरसंज्ञं भवति । उडुतरुशकलं—அழிஞ்சில்

प्रयोगान्तरम् —

सकपालशूलपाशांकुशहस्ताऽरुणतरा तथा दुर्गा ।
आकर्षयते लावणपुत्तल्या त्रिमधुराक्तया होमात् ॥

एवं ध्यात्वा लवणकृतसाध्यप्रतिमाहोमात् साध्यमाकर्षयेदित्यर्थः ॥

प्रयोगान्तरम् —

ध्यात्वा धूम्रां मुसलत्रिशिखकरामस्थिभिश्च तीक्ष्णाक्तैः ।
कार्पासानां निम्बच्छदमेषघृतैर्हुताच्च विद्वेषः ॥

धूम्रं-धूम्रवर्णं । त्रिशिखं-शूलम् । कार्पासं-परुत्ति । अस्थि-विरै । निम्बच्छदं-वेप्पिलै । मेषघृतं-अजाघृतम् । एतैर्द्रव्यैरेवं ध्यात्वा सहस्रं हुनेत् । विद्वेषो भवति ॥

प्रयोगान्तरम् —

धूम्रातर्जनिशूलाहितहस्ताविषदलैस्समहिषाज्यैः ।
होमाच्च मरिचसर्षपचरुभिरजारुधिरसिक्तैश्च ॥

सहस्रहोमादुच्चाटयेत् ॥

प्रयोगान्तरम् —

शिखिशूलकराऽग्निनिभा सर्षपतैलाक्तमत्तबीजैश्च ।
मरीचैर्वा राजियुतैः होमादहितान्विमोहयेत् दुर्गा ॥

शिखी-अग्निः । मत्तबीजं-उन्मत्तविरै । मरीचं-मिळकु । राजी-मोहरया ॥ अयमर्थः — मत्तबीजैस्सर्षपतैलसिक्तैर्वा राजियुतमरीचैर्वा सहस्रहोमात् शत्रून् विमोहयति ॥

प्रयोगान्तरम् —

कृष्णा शूलासिकरा रिपुदिनवृक्षोद्भवैस्समित्प्रवरैः ।
प्रणकघृतसंसिक्तैर्होमान्मासेन मारयेद्दुर्गा ॥

प्रणकत्घृतं-कटिठवेण्णै (கட்டிவெண்ணெ) अयमर्थः — कृष्णवर्णां शूलासिहस्तां दुर्गां ध्यात्वा शत्रुनक्षत्रवृक्षसमिद्भिः सहस्रं जुहुयात् । एवं मासे हुते शत्रोर्मरणं भवति ॥

प्रयोगान्तरम् —

नक्षत्रवृक्षसमिधो मरीचानि च तीक्ष्णहिंगुशकलानि ।
मारणकर्मणि विहितान्यारुष्करस्नेहसिक्तानि ॥

तीक्ष्णं–कटुकु । हिंगुशकलं–हिंगुगुळिका । आरुष्करस्नेहं–शेङ्कोट्टैतैलम् । अयमर्थः – शत्रुनक्षत्रसमिद्भिश्च मरीचैश्च तीक्ष्णैश्च हिंगुभिश्च आरुष्करतैलसिक्तैरेतैस्सहस्रसंख्यं हुनेत् । शत्रोर्मरणं भवति ॥

प्रयोगान्तरम् —

नक्षत्रवृक्षसमिधां विलिखितसाध्याभिधानकर्मवताम् ।
सचतुश्चत्वारिंशत्तत्वयुजां होमकर्म मरणकरम् ॥

अयमर्थः — शत्रुनक्षत्रवृक्षसमित्सु साध्यनाम विलिख्य, मूलमन्त्रस्य चतुश्चत्वारिंशद्वर्णांश्च विलिख्य तावत्संख्यं जुहुयात् । मरणं भवति ॥

प्रयोगान्तरम् —

मरीचं क्षौद्रसमेतं प्रत्यक्पुष्पीवराहसंभिन्नम् ।
उष्णाम्भःपरिलुलितं प्रसेचयेदक्षवृक्षपुत्तल्याः ॥

हृदये वदने च रिपोः सम्मुखतस्संप्रतिष्ठिते रायाः ।
ज्ञात्यभिभूतोऽरिस्स्यात्तत्कथनात्पक्षमात्रकान्म्रियते ॥

मरीचं-मिरे । क्षौद्रं-मधु । प्रत्यक्पुष्पी-* आघाडा रुद्रदण्डीति सत्संप्रदायसर्वस्वाभिधाने व्याख्याने उक्तम् । कौतुम्बै इति केचित् । वराहं निलप्पनै । अयमर्थः — शत्रुनक्षत्रवृक्षेण प्रतिकृतिं संपाद्य प्राणप्रतिष्ठां च कृत्वा, तस्य हृदये वदने च मरीचाद्युक्तद्रव्यं सर्वं उष्णोदके विनिष्पीड्य तेन जलेन रिपुदिङ्मुखतः(मुखः) प्रसेचनं कुर्यात् । तस्मादार्त्याद्यभिभूतो भवति । अथवा एवमेव संपाद्य क्वाथयेत् । एकपक्षमात्रे क्वथिते रिपुर्म्रियते ॥

* प्रत्यक्पुष्पी–நாயுருவி इति ख-ङ पाठः ।

सैव प्रतिकृतिरसकृत्प्रतिष्ठितसमीरणा च विशदधिया ।
तीक्ष्णस्नेहालिप्ता विलोमजापेन तापनीयाग्नौ ॥

विधिना ज्वरविद्धस्स्यादपधनहोमेन हानिरङ्गस्य ।
सर्वाहुत्या मरणं प्राप्नोति रिपुर्न सन्देहः ॥

तीक्ष्णस्नेहं–मोहरयाचें तेल (கடுகெண்ணெய்) अयमर्थः – रिपुनक्षत्रवृक्षप्रतिकृतिं संपाद्य, प्राणप्रतिष्ठां च बहुशो जप्त्वा, तीक्ष्णतैलेन तां प्रतिकृतिं विलिप्य, जातवेदोमन्त्रं प्रतिलोमेन जप्त्वा, अग्नौ तापयेत् । तेन शत्रुर्ज्वरग्रस्तस्स्यात् । पुनस्तामेव प्रतिकृतिं छित्वा स्वल्पनेन मन्त्रेण हुते शत्रोर्मरणं भवति ॥

प्रयोगान्तरम् —

उन्मत्तक्ष्वेळनेत्रद्रुमभवसमिधां सप्तसाहस्रकं तत्-
प्रत्येकं राजितैलालुळितमथ हुनेन्माहिषाज्यप्लुतं वा ।
कृष्णाष्टम्याद्यमेवं सुनियतचरितस्सप्तरात्रं निशायां
निस्सन्देहोस्य शत्रुस्त्यजति किल निजं देहमाविष्टमोहः ॥

उन्मत्तं-धोत्रा । क्ष्वेळं-कुचली (எட்டி) तयोः नेत्रद्रुमं, नेत्रमिति मूलमुच्यते । तयोर्मूलभवसमिद्भिरित्यर्थः । राजितैलं मोहरयाचातैलम् । अयमर्थः — उक्तैरेतैस्समिद्भिः सर्षपतैलाप्लुतैर्वा माहिषाज्याप्लुतैर्वा रात्रावेकैकं सप्तसाहस्रसंख्यं कृष्णाष्टमीमारभ्य हुनेत् । शत्रोर्मृतिः ॥

प्रयोगान्तरम् —

सामुद्रे च सहिङ्गुजीरकविषे साध्यर्क्षवृक्षाकृतिं
कृत्वा यो वदनाञ्जले घटकटाहादिश्रिते क्वाथयेत् ।
सप्ताहं ज्वलनं जपन्विपतरोर्यष्ट्या शिरस्ताडनं
कुर्वन् सप्तदिनान्तरे यमपुरक्रीडापरस्यादरिः ॥

हिङ्गु-हिङ्गु । जीरकं च । विषं-वत्सनाभम् । द्वादशे पटले त्वरिताविधाने प्रोक्तं वा । अयमर्थः — समुद्रे जले घटादिश्रिते उक्तद्रव्याणि प्रक्षिप्य अग्नौ संस्थाप्य, तस्मिन् जले साध्यस्य नक्षत्रवृक्षेण प्रतिमां संपाद्य तामधोवदनतया तस्मिन् जले प्रक्षिप्य, जातवेदोमन्त्रं जप्त्वा, विषतरोर्यष्ट्या प्रतिमाशिरसि ताडयन् सप्तदिनं क्वाथयेत् । तस्मात् सप्तदिनान्तरे शत्रुर्मरिष्यति ॥

प्रयोगान्तरम् —

आर्द्रांशुकोऽग्निमथुना त्वथ सप्तरात्रं
सिद्धार्थतैललुलितैर्मरिचैर्जुहोतु ।
आरभ्य विष्टिदिवसेऽरिनरः प्रलाप-
मूर्च्छान्वितेन विषयीक्रियते ज्वरेण ॥

सिद्धार्थ–मोहरया । अग्निमनुरिति जातवेदोमन्त्रः । अयमर्थः — विष्टयाख्यकाले आरभ्य सप्तदिनेषु रात्रौ आर्द्रवस्त्रः सिद्धार्थतैलसिक्तैः मरीचैः जातवेदोमन्त्रेण सहस्रं जुहोतु । शत्रुर्ज्वरमूर्च्छादिग्रस्तो भवति ॥

प्रयोगान्तरम् —

तालस्य पत्रे भुजपत्रके वा मध्ये लिखेत्साध्यनराभिधानम् ।
अथाभितो मन्त्रमिमं विलोम विलिख्य भूमौ विनिखन्य तत्र ॥

आधाय वैश्वानरमादरेण समर्च्य सम्यक् मरिचैर्जुहोतु ।
तीव्रो ज्वरस्तस्य भवेत्पुनस्तत् तोये क्षिपेद्वश्यतमस्स भूयात् ॥

अयमर्थः — तालपत्रे वा भुजपत्रे वा मध्ये नाम लिखित्वा तत्पार्श्वयोर्जातवेदोमन्त्रं प्रतिलोमेन लिखित्वा भूमौ निखन्य, तस्योपर्यग्निं संस्थाप्य समर्च्य मरीचैर्जुहुयात् । साध्यस्तु ज्वरग्रस्तो भवति । पुनस्तद्यन्त्र-मुद्धृत्य जले प्रक्षिपेत् । तेन स एव साध्यो वशीकृतो भवति ॥

प्रयोगान्तरम् —

सिंहस्थां शरनिकरैः कृशानुवक्त्रैः
धावन्तीं रिपुमनु धावमानमेनम् ।
संचिन्त्य क्षिपतु जलं दिनेशबिम्बे
जप्त्वामुं मनुमपि चाटनाय शीघ्रम् ॥

अयमर्थः — सिंहस्योपरि स्थित्वा अग्निसदृशाग्रैश्शरैः रिपुं धावन्तीं ध्यायेत् । तथा (त्रासात्) धावमानं रिपुं च ध्यायेत् । एवंरूपेण ध्यात्वा जातवेदोमन्त्रं जप्त्वा, जलमादित्यमण्डले क्षिपेत् । शत्रूच्चाटनं भवति ॥

प्रयोगान्तरम् —

कृत्वा स्थण्डिलमङ्कणे भगवतीं न्यासक्रमादर्चयेत्
गन्धाद्यैः पुनरन्धसा च विकिरेन्मन्त्री निशायां बलिम् ।
जप्त्वा मन्त्रममुं च रोगसहितां कृत्यानिकृत्याकृतान्
तांस्तान् भूतपिशाचवैरिविहितान् दुःखानसौ नाशयेत् ॥

अयमर्थः — अक्षरन्यासस्थाने तन्न्यायेनैव रात्रौ गन्धाद्यैस्समभ्यर्च्य, पायसेन बलिं च दत्वा, पुनस्तन्निकटे स्थित्वा जपेत् । तस्माद्रोगकृत्याभूतपिशाचवैरिविहिता पीडा नश्यति ॥

प्रयोगान्तरम् —

कुसुमरसलुलितलोणैर्वारुणवदनो जुहोतु सन्ध्यासु ।
मन्त्रार्णसंख्यमग्नेरैक्येन द्रावयेदरीनचिरात् ॥

कुसुमरसं–मधु । लोणं–मीठ । वारुणमुखः पश्चिममुख इत्यर्थः । मन्त्रार्णसंख्यं चतुश्चत्वारिंशत्संख्यम् । एवं हुते शत्रूनुच्चाटयति ॥

प्रयोगान्तरम् –

शुद्धैश्च तण्डुलैरथ हविर्निष्पाद्य पाञ्चगव्यमपि ।

सघृतेन तेन जुहुयादष्टसहस्रं समेतसंपातम् ॥

*प्राशितसंपातस्य स्याद्रक्षा सर्वथैव साध्यस्य।
प्राङ्गणमन्दिरयोरपि निखनेत् द्वारे च शिष्टसंपातम् ॥

कृत्या नश्यति तस्मिन्वीक्षन्ते न ग्रहादयो भीत्या ।
कर्तारमेव कुपिता कृत्या सर्वात्मनाशु नाशयति ॥

अयमर्थः — पञ्चगव्ये चरुं संपाद्य, आज्ययुक्तेन तेन चरुणा अष्टोत्तरसहस्रं जुहुयात् । संपाताज्यं गृहीत्वा साध्यं प्राशयेत् । द्वारे चाङ्गणे चान्तःपुरे च निखनेच । तेन कृत्यादयो नश्यन्ति ॥

प्रयोगान्तरम् —

ब्रह्मद्रुमफलकान्ते मन्त्रितमस्त्रसप्तसप्तकोष्ठयुते ।
कोणे दराणि हित्वा मायाबीजं सकर्म मध्यगते ॥

विलिखेत्क्रमेण मन्त्राक्षरांश्च शिष्टेषु तेषु कोष्ठेषु ।
तत्र मरुतः प्रतिष्ठां विधाय विनिधाय वह्निमपि ॥

जुहुयादाज्येनाष्टसहस्रं फलकोपरि सम्यगात्तसंपातम् ।
विप्रतिपत्तिधरायां निखनेन्नश्यन्त्युपद्रवास्सद्यः ॥

ब्रह्मद्रुमम्—पलाशम् । ब्रह्मद्रुमफलकान्तः पूर्वपश्चिमतः अष्टौ रेखा विलेख्याः । तथैव दक्षिणोत्तरतश्चाष्टौ रेखा विलेख्याः । एवं विलिखिते एकोनपञ्चाशत्कोष्ठानि जायन्ते । तत्र सर्वेभ्यो मध्यगतकोष्ठे साध्यक्षेत्रनामयुतां भुवनेशीं विलिखेत् । पुनश्चतुःकोणगतकोष्ठानि वर्जयित्वा अन्येषु चतुश्चत्वारिंशत्स्खण्डेषु जातवेदोमन्त्रवर्णान् विलिखेत् । एवं विलिख्य फलके, प्राणप्रतिष्ठां च जत्वा (कृत्वा), पुनरन्यत्र भूमौ अग्निं संस्थाप्य, केवलाज्येनाष्टोत्तर-

* प्रचितसंपातस्य स्यात् इति ह मातृकापाठः ।

सहस्रं हुत्वा, तत्संपातं फलकस्थयन्त्रोपरि विलिप्य, विवादभूमौ फलकं निखनेत् । तस्माद्भूविवादो नश्यति ॥

प्रयोगान्तरम् —

सिकताचरुगव्याश्मकमृदां प्रतिष्ठा विधीयते सिध्यै ।
प्रस्थाढकघटमाना गृहपुरविषयाभिगुप्तये सिकता ॥

मध्याष्टाशान्तेषु च कुण्डानामारचय्य नवकमपि ।
विधिना निवपेत्क्रमशः सिंहधनुश्छागयायिनि दिनेशे ॥

तिथिषु तु कालाष्टम्यां भेषु विशाखादिमूलभाग्येषु ।
वारेषु मन्दवाक्पतिवर्ज्यास्सर्वे प्रशस्यन्ते ॥

हस्तश्रवणमघासु प्राजापत्ये च कर्म कुर्वीत ।
द्वादशसहस्रसंख्यं प्रजपेद्गायत्रमपि यथाप्रोक्तम् ॥

मध्ये च मूलमनुना, तदायुधैरष्टदिक्षु चक्राद्यैः ।
सकपालान्तैः पृथगपि संस्थापनकर्म निगदितं विधिवत् ॥

तास्ताश्च देवता अपि परिपूज्य यथाक्रमेण मन्त्रितमः ।
कुर्याद्बलिं दिनग्रहकरणेभ्यो लोकपालराशिभ्यः ॥

अयमर्थः — गृहरक्षणार्थश्चेत् प्रस्थं सिकताः । पुररक्षणार्थं चेत् आढकं चतुःप्रस्थं सिकताः । विषयसीमारक्षणार्थं चेत् घटप्रमाणं द्रोणप्रमाणं सिकताः । एवं संपाद्य, गृहस्य वा पुरस्य वा सीमाया वा अष्टदिक्षु मध्ये च नव कुण्डानि विधाय, मेषसिंहधनुरित्यादि उक्तमासतिथिनक्षत्रवारयुक्तेषु दिनेषु, सिकता उक्तपरिमाणेन नवधा संपाद्य, तेषु कुण्डेषु संस्थाप्य, द्वादशसहस्रं गायत्र्या अभिमन्त्रिताः सिकताः क्रमेण जपेत्(वपेत्) । पुनर्मध्यकुण्डस्थसिकतायाः(सु) मूलदेवताप्राणप्रतिष्ठां विधाय, अन्येष्वष्टकुण्डेषु मन्त्रस्थानोक्तचक्राद्यायुधमस्तकस्य प्राणप्रतिष्ठां च तत्राष्टमायुधतर्जनीस्थाने कपाला-

युधस्य प्राणप्रतिष्ठां च क्रमेण कृत्वा, पुनर्मध्यकुण्डस्थितसिकतास्थितदेवतां मूलमन्त्रेण परिपूज्य, अष्टकुण्डस्थिता अप्यायुधदेवताः चक्राय नम इत्यादिभिस्तत्तन्मन्त्रैः क्रमेण परिपूज्याः । पुनस्तत्र तत्र यस्मिन्दिने करोति तद्दिननक्षत्रदेवतायै च नवग्रहतद्दिनकरणलोकपालद्वादशराशिभ्यो बलिं दद्यात् अक्षतैर्वा चरुभिर्वा । एवं कृते अधिकतरं रक्षाकरं भवति । एवमेव चरुणा पञ्चगव्यैर्वा अश्मना वा मृदा वा गृहपुरसीमादिरक्षां प्रकुर्वीत ॥

प्रयोगान्तरम् —

सिकताष्षोडशकुडुवं ब्रह्मद्रुमभाजने तु गव्याक्तम् ।
निवपति यदि विधिना तं देशं ग्रामं करोति चतुरब्दात् ॥

कुडुवं—मेजायाचें माप உழக்கு ब्रह्मद्रुमं-पलाश । अयमर्थः—पूर्ववदेव साध्यप्रदेशे अष्टदिक्षु मध्ये च नवकुण्डानि खनित्वा, तेषु कुण्डेषु ब्रह्मद्रुमेण नव पात्राणि संपाद्य, एकैकस्मिन्पात्रे षोडशकुडुवपरिमाणेन सिकताः पञ्चगव्यसिक्ताः संपाद्य नवकुण्डेषु संस्थाप्य, पूर्ववदेव प्राणप्रतिष्ठाकरणजपपूजाबलिहरणादीन् कुर्यात् । एवं यस्मिन् देशे निवपति निखनति, तं देशं वर्षचतुष्टयात्पूर्वं ग्रामं करोति ॥

प्रयोगान्तरम् —

अर्केऽजस्थेऽधिगायामपरिमितजलायां समादाय शुद्धाः
सम्यक्संशोषयित्वाऽऽतपमनुसिकताः शूर्पकोणैर्विशोध्य ।
संसिद्धे पञ्चगव्ये सुमतिरथ विनिक्षिप्य ताः कुम्भसंस्थाः
मन्त्राग्नौ मन्त्रजापी द्विजतरुसमिधा भर्जयेत्कार्यहेतोः ॥

एवं मृदुपलचरवस्संस्थाप्यन्ते सपञ्चगव्यास्ते ।
वसुधाविप्रतिपत्तिक्षयं च पुष्टिं च कुर्वते क्रमशः ॥

अयमर्थः—सूर्ये मेषस्थे संपूर्णजलयुक्तायां नद्यां गत्वा सिकतास्संगृह्य सूर्यकिरणे संशोषयित्वा शूर्पेण विशोध्य, पूर्वस्मिन्पटले गायत्रीविधाने प्रोक्त-

पञ्चगव्ययोजनासामान्यविध्युक्तप्रकारेण योजिते पञ्चगव्ये विनिक्षिप्य, पुनः पञ्चगव्यमिश्रितास्सिकताः कुम्भे विनिक्षिप्य, पुनरग्निजननविधिरूपेण संस्कृताग्नौ संस्थाप्य, जातवेदोमन्त्रं जप्त्वा, द्विजतरुसमिद्दर्व्या भर्जयेत्। एवं सिकताचरुं संपाद्य, सपञ्चगव्यास्ते चरवः भूमिविवादस्थले स्थापनीयाः। तस्माद्भुवि विवादं स्थापयन्ति(शमयन्ति)। अपिच कालेन पुष्टिं कुर्वन्ति। द्विजतरु–पलास। शूर्प–सूप॥

प्रयोगान्तरम्—

रथचरणगदाम्बुजहस्ता निष्टप्तशातकुम्भनिभा।
सघृतपयोन्धोहोमान्महतीं लक्ष्मीं समावहेद्दुर्गा॥

अयमर्थः— एवंरूपां दुर्गां ध्यात्वा घृतसिक्तपायसं हुनेत्। तस्मादुक्तफलं स्यात्॥

व्रीहिभिरन्नैः क्षीरैस्समिद्भिरपि दुग्धवीरुधामाज्यैः।
मधुरत्रयमधुरतरैः महतीं वृद्धिं करोति हुतविधिना॥

अयमर्थः — समिद्भिरिति। दुग्धवीरुधामिति। दुग्धवीरुत् अश्वत्थादि क्षीरद्रुमचतुष्टयम्। तेषां समिद्भिरित्यर्थः। मधुरत्रयं आज्यगुळमधुमिश्रितं द्रव्यम्। मधुरतरैरिति। मधुरतरं अतिमधुरम्। संख्यानुक्ते सहस्रमिति न्यायात् एतैर्दशभिर्द्रव्यैः पृथग्वा संभूय वा सहस्रसंख्यं जातवेदोमन्त्रेण हुनेत्। ऐश्वर्यवृद्धिर्भवति। 'पुंसा केन क्रियद्वा मन्त्रस्याचक्षतेऽस्य सामर्थ्यं'। इत्यादिना मन्त्रप्रशंसा कृता॥

अथ शारदातिलकोक्तप्रकारेण दिनास्त्रकृत्यास्त्रमन्त्रयोः प्रयोगा लिख्यन्ते-

अथोदितास्त्रं कृत्यास्त्रं वक्ष्ये शत्रुविमर्दनम्।
अतिदुर्गामनुं प्राहुः दिनास्त्रं मन्त्रवित्तमाः॥

अतिदुर्गेयमित्याद्या षडन्ता लिप्तुवीरिता।

प्रतिलोममिमं मन्त्रं कृत्यास्त्रं प्रतिचक्षते ॥

दिनास्त्रस्य षडङ्गादीन्प्रतिलोमादिकान्विदुः ।
मूलमन्त्रप्रतिलोमक्रमेणेत्यर्थः ॥

पूर्वोक्ता एव मुन्याद्या मन्त्रस्यास्य प्रकीर्तिताः ॥

वर्णन्यासपदन्यासौ विदध्यात् प्रतिलोमतः ।
ध्यानभेदान्विजानीयात् गुर्वादेशान्न चान्यथा ॥

पूर्ववज्जपक्लृप्तिस्स्यात् जुहुयात्पूर्वसंख्यया ।
पञ्चगव्यसुपक्वेन चरुणा तस्य सिद्धये ॥

अर्चनं पूर्ववत्कुर्याच्छक्तिस्तु प्रतिलोमतः ।
सर्वत्र देशिकः कुर्यात् गायत्र्या द्विगुणं जपम् ॥

अथ प्रयोगः —

भानुबिम्बगतं शत्रुमधोवक्त्रं विषाहतम् ।
मूलादुत्थितया ग्रस्तं कुण्डल्या भावयेत्सुधीः ॥

मूलाधारे क्षिपेत्सद्यः प्रस्फुरत्कालपावके ।
दिनत्रयात् ज्वराक्रान्तो रिपुः प्राणान्विमुञ्चति ॥

दिनास्त्रेण प्रविद्धाङ्गं स्वाधिष्ठानगतं रिपुम् ।
पञ्चवायुसमिद्धेन वह्निना दग्धविग्रहम् ॥

ध्यायन्मनुं जपेत्सद्यः स भवेद्यमवल्लभः ।
मणिपूरगतं शत्रुमग्निनाऽऽदीप्तविग्रहम् ॥

ध्यायन् दिनास्त्रं प्रजपेत् स मृत्युवशतां व्रजेत्
अनाहिताहितश्शत्रुर्निर्दग्धो मन्त्रवह्निना ॥

पाशेन बद्धा शीघ्रेण नीयते यमकिंकरैः ।
विशुद्धिस्थानगो वैरिर्दिनबाणेन दीपितः ॥

अधोमुखः स्मृतस्तूर्णं परासुः स्याद्दिनत्रयात् ।
आज्ञायां निहितं शत्रुं दहेत् ज्ञानाग्निना धिया ॥

पुत्रमित्रकळत्रादीन् हित्वा मृत्युमुपाश्रयेत् ।
नाभिमात्रोदके स्थित्वा ध्यायन् बिम्बे दिनेशितुः ॥

वैरिणं दग्धसर्वाङ्गं मन्त्रमष्टोत्तरं शतम् ।
जपेत्सप्तदिनादर्वाक् यमलोकं स गच्छति ॥

आरवारं समारभ्य सप्ताहं प्रजपेन्मनुम् ।
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ॥

सन्निपातज्वराविष्टो यमग्रस्तो भवेदरिः ।
स्थित्वा दुर्गालये मन्त्री त्रिरात्रं वर्जिताशनः ॥

दिनबाणेन विद्धाङ्गं वैरिणं प्रविचिन्तयेत् ।
जपेन्मनुमिमं शुत्रुः ज्वरितो मरणं व्रजेत् ॥

स्पृष्ट्वा दुर्गां जपेन्मन्त्रमनश्नन् त्रिदिनं स्मरन् ।
शूलप्रोतं निजरिपुं दिनास्त्रेण प्रदीपितम् ॥

ज्वरेण महताऽऽविष्टो जायते स यमातिथिः ।
रविमण्डलगं शत्रुं दष्टं तद्रश्मिपन्नगैः ॥

विषाग्निदग्धसर्वाङ्गं ध्यायन्नुष्णेन वारिणा ।
तर्पयेद्दिनबाणे स्यादसौ स्याद्य(तुय)मवल्लभः ॥

रविबिम्बादागतया ज्वालया ग्रस्तविग्रहम् ।
रिपुं ध्यात्वा जपेन्मन्त्रं स क्रीडति यमान्तिके ॥

ग्रहयुक्तार्कबिम्बस्थं विद्धं मन्त्रमयैश्शरैः ।
प्रतिपद्य निजं शत्रुं जपेदयुतमस्त्रवित् ॥

रिपुं नयति शीघ्रेण यमदूतो यमालयम् ।

प्रळयानलसङ्काशां कालरात्रिमिवापराम् ॥

शूलपाशधरां घोरां सिंहस्कन्धनिषेदुषीम् ।
सवितुर्मण्डलान्तस्स्थां रक्तनेत्रत्रयोत्थितैः ॥

विस्फुलिङ्गैर्निर्दहन्तीं रिपुमाकुलविग्रहम् ।
स्पष्टदंष्ट्राधरां नृत्यद्भ्रुकुटीभीषणाननाम् ॥

दर्शयन्तीं निजं शत्रुं तर्जन्या भीमरूपया ।
दंष्ट्रामयूखजालेन द्योतयन्तीं दिगन्तरम् ॥

शूलेन वैरिणो वक्षो दारयन्तीं भयङ्करीम् ।
जपेद्दिनत्रयं मन्त्री मारयेद्रिपुमात्मनः ॥

अस्त्रमन्त्रकृतन्यासः प्रळयाग्निसमप्रभाम् ।
रक्तवस्त्रधरां क्रुद्धां रक्तनेत्रत्रयान्विताम् ॥

सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ।
खड्गेन तच्छिरश्छित्वा क्षणाद्व्योमस्थलं गताम् ॥

ध्यात्वाऽयुतं जपेन्मन्त्री त्रिदिनं वर्जिताशनः ।
अनेनैव विधानेन रिपुर्मृत्युप्रियो भवेत् ॥

कर्माण्येतानि कुर्वीत दिवसे न तु रात्रिषु ।
पश्चिमामुखलिङ्गस्य सजीवं महिषं पुरः ॥

निधाय तस्य शिरसि कुण्डं कृत्वा त्रिकोणकम् ।
तस्मिन्समेधिते वह्नौ कारस्करसमुद्भवान् ॥

सत्रिकोणान्समन्त्रार्णान्साध्यनामसमन्वितान् ।
अजरक्तेन संसिक्तान् कारस्करसमिद्वरान् ॥

सहस्रं जुहुयाद्देवीं ध्यात्वा सवितृमण्डले ।
प्रळयाग्निसमां घोरां द्वात्रिंशद्भुजशोभिताम् ॥

उद्यदायुधसन्दीप्तां नृत्यन्तीं सिंहमस्तके ।
महादंष्ट्रां महाभीमां ज्वलत्केशीं नदन्मुखीम् ॥

रक्तार्द्रमांसवदनां घूर्णितोग्रत्रिलोचनाम् ।
अनेन विधिना शत्रुर्महाज्वरनिपीडितः ॥

विमुञ्चति निजं देहं पुत्रमित्रादिभिस्सह ।
ऊर्ध्वमुष्णाम्भसो मन्त्री लम्बयित्वा भुजङ्गमम् ॥

भानुबिम्बगतां दुर्गां सहस्रादित्यसन्निभाम् ।
सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीम् ॥

सहस्रनागनद्धाङ्गीं त्रासयन्तीं जगत्त्रयम् ।
ध्यायन्ननेन सर्पास्ये तर्पयेदुष्णवारिणा ॥

संयतः कालपाशेन वैरिर्मुञ्चेत्स जीवितम् ।
मध्याह्नार्कायुतप्रख्यां नदन्तीं नरसिंहवत् ॥

घोरसिंहसमासीनां महाभीषणदर्शनाम् ।
शूलप्रोताहितां ध्यायन् जपेन्मन्त्रमनन्यधीः ॥

तर्पयेदुष्णतोयेन सर्पवक्त्रे दिनत्रयम् ।
यमस्य भवनं गच्छेदरातिर्नात्र संशयः ॥

ऋक्षवृक्षप्रतिकृतिं प्रतिष्ठितसमीरणाम् ।
उष्णोदके विनिक्षिप्य विषाढ्ये विधिना ततः ॥

अर्केन्द्वनलसञ्जातां खड्गखेटकधारिणीम् ।
नयनत्रयनिर्गच्छद्विस्फुलिङ्गशताकुलाम् ॥

सिंहस्थां सर्वभूषाढ्यां त्रैलोक्यभयदायिनीम् ।
खड्गकृत्याभिधां ध्यायन्प्रजपेदयुतं मनुम् ॥

विधानेनामुना शत्रुर्ग्रस्तो भवति मृत्युना ।
प्रकल्प्य दुर्गायतने त्रिकोणं कुण्डमुत्तमम् ॥

तत्र सञ्जनिते वह्नौ महिषीशकृता कृताम् ।
पुत्तलीमजरक्ताक्तां प्रतिष्ठितसमीरणाम् ॥

छित्वा छित्वा प्रजुहुयादजारक्तान्वितां निशि ।
ध्यात्वा दुर्गां प्रनृत्यन्तीं महिषोरस्थलान्तरे ॥

शूलेन महिषस्याङ्गं भिन्दन्तीं घोरदर्शनाम् ।
अट्टहासैरजस्रोत्थैर्भीषिता(पणां)सुरसेविताम् ॥

अनेन विधिना शत्रुः प्रयाति यमसन्निधिम् ।
दिनास्त्रमेवं कथितं शत्रुनिग्रहकारणम् ॥

कृत्यास्त्रचोदितान्कुर्यात्प्रयोगान्मन्त्रवित्तमः ।
आधारादुद्गतां देवीं कुण्डलीं सर्परूपिणीम् ॥

सुषुम्नारन्ध्रमार्गेण यातां व्योमस्थलं ततः ।
मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्रति ॥

ज्वलत्कालानलोद्दीप्तां विचिन्त्य प्रजपेन्मनुम् ।
सप्तभिर्वासरैश्शत्रुः मृत्युमाप्नोति मोहितः ॥

अङ्गारवारे चित्यग्नौ सर्षपस्नेहलोलितम् ।
सिद्धार्थकुड्मं जप्तं जुहुयात्पक्षमात्रतः ॥

कृत्यास्त्रज्वालया दग्धो रिपुर्यमपुरं व्रजेत् ।
चतुर्दश्यामर्धरात्रे चितास्थीन्यष्ट साधकः ॥

व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ।
अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः ॥

व्रणतैलं—विवेचेतैल சேங்கொட்டை தைலம்.

उष्ट्रास्थिनिर्मितां शत्रोश्रेणतैलपरिप्लुताम् ।
प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः ॥

छित्वा छित्वाऽजरक्तेन सप्ताहान्म्रियते रिपुः ।
महिष्या वत्सकं गृह्य एकरात्रमुपोषितः ॥

पाययेत्सर्पिषः प्रस्थं महिष्यास्स्तनजोद्भवम् ।
आशया ग्रथिताङ्गं च प्रतिष्ठितसमीरणम् ॥

तीक्ष्णतैलायुतं हुत्वा विषवृक्षेधितेऽनले ।
जुहुयाद्वत्सकं तस्मिन् साधितं मन्त्रसाधकः ॥

अरिर्गच्छति चैकेन दिवसेन यमक्षयम् ।
श्मशानवालुकाः स्पृष्ट्वा साक्षता नियुतं जपेत् ॥

विकिरेत्तास्तटाकादौ कृत्यास्त्रकाथितं जलम् ।
तदीयं पीतमचिरात् निहन्ति समस्तान् जनान् ॥

कृष्णाङ्गारचतुर्दश्यां प्रजप्तैः प्रेतभस्मभिः ।
महिषाज्येन लुळितास्तन्मन्त्राक्षरसंख्यया ॥

निर्माय गुळिका एतास्सम्यक् जप्तसमीरणाः ।
चिताकाष्ठैश्चिते वह्नौ जुहुयात् दृढमानसः ॥

चतुर्दशीत्रयादर्वाक् शत्रुर्मृत्युवशो भवेत् ।
श्मशानभस्म सिद्धार्थं पञ्चगव्ये विनिक्षिपेत् ॥

माहिषे संस्मरन्देवीं कालाग्निसदृशप्रभाम् ।
भर्जयेत्प्रजपन्मन्त्रं विषकाष्ठैश्चितानले ॥

दुर्गागारे प्रजुहुयादनेनायुधमन्त्रवित् ।
पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत् ॥

सा सेना बहुधा भिन्ना ज्वररोगविमोहिता ।

आयुधानि परित्यज्य युद्धकाले पलायते ॥

गेहे ग्रामादिषु क्षिप्त्वा कुर्यादुच्चाटनं क्षणात् ।
सप्तनारेषु गुल्फिके दुर्गावेश्मनि शर्करे ॥

सप्त माहेन्द्रदिग्भजं गृहीत्वा प्रजपेन्मनुम् ।
महिषीपञ्चगव्येषु भर्जयेत्तद्यथा पुरा ॥

भूयो जपित्वा निक्षिपेत गेहग्रामपुरेष्विमाः ।
स देशो नश्यति क्षिप्रं दग्धो मन्त्रहुताग्निना ॥

वज्रं-निर्घडिग सक्कारककलाणी

पट्बिन्दुपट्क प्रुत्तन्यां निखनेदोदनान्वितम् ।
स्पृष्ट्वा तां प्रजपेदस्त्रं कृष्णाष्टम्यां निशार्धतः ॥

शत्रुनामसमायुक्त श्मशाने निखनेदिमाम् ।
प्रणश्येच्च रिपुश्शीघ्रं सकुटुम्बस्सबान्धवः ॥

पट्बिन्दुरिति-भृङ्गविषः ।

कपालशकल मन्त्री कृत्वास्त्राक्षरसंख्यकान् ।
संस्पृश्य प्रजपेदस्त्रं प्राणस्थापनपूर्वकम् ॥

कृष्णाङ्गारचतुर्दश्यां श्मशाने निपवृक्षजे ।
जुहुयादजरक्ताक्तान् कृत्यास्त्रज्वालया हतः ॥

रिपुर्यमपुरं गच्छेत् महाज्वरनिपीडितः ।
अजरक्तेन संपूर्णे कलशे निक्षिपेदहिम् ।
कपालेन पिधायैनं छादयेद्रक्तवाससा ॥

पूजयेद्रक्तपुष्पाद्यैः स्पृष्ट्वा तमयुतं जपेत् ।
भौमवारे निशामध्ये कारस्करसमन्विते ॥

श्मशानवह्नौ जुहुयात् गच्छेद्यमपुरं रिपुः ।

शत्रुनक्षत्रवृक्षेण कृत्वा कुम्भं प्रपूरयेत् ॥

माहिषैः पञ्चगव्यैस्तद्विडालं तत्र निक्षिपेत् ।
जपपूजादिकं सर्वं यथापूर्वं समाचरेत् ॥

कारस्करभवे वह्नौ कृत्यास्त्रेण समेधिते ।
अयुतं व्रणतैलेन हुत्वान्ते तं घटं पुनः ॥

आमस्तकं समुद्धृत्य जपन्मन्त्रमनन्यधीः ।
जुहुयाद्विधिनानेन त्रिदिनान्म्रियते रिपुः ॥

त्रिकोणकुण्डनिहिते वह्नौ मन्त्रेण दीपिते ।
अर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात्क्रमात् ॥

राजीभल्लातकतिलतैलैः सप्तदिनं ततः ।
प्रसूतिसमयं प्राप्तां महिषीं स्थापितानिलाम् ॥

पूजितां गन्धपुष्पाद्यैः स्पृशन् कूर्चेन तां जपेत् ।
मस्तकाद्योनिपर्यन्तं धिया वत्समनुस्मरन् ॥

आकृष्य हस्ते पतितं जुहुयादेधितेऽनले ।
एवं कृते समुत्पन्ना कृत्या दीप्ता हुताशनात् ॥

भक्षयेदचिराच्छत्रुमीश्वरेणापि रक्षितम् ।
पुनरग्नौ विशत्येषा कर्तारमपि(भि)कांक्षिणी ॥

एवंविधानि कर्माणि यः कुर्यान्मन्त्रवित्तमः ।
स जपेदात्मरक्षार्थं मन्त्रान्मृत्युञ्जयादिकान् ॥

इमानि मानुषान्याहुः नक्षत्राणि मनीषिणः ॥

ज्येष्ठाशतभिषङ्मूलधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाख्याः तारा राक्षसदेवताः ॥

अश्विनीरेवतीपुष्यस्वातीहस्ताः पुनर्वसू ।
अनूराधा मृगशिराश्रवणं देवतारकाः ॥

उपक्रमेत नन्दासु रिक्तास्वस्त्रं विवर्जयेत् ।
प्रतिसंहरणं वारे गुरोश्शुक्रस्य वा भवेत् ॥

स्थिरेषु राशिष्वारंभः चरेषु स्याद्विसर्जनम् ।
अस्त्रसंहरणं कुर्यादुभयेषु विचक्षणः ॥

कृष्णपक्षेऽनलेनास्त्रं विसृजेच्छशिना पुनः ।
शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत् ॥

भानुना मोक्षसंहारौ कुर्यात्पक्षद्वये सुधीः ।
पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत् ॥

अथाभिधास्ये मन्त्रेऽस्मिन् सम्यक् षट्कर्मलक्षणम् ।
सर्वतन्त्रानुसारेण प्रयोगफलसिद्धिदम् ॥

शान्तिवश्यस्तम्भनानि द्वेषणोच्चाटने ततः ।
मारणान्तानि संशन्ति षट्कर्माणि मनीषिणः ॥

रोगकृत्याग्रहादीनां निरासश्शान्तिरीरिता ।
वश्यं नराणां सर्वेषां विधेयत्वमुदीरितम् ॥

प्रवृत्तिरोधस्सर्वेषां स्तम्भनं समुदाहृतम् ।
स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतम् ॥

उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम् ।

साध्यनक्षत्रवृक्षेण कृत्वा कुम्भं प्रपूरयेत् ॥

माहिषैः पञ्चगव्यैस्तद्विडालं तत्र निक्षिपेत् ।
जपपूजादिकं सर्वं यथापूर्वं समाचरेत् ॥

कारस्करभवे वह्नौ कृत्यास्त्रेण समेधिते ।
अयुतं व्रणतैलेन हुत्वान्ते तं घटं पुनः ॥

आमस्तकं समुद्धृत्य जपन्मन्त्रमनन्यधीः ।
जुहुयाद्विधिनानेन त्रिदिनान्म्रियते रिपुः ॥

त्रिकोणकुण्डनिहिते वह्नौ मन्त्रेण दीपिते ।
अर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात्क्रमात् ॥

राजीभल्लातकतिलतैलैः सप्तदिनं ततः ।
प्रसूतिसमयं प्राप्तां महिषीं स्थापितानिलाम् ॥

पूजितां गन्धपुष्पाद्यैः स्पृशन् कूर्चेन तां जपेत् ।
मस्तकाद्योनिपर्यन्तं धिया वत्समनुस्मरन् ॥

आकृष्य हस्ते पतितं जुहुयादेधितेऽनले ।
एवं कृते समुत्पन्ना कृत्या दीप्ता हुताशनात् ॥

भक्षयेदचिराच्छत्रुमीश्वरेणापि रक्षितम् ।
पुनरग्नौ विशत्येषा कर्तारमपि(भि)कांक्षिणी ॥

एवंविधानि कर्माणि यः कुर्यान्मन्त्रवित्तमः ।
स जपेदात्मरक्षार्थं मन्त्रान्मृत्युञ्जयादिकान् ॥

अस्त्रं मानुष्यनक्षत्रेष्वारभेत विचक्षणः ।
आसुरेषु प्रयुञ्जीत देवतारासु संहरेत् ॥

पूर्वोत्तरात्रयं पश्चाद्भरण्यार्द्राथ रोहिणी ।

इमानि मानुषान्याहुः नक्षत्राणि मनीषिणः ॥

ज्येष्ठाशतभिषङ्मूलधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाख्याः तारा राक्षसदेवताः ॥

अश्विनीरेवतीपुष्यस्वातीहस्ताः पुनर्वसू ।
अनूराधा मृगशिराश्रवणं देवतारकाः ॥

उपक्रमेत नन्दासु रिक्तास्वस्त्रं विवर्जयेत् ।
प्रतिसंहरणं वारे गुरोश्शुक्रस्य वा भवेत् ॥

स्थिरेषु राशिष्वारंभः चरेषु स्याद्विसर्जनम् ।
अस्त्रसंहरणं कुर्यादुभयेषु विचक्षणः ॥

कृष्णपक्षेऽनलेनास्त्रं विसृजेच्छशिना पुनः ।
शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत् ॥

भानुना मोक्षसंहारौ कुर्यात्पक्षद्वये सुधीः ।
पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत् ॥

अथाभिधास्ये मन्त्रेऽस्मिन् सम्यक् षट्कर्मलक्षणम् ।
सर्वतन्त्रानुसारेण प्रयोगफलसिद्धिदम् ॥

शान्तिवश्यस्तम्भनानि द्वेषणोच्चाटने ततः ।
मारणान्तानि संशन्ति षट्कर्माणि मनीषिणः ॥

रोगकृत्याग्रहादीनां निरासश्शान्तिरीरिता ।
वश्यं नराणां सर्वेषां विधेयत्वमुदीरितम् ॥

प्रवृत्तिरोधस्सर्वेषां स्तम्भनं समुदाहृतम् ।
स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतम् ॥

उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम् ।

प्राणिनां प्राणहरणं मारणं समुदाहृतम् ॥

स्वदेवतादिक्कालादीन् ज्ञात्वा कर्माणि साधयेत् ।
रतिर्वाणी रमा ज्येष्ठा दुर्गा काळी यथाक्रमात् ॥

षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत् ।
ईशचन्द्रेन्द्रनिऋतिवाय्वग्नीनां दिशो मताः ॥

सूर्योदयं समारभ्य घटिकादशकं क्रमात् ।
ऋतवस्स्युर्वसन्ताद्या अहोरात्रं दिनेदिने ॥

वसन्तग्रीष्मवर्षाणि शरद्धेमन्तशैशिराः ।
हेमन्तश्शान्तिके प्रोक्तः वसन्तो वश्यकर्मणि ॥

शैशिरः स्तम्भने ज्ञेयः विद्वेषो ग्रीष्म ईरितः ।
प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्मणि ॥

पद्माख्यं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः ।
वज्रं भद्रकमित्याहुरासनानि मनीषिणः ॥

षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।
मुसलाशनिखङ्गाख्याश्शान्तिकादिषु कर्मसु ॥

जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्तितम् ॥

उच्चाटने स्मृतो वायुः मतोऽग्निर्मारणे ततः ।
तत्तद्विभूतये सम्यक् तत्तन्मण्डलसंयुतम् ॥

तत्तत्कर्म विधातव्यं मन्त्रिणा निशितात्मना ।
शीतांशुसलिलक्षोणीव्योमवायुहविर्भुजाम् ॥

वर्णास्स्युर्यन्त्रबीजानि षट्कर्मसु यथाक्रमम् ।
ग्रथनं च विदर्भं च संपुटो रोधनं तथा ॥

योगः पल्लव इत्येते विन्यस्ताः षट्सु कर्मसु ।
मन्त्रार्णान्तरितान्कुर्यान्नामवर्णान्यथाक्रमम् ॥

ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्मणि ।
मन्त्रार्णद्वन्द्वमध्यस्थं साध्यनामाक्षरं लिखेत् ॥

विदर्भ एष विज्ञेयः मन्त्रिभिर्वश्यकर्मणि ।
आदावन्ते च मन्त्रस्स्यान्नाम्नोऽसौ संपुटस्स्मृतः ॥

स एष स्तम्भने शस्त इत्युक्तो मन्त्रवेदिभिः ।
नाम्नामाद्यन्तमध्येषु मन्त्रः स्याद्रोधनं मतम् ॥

विद्वेषणविधानेषु प्रशस्तमिदमीरितम् ।
मन्त्रस्यान्ते भवेन्नामयोगः प्रोच्चाटने मतः ॥

अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः ।
सितरक्तपीतमिश्रकृष्णधूम्राः प्रकीर्तिताः ॥

वर्णतो मन्त्रसंप्रोक्ता देवताष्षट्सु कर्मसु ।
यन्त्राणां लेखनद्रव्यं चन्दनं रोचना निशा ॥

ग्रहधूमश्चिताङ्गारो मारणेऽष्टविषाणि च ।
श्येनाऽग्निलोणपिण्डानि धुत्तूरकरसस्ततः ॥

ग्रहधूमस्त्रिकटुकं विषाष्टकमुदीरितम् ।

श्येनं — a kiln स्थूरणम् ।

देवताकालमुद्रादीन्सम्यक् ज्ञात्वा विचक्षणः ।
षट्कर्माणि प्रयुञ्जीत यथोक्तफलसिद्धये ॥

अथ कल्पान्तरोक्तप्रकारेण त्रिष्टुभः प्रयोगो लिख्यते —

अपामार्गसमिद्भिस्तु जुहुयादयुतत्रयम् ।

विनश्यन्त्याशु कूश्माण्डवेताळाद्या ग्रहास्तथा ॥

ज्वरादिकास्तथा रोगा विनश्यन्ति न संशयः ।

प्रयोगान्तरम् —

जुहुयान्निम्बपत्रैस्तु तिलतैलाभिपूरितैः ॥

समिद्भिर्वाऽयुतं मन्त्री शत्रोर्विद्वेषणं भवेत् ।

निम्बं — வேம்பு तिलतैलं — तिलस्य तैलम् ॥

प्रयोगान्तरम् —

खादिराणां समिल्लक्षमुच्चाटनकरं भवेत् ।

खादिरं—खैर । प्रयोगान्तरम् —

देशान्तरं गच्छति योर्थकामी तस्यैव नाम्ना जुहुयात् घृतेन ।
अष्टाधिकं सप्तदिनं सहस्रं शीघ्रं समागच्छति सोऽतिदूरात् ॥

तत्र तस्यैव नाम्नेति साध्यस्य नामयुक्तेन मन्त्रेणेत्यर्थः ॥

प्रयोगान्तरम् —

रक्तकार्पासपुष्पाणि मन्त्रेणानेन होमयेत् ।
रक्तचन्दनमिश्राणि लोकवश्यमिति स्मृतम् ॥

रक्तकार्पासपुष्पं—तांमडाकापूस । செம்பருத்திப்பூ ।

प्रयोगान्तरम् —

क्रुद्धस्य चाग्रतो गत्वा मन्त्रमष्टशतं जपेत् ।
सद्यश्शान्तिमवाप्नोति दीप्तवह्निरिवाम्बुना ॥

प्रयोगान्तरम् —

दूर्वां गळूचिकां वापि आम्रपर्णदळानि वा ।
त्रिमध्वक्तानि जुहुयात् सहस्रं ज्वरशान्तये ॥

पर्णं-पलाशम् । सर्वमपि त्रिमध्वक्तमित्यभिप्रायः ।

प्रयोगान्तरम् —

कण्ठदघ्ने जले स्थित्वा अयुतं ज्वरशान्तये ।

जपेदिति शेषः ॥ प्रयोगान्तरम् —

भृङ्गी पुनर्नवा चैव तिलतैलेन मिश्रिता ।
कुण्डलीपत्रहोमेन कासश्वासज्वरापहा ॥

भृङ्गी-माका கரிச்சாங்கண்ணி पुनर्नवा-சாரடை कुण्डलीति—நாயுருவணங்கு

प्रयोगान्तरम् —

दूर्वां स्वादक्तकां हुत्वा वाग्रोधाच्च प्रमुच्यते ।

स्वादु-त्रिमधुरम् । प्रयोगान्तरम् —

औदुम्बरैरर्थकामी श्रीकामी बिल्वकैरपि ।
नाळिकेरफलैर्होमे दन्तरोगस्तु नश्यति ॥

चूर्णाश्वगन्धिमूलेन घृतशर्करया युतम् ।
अयुतं होमयेन्मन्त्री क्षयरोगो विनश्यति ॥

अश्वगन्धि — अमुक्कराय् । तस्य चूर्णितमूलेन घृतशर्करामिश्रितेन हुनेदित्यर्थः ॥

प्रयोगान्तरम् —

कदळीं नारिकेळं वा घृततैलेन मिश्रितम् ।
अयुतं होमयेन्मन्त्री तस्य रोगो विनश्यति ॥

घृततैलेनेति—घृतेन तैलेन चेत्यर्थः ।

प्रयोगान्तरम् —

दधिमध्वाज्यसिक्ताश्च चतुरंगुलसंमिताः ।
गळूचीरष्टसाहस्रं हुनेत् व्याधिर्विनश्यति ॥

वमनं ब्रह्मपत्रं वा घृतशर्करामिश्रितम् ।
हुत्वा घृतं च तन्मन्त्री मसूरीं नाशयेध्द्रुवम् ॥

वमनमिति-मधु । ब्रह्मपत्रं-पलाशपत्रम् ।

घृतशर्करामिश्रिताभ्यां च घृतेन च हुनेदित्यर्थः ।

अथास्यैव जातवेदोमन्त्रस्य यन्त्रमपि-कल्पान्तरोक्तमत्र लिख्यते—

मायां मध्ये चाष्टकोणेषु कृत्वा पादानष्टौ मातृकार्णप्रवीतान् ।
भूगेहस्थं सर्वभूतामयघ्नं रक्षायुरश्रीकीर्तिपुत्रप्रदं च ॥

तत्र माया भुवनेशी । पादानष्टाविति । जातवेदोमन्त्रस्याष्टौ पादान् पूर्वं पूजाविधाने प्रोक्तानित्यर्थः । मातृकार्णप्रवीतान् मातृकार्णैर्वेष्टितानिति ।

अथ त्रिष्टुभो विधाने कृत्या नश्यति । तस्मिन् वीक्षन्ते न ग्रहादयो भीत्या इति कृत्याशान्तिकरप्रयोगप्रसङ्गात् कृत्याशान्तिकरं यां कल्पयन्तीयन्त्रं मन्त्रसारोक्तमत्र योग्यतावशात् लिख्यते —

अष्टपत्रस्य पद्मस्य कर्णिकायां विलिख्य च ।
तारं पत्रेषु मन्त्राणां चतुरश्चतुरस्ततः ॥

मातृकार्णैश्च संवेष्ट्य क्ष्रौं बीजं कुग्रहाश्रिषु ।
यां कल्पयन्तीयन्त्रं तु धारयेद्यो यथाविधि ॥

कृत्यादिभयनिर्मुक्तः जीवेत्स शरदां शतम् ।

अस्यार्थः — प्रथममष्टपत्रं पद्मं विलिख्य, तत्कर्णिकामध्ये प्रणवं विलिख्य, तदन्तस्साध्यनामादीन् विलिखेत् । अष्टपत्रेषु मन्त्रस्य चतुरश्चतुरो वर्णान्विलिखेत् । तद्बहिर्मातृकावर्णैस्संवेष्ट्य तद्बहिश्चतुरश्रं विलिख्य कोणेषु क्ष्रौं इति विलिखेत् । एवं विलिख्य धृते उक्तफलं भवति । मूलमन्त्रस्तु उपरि वक्ष्यते यां कल्पयन्ति नोरय इत्यादि त्रयस्त्रिंशत्पटले ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
एकोनत्रिंशत्पटलः ॥

## ॥ अथ त्रिंशत्पटलः ॥

अथ त्रिष्टुप्मन्त्रप्रसङ्गात् त्रिष्टुप्त्रयाख्य आयुष्करमन्त्रोऽपि योग्यतावशाल्लिख्यते —

तत्र प्रथमं ब्रह्मदैवत्या त्रिष्टुप् पूर्वमुच्यते । अग्नि ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता । ओं नमो भगवते हिरण्यगर्भाय चतुर्दशभुवनाधिपतये मृत्योर्मा रक्ष रक्ष सर्ववेदानन्दमयानन्दाय ब्रह्मणे स्वाहा ॥

अन्योपि ब्रह्मत्रिष्टुभाख्यो मन्त्रो लिख्यते । विधिः ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता ॥ ओं तत्सन्नमो[1] ब्रह्मणे विश्वरूपाय सर्ववेदात्मस्वरूपवपुषे त्रिगुणातीतप्रणवात्मने मृत्योर्मा रक्ष रक्ष हुंफट् स्वाहा । इति वा ब्राह्मी त्रिष्टुप् ॥

द्वितीयस्तु जातवेदस इत्यृक् । तृतीयस्तु भद्रं कर्णेभिरित्यादि । एवं त्रिष्टुप्त्रयम् । आयुः प्रधानोयं मन्त्रः ॥

अथ त्र्यम्बकविधानमुच्यते —

वसिष्ठ ऋषिः । अनुष्टुप् छन्दः । त्र्यम्बकरुद्रो देवता । त्र्यम्बकं हृत् । यजामहे शिरः । सुगन्धिं पुष्टिवर्धनं शिखा । उर्वारुकमिव बन्धनात् कवचम् । मृत्योर्मुक्षीय मामृतात् अस्त्रम् । ध्यानम् —

अच्छस्वच्छारविन्दस्थितिरुभय [2]कराङ्गस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।
द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलाबन्धुरे प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं वः ॥

---

१. ङ मातृकायां नमो इत्यतः परं भगवते इति नूतनतया योजितः पाठः ।

२. कराङ्क इति ग, ङ, मातृकापाठः ।

तत्र देहो हरिणशिशुः । त्र्यम्बकं यजामहे इत्यादिमन्त्रः । आयुः-प्रधानोयं मन्त्रः ॥

अथाक्षरन्यास उच्यते —

प्राक् प्रत्यक् याम्य सौम्य प्रलसितवदनो रोगलांसेषु नाभौ
हृद्देशे पृष्ठकुक्ष्योरथ शिवगुदयोरूरुमूलान्तयोश्च ।
जान्वोस्तद्वृत्तयुग्मस्तनतटयुगपार्श्वेषु पत्पाणिनासा-
शीर्षेष्वप्यूर्ध्वतोर्णैर्न्यसतु पुनरधस्तोपि मन्त्री तथोर्ध्वम् ॥

चरणाग्रसन्धिगुह्याधारोदरहृदयकन्धरेषु पुनः ।
बाह्वोस्सन्ध्यग्रास्यघ्राणद्वयदृक्श्रुतिभ्रुशीर्षेषु ॥

वर्णान् न्यस्य (सेत्) ॥

पदन्यासः —

शिरोभ्रूदृग्वक्त्रकगळहृदुदरगुह्येषु ।
ऊर्वोर्जान्वोः पदयोः पदैश्च मनुवित् क्रमेण विन्यस्येत् ॥

त्र्यम्बकं, यजामहे, सुगन्धि, पुष्टिवर्धनं, उर्वारुकं, इव, बन्धनात्, मृत्योः, मुक्षीय, मा, अमृतात् । इत्येकादशपदानि ॥ एवं न्यस्य लक्षं जपेत् ।

अथ पूजा —

प्रासादविधानोक्ते पीठे पञ्चगव्यैर्वा क्षीरद्रुमचर्मकथितकषायैर्वा दीक्षा-कलशं संपूर्य महेश्वरमावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । अर्काय० इन्दवे० धरण्यै० अद्भ्यः० अनलाय० वायवे० आकाशाय० यजमानाय० अष्टमूर्तिसंज्ञकैरेतैर्द्वितीयावृतिः । रमायै० राकायै० प्रभायै० ज्योत्स्नायै० पूर्णायै० उषायै० *पूरिण्यै० सुधायै० ८ इति तृतीयावृतिः । विश्वायै० विद्यायै०

* पूरण्यै इति ग ङ मातृकापाठः

सितायै० प्रह्वायै० सारायै० सन्ध्यायै० शिवायै० निशायै० ८ इति चतुर्थ्यावृतिः। आर्द्रायै० प्रज्ञायै० परायै० मेधायै० कान्त्यै० शान्त्यै० धृत्यै० मत्यै० ८ इति पञ्चम्यावृतिः । वरायै० उमायै० पार्वत्यै० पद्मायै० शान्तायै० *अमोघायै० जयायै० अमलायै० ८ इति षष्ठ्यावृतिः । इन्द्रादिभिस्सप्तमी । वज्रादिभिरष्टमी । एवं संपूज्य समभिषिच्य उक्तसंख्यं जप्त्वा हुनेत् । विल्वेन पलाशेन खादिरेण वटेन तिलेन सिद्धार्थेन दौग्धेन दुग्धेन दध्ना दूर्वया च एतैर्दशभिराज्यसिक्तैः प्रत्येकं सहस्रसंख्यं पुरश्चरणाहोमः ॥

खादिरं–खयिर । सिद्धार्थं–मोहरया । दौग्धं–पायसम् ।

अथ प्रयोगः —

बिल्वैरयुतं हुत्वा महतीं लक्ष्मीमवाप्नुयाद्विप्रः ।

प्रयोगान्तरम् —

तावद्भिर्द्विजवृक्षैः द्विजः श्रियं पुष्कलामवाप्नोति ।

प्रयोगान्तरम् —

अयमर्थः — द्विजवृक्ष-पलाश । एतैरयुतं हुनेत् । श्रियं प्राप्नोति ॥

प्रयोगान्तरम् —

न्यग्रोधायुतहोमात् धनधान्यसमृद्धिमेति नचिरेण ।

न्यग्रोधं-वटम् । प्रयोगान्तरम् —

अयुतं तिलैः प्रजुहुदपमृत्योः पाप्मनो विमुक्तस्स्यात् ।

प्रयोगान्तरम् —

सिद्धार्थायुतहोमात् वैरिणमपमृत्युमपि विनाशयति ।

सिद्धार्थ–मोहराया ॥ प्रयोगान्तरम् —

* अमोघायै इत्यस्य उपरि आमोदायै इत्यपि पाठः ङ मातृकायां योजितः ।

पायसहुतेन परमां रमामथायुर्यशो लभेन्मर्त्यः ।

प्रयोगान्तरम् —

दुग्धहुताच्छान्तिः स्यात्परकृत्या नश्यति श्रियं लभते ।

शान्तिरिति । उपद्रवारिष्टादिशान्तिः । परकृत्येति । परप्रेपिता देवता ॥

प्रयोगान्तरम् —

दधिहोमतोऽन्नवान्स्यात् संवननकरं च तद्वदन्ति बुधाः ।

संवननं–वशीकरणम् ॥ प्रयोगान्तरम् —

दूर्वाऽयुतेन जुहुद्रोगान्निरस्य सर्वमपमृत्युम् ।
गर्वितधीरब्दानां विप्रवरस्सर्वधा शतं जीवेत् ॥

प्रयोगान्तरम् —

निजजन्मदिने पयोन्धसा वा शतवीर्यात्रितयैः पयोघृताक्तैः ।
जुहुयाच्च शतं सविंशतिं यः स लभेदायुररोगतां चिराय ॥

पयोन्धः — क्षीरपायसम् । शतवीर्या–दूर्वा ।

अयमर्थः — विंशत्युत्तरं शतं प्रतिनक्षत्रं एतयोर्द्रव्ययोरेकेन हुनेत् ॥

प्रयोगान्तरम् —

काश्मर्यदारुसमिधां त्रिशतं समेतं
सर्पिःपयोन्नसहितं त्रिदिनं जुहोतु ।
विप्रान् प्रतर्प्य च गुरुं परिपूज्य सम्यक्
दीर्घं विमुक्तगदमायुरवाप्तकामः ॥

काश्मर्य- பெருங்குமிழ். पयोन्न–क्षीरपायसम् ।

अयमर्थः — एवं त्रिभिर्द्रव्यैः एकैकं शतसंख्यया संभूय त्रिदिनं शतशो हुनेत् । एवं त्रिशतसंख्यया त्रिदिनं हुनेत् । आयुर्भवति ॥

प्रयोगान्तरम्—

स्नात्वाऽर्काभिमुखोंभसि स्थित इमं मन्त्रं सहस्रं जपे-
दायुष्यं प्रतिपर्व दुग्धहविषा होमो महाश्रीप्रदः ।

अयमर्थः–जले स्थित्वा जपेदायुरर्थम् । प्रतिपर्व क्षीरपायसेन जुहुयात् । श्रीप्रदो भवति ॥

प्रयोगान्तरम्—

लाजाभिर्निजवाञ्छिताय हवनात्कन्याऽऽशु सन्दीयते

प्रयोगान्तरम्—

स्वाद्वक्तस्तनजद्रुहोमविधिना वर्णान्वशे स्थापयेत् ॥

वर्णानिति चातुर्वर्ण्यवशीकरणं समित्क्रमेणेत्यर्थः । स्वादु–त्रिमधुरम् । मधुगुळघृतमिश्रितमित्यर्थः । स्तनजद्रुमं–क्षीरद्रुमम् ॥

अथास्यैव त्र्यम्बकमन्त्रस्य मन्त्रसारोक्तं यन्त्रमुच्यते—

आलिख्याष्टदलं पद्मं तारं तत्कर्णिकान्तरे ।
तस्योदरे च समिति बीजं साध्यार्णवेष्टितम् ॥

तारस्य पार्श्वयोर्द्दष्टी इ ई इति च तत्पुरः ।
जिह्वां स्यूमिति दिक्ष्वेतान्सोहं हम्साक्षरान्बहिः ॥

द्वौ द्वौ स्वरौ केसरेषु दलेषु त्र्यम्बकाक्षरान् ।
चतुरश्चतुरो बाह्ये वेष्टितं व्यञ्जनाक्षरैः ॥

मात्वा रुद्रेत्यृचावीतं साध्यवर्णविदर्भया ।
भूपुराश्रिषु ठंबीजं दिक्षु वं बीजमेव च ॥

प्राणप्रतिष्ठामन्त्रं च गायत्रीं मन्त्रयन्त्रयोः ।
यथावकाशं विलिखेत्स्वगुरूक्तेन वर्त्मना ॥

आनुष्टुभं यन्त्रमिदं गोपनीयं प्रयत्नतः ।
आयुरारोग्यसौभाग्यधर्मार्थसुखमोक्षदम् ॥

किमत्र बहुनोक्तेन कांक्षितार्थसुरद्रुमः ।

अयमर्थः — प्रथममष्टपत्रं पद्मं विलिख्य, तत्कर्णिकायां प्रणवं विलिख्य, तदन्तः सं इति जीवं विलिखेत् । तं जीवं साध्यनामाक्षरैर्वेष्टयेत् । पुनस्तस्योत्तरदक्षिणयोः पार्श्वयोः इ ई इति दृष्टयक्षरे विलिखेत् । पुनस्तस्य पुरतः स्यूं इति जिह्वाक्षरं विलिखेत् । पुनस्तस्य प्रत्यक्पूर्वोत्तरदक्षिणासु दिक्षु हंसः सोहं इत्यक्षरान् विलिखेत् । एतत्सर्वं कर्णिकायामेव । अयं तु सर्वयन्त्रेपि समानो न्यायः ॥

तत्र प्रणवलेखने चेत्, तत्र तत्र विशेषः । क्वचित् भुवनेशी, क्वचित् कामबीजादीति । पुनर्बहिर्दळमूलेषु स्वराक्षरद्वन्द्वं विलिखेत् । अकारादिषोडशाक्षराणि स्वरसंज्ञानि । पुनर्दळमध्येषु त्र्यम्बकाक्षराणि चत्वारि चत्वारि विलिखेत् । पुनर्बाह्ये कादिक्षान्तैर्वेष्टयेत् । तद्बहिर्मात्वारुद्रचुक्रुधामेत्यृचा ऋगक्षरद्वयान्तरितसाध्यवर्णया वेष्टयेत् । पुनर्बहिः भूपुरं विलिख्य तत्कोणेषु ठमिति विलिख्य दिक्षु वमिति विलिखेत् । पुनर्यत्र कुत्र वा यथावकाशं प्राणप्रतिष्ठामन्त्रं (मन्त्रगायत्रीं यन्त्रगायत्रीं च) विलिखेत् ॥

शूलिनीकल्पे —

अनुग्रहबहिर्वक्त्रा निग्रहेऽन्तर्मुखाक्षराः ।
इतरेषामशेषाणां तिर्यग्वक्त्रः प्रशस्यते ॥

अन्यथा लिखितार्णानि सिद्धिक्षयकराणि हि ।
साध्याक्षराण्यशेषाणि व्युत्क्रमाणि भवन्ति वै ॥

नानामुखेषु यन्त्रेषु प्रशस्यन्ते बहिर्मुखाः ।
यन्त्रभेदार्णरेखाणामशेषाणामयं विधिः ॥

अथ ऋष्यादिपूर्वकं प्राणप्रतिष्ठामन्त्रोपि लिख्यते —

ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुस्सामाथर्वाणि छन्दांसि । सकलजगत्सृष्टिकारिणी प्राणधारिणी शक्तिर्देवता । आं बीजम् । क्रों शक्तिः । प्राणप्रतिष्ठार्थे विनियोगः । आं हृत् । ह्रीं शिरः । क्रों शिखा । आं कवचम् । इत्याद्यङ्गानि ॥

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यंकुशं पञ्चबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

आं ह्रीं क्रों य र ल व श ष स हों क्षं सं हंसः अमुष्य प्राणा इह प्राणाः, आं ह्रीं क्रों य र ल व श ष स हों क्षं सं हंसः अमुष्य जीव इह स्थितः, आं ह्रीं क्रों य र ल व श ष स हों क्षं सं हंसः अमुष्य सर्वेन्द्रियाणि वाङ्मनश्चक्षुश्श्रोत्रघ्राणप्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा, क्रों ह्रीं आं हंसः सोहं स्वाहा हंसः सं लं इति । तत्रामुष्यपदात्पूर्वं साध्यदेवतानाम योजयेत् । एवं प्राणप्रतिष्ठामन्त्रः । इमं यथावकाशं विलिखेत् ॥

अथान्योऽपि प्राणप्रतिष्ठालेखनप्रकारोऽपि * लिख्यते —

यकारादिभिर्हकारान्तैर्वर्णैः सबिन्दुकैः लोकपालबीजैः तत्तद्दिक्षु यन्त्रस्य विलिखेत् । अयमपि प्राणप्रतिष्ठालेखनविधिरपरः । एनं यन्त्रहृदयमिति चाचक्षते । अयं लेखनक्रमस्तु प्राणप्रतिष्ठायन्त्रेप्युक्तः ॥

वाय्वग्निवज्रिवरुणेश्वरराक्षसेन्दु-
प्रेतेशदिक्षु लिखितैरथ यादिवर्णैः ।
बिन्द्वङ्कितैः क्षगतहंससमेतमध्यं
प्राणाख्ययन्त्रमथ वर्णवृतान्तरस्थम् ॥

---

* उच्यते इति ख पाठः

अयमर्थः— यन्त्रस्य वाय्वादिदिक्षु उक्तेन क्रमेण यं रं लं वं शं पं सं हं इत्येतानि बीजानि विलिखेदिति । अवशिष्टस्य सर्वस्य प्राणप्रतिष्ठायन्त्रे उपयुक्तत्वादत्र न लिख्यते । एतद्वा प्राणप्रतिष्ठामन्त्रं सर्वत्र विलिखेदिति । एवं द्विविधः प्राणप्रतिष्ठामन्त्रप्रकारः । एतयोरेकं विलिखेत् । पुनः मन्त्रगायत्रीं विलिखेत् ॥

मन्त्रराजाय विद्महे महामन्त्राय धीमहि ।
तन्नो मन्त्रः प्रचोदयात् ॥

पुनः यन्त्रगायत्रीं विलिखेत् ।

यन्त्रराजाय विद्महे महायन्त्राय धीमहि ।
तन्नो यन्त्रः प्रचोदयात् ॥

एतौ द्वावपि मन्त्रौ सर्वत्र यथावकाशं विलिखेत् ।

अथ रक्षाबन्धनमन्त्रोऽपि लिख्यते—

अग्ने रक्षाण इति च रक्षाबन्धनमाचरेत् ।
बध्वा रक्षामथाचार्यो रक्ष मा चल मा चल ॥

इति मन्त्रं जपेत्स्पृष्ट्वा रक्षामिष्टार्थसिद्धये ।

इति कल्पान्तरे प्रोक्तम् ॥

अथ त्र्यम्बकविधानप्रसङ्गात् त्र्यम्बककल्पोक्तं होमादिविधानमप्यत्र योग्यतावशाल्लिख्यते —

अत्र कृत्वाऽऽज्यभागान्तं सर्वमुल्लेखनादिकम् ।
स्वगृह्योक्तविधानेन ततो होमं समाचरेत् ॥

अयमर्थः—सर्वकामहोमविषये पूर्वं स्वगृह्योक्तविधानेन आज्यभागान्तं कृत्वा, पश्चात् तत्तद्देवतामर्चां तत्तद्विधानेन पीठं संपूज्य तस्मिन्समावाह्य

परिवारैस्सह समर्च्य, पश्चात्परिषेचनादिकं कृत्वा होमं समाचरेत्। अयं न्यायस्तु सर्वहोमेपि समानः ॥

अथ प्रयोगः —

आयुष्कामो घृतेनैव जुहुयात् लक्षसंख्यया ।
अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा ॥

प्रयोगान्तरम् —

दूर्वात्रिकैर्वा जुहुयात् मधुरत्रयसंयुतैः ।
गळूचिभिः परिच्छिन्नैश्चतुरंगुलमानतः ॥

अयमर्थः—दूर्वाभिः त्रिमधुरसिक्ताभिः पूर्वोक्तलक्षादिसंख्यासु विकल्पितास्वेकसंख्यया आयुरर्थं जुहुयात्। अथवा पूर्वोक्तसंख्ययैव चतुरंगुलपरिमाणेन परिच्छिन्नाभिर्गळूचिभिर्हुनेत् आयुरर्थम् ॥

प्रयोगान्तरम् —

अथवा जुहुयाद्विद्वानक्षतैः शालितण्डुलैः ।
प्रक्षाळितैस्तिलैर्वापि जुहुयाद्गोघृताप्लुतैः ॥

अयमर्थः — शाली-கொளச்சம்நெல் शालितण्डुलेन संपादितैरक्षतैर्वा प्रक्षाळितैः गोघृतसिक्तैश्च तिलैर्वा पूर्वोक्तविकल्पसंख्यासु एकसंख्यया जुहुयादायुरर्थमेव ।

प्रयोगान्तरम् —

पलाशसमिधो हुत्वा सर्वमायुरवाप्नुयात् ।
अथवा गोघृताक्तेन पायसेनैव होमयेत् ॥

अयमर्थः — पलाशसमिद्भिर्वा गोघृतसिक्तेन क्षीरपायसेन वा पूर्वोक्तसंख्ययैव हुनेदायुरर्थम् ॥

अथायुरर्थमेव प्रयोगान्तरम्—

अथातस्तर्पयेद्देवं उदकेन समाहितः ।
आसीनः प्राङ्मुखो भूत्वा जपेद्वा पूर्वसंख्यया ॥

ब्राह्मणान् भोजयेन्नित्यं वेदवेदाङ्गपारगान् ।

प्रयोगान्तरम्—

आरोग्यकामो जुहुयादर्ककाष्ठैर्घृताप्लुतैः ॥

पयसा वापि जुहुयात् गव्येनाज्येन वा पुनः ।

अर्ककाष्ठं—रुयीचेंशकल । अयमर्थः— घृतसिक्तैरर्कशकलैर्वा क्षीरेण वा घृतेन वा संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयादारोग्यकामी ॥

प्रयोगान्तरम्—

पालाशसमिधो वापि सर्वरोगप्रशान्तये ॥

प्रयोगान्तरम्—

अच्छिद्रैराम्रपर्णैस्तु पयोक्तैर्जुहुयाज्ज्वरे ।
गळूचीपट्टिकाभिर्वा खादिरैर्वा घृताप्लुतैः ॥

आम्रपर्ण—अंब्याचीपर्ण । गळूचीपट्टिका — गुळवेळची साळी சீந்தில்தோல். खादिरं—खैर ।

(अयमर्थः) छिद्रादिरहितैः पयस्सिक्तैराम्रपर्णैर्वा गळूचीत्वग्भिर्घृताक्ताभिर्वा तत्सिक्ताभिः खादिरसमिद्भिर्वा संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् ज्वरशान्त्यर्थम् ॥

प्रयोगान्तरम्—

प्रमेहे मधुना होमः पयसा वा घृतेन वा ।

औदुम्बरसमिद्भिर्वा होमः पालाशकेन वा ॥

प्रयोगान्तरम् —

गुल्मशान्तौ तु होमः स्यात्तिलैः पिष्टैर्घृतेन वा ।
करण्डसमिधो वापि निर्गुण्डीसमिधोऽपि वा ॥

करण्डं–கோங்கு निर्गुण्डी–நொச்சில்

अयमर्थः — तिलैर्वा पिष्टेन वा आज्येन वा करण्डसमिद्भिर्वा निर्गुण्डीसमिद्भिर्वा गुल्मव्याधिशान्त्यर्थं सहस्रसंख्यं हुनेदिति ॥

प्रयोगान्तरम् —

तैलेनाज्येन जुहुयाद्वातरोगप्रशान्तये ।
शमीसमिद्भिर्जुहुयादाभिचारप्रशान्तये ॥

शमी–सौंदडी । अयमर्थः — तैलेन वा घृतेन वा सहस्रं वातरोग-शान्त्यर्थं जुहुयात् । आभिचारप्रशान्त्यर्थं शमीसमिद्भिर्हुनेत् ॥

प्रयोगान्तरम् —

शान्त्यर्थमक्षिरोगाणां पालाशसमिधोपि वा ।
उन्मत्तसमिधो हुत्वा (होमः) अपस्मारप्रशान्तये ॥

उन्मत्तं–धोतरा ॥

प्रयोगान्तरम् —

कुबेराक्षीन्द्रवल्लीभ्यामामशूलेषु होमयेत् ।

कुबेराक्षी–கொடிக்கழல் इन्द्रवल्ली–மொடெக்கொத்தான் अयमर्थः— एताभ्यां, द्वाभ्यां शूलव्याधिपरिहारार्थं सहस्रं हुनेत् ॥

प्रयोगान्तरम् —

तैलेनाज्येन जुहुयादिक्षुखण्डैस्तथैव च ।
मातुळङ्गगळूचीनां होमः कामिलनाशनः ॥

मातुळङ्गं–தாிஞ்சு, கொம்மட்டிமாதுளை गळूची–गुळवेळ ॥

अयमर्थः— एतैस्सर्वैः सहस्रं जुहुयात् कामिलव्याधिशान्त्यर्थम् ॥

प्रयोगान्तरम् —

मधुरत्रयहोमेन शान्तिस्स्याद्राजयक्ष्मणः ।

अयमर्थः — त्रिमधुरहोमेन राजयक्ष्मरोगस्य शान्तिः ॥

प्रयोगान्तरम् —

पालाशसमिधो हुत्वा (होमः) गळरोगप्रशान्तये ।

प्रयोगान्तरम् —

इच्छन्मसूरिकाशान्ति मधुरत्रयसंयुतैः ।
छिन्नोद्भवैर्वा जुहुयात्पालाशैर्वा घृताप्लुतैः ॥

छिन्नोद्भवं-गुलवेल (சீந்தில்) अयमर्थः – त्रिमधुरसिक्तैः छिन्नोद्भवैर्वा घृतसिक्ताभिः पलाशसमिद्भिर्वा मसूरिकाशान्त्यर्थं सहस्रसंख्यं हुनेत् ॥

प्रयोगान्तरम् —

गव्येनाज्येन जुहुयादक्षिरोगप्रशान्तये ।

प्रयोगान्तरम् —

दन्तरोगेषु जुहुयादर्ककाष्ठैर्घृताप्लुतैः ॥

अथवा तैलसंयुक्तैर्जुहुयाद्गौरसर्षपैः ।

अर्ककाष्ठं-रुयीचें शकल । गौरसर्षपं–पाण्डरया मोहरया । अयमर्थः— घृतसिक्तैरर्कशकलैर्वा तैलसिक्तैर्गौरसर्षपैर्वा दन्तरोगशान्त्यर्थं सहस्रसंख्यं हुनेत् ॥

प्रयोगान्तरम् —

ये चान्ये मुखजा रोगा शिरोरोगास्तथैव च ।
ते सर्वे प्रशमं यान्ति तिलहोमैर्घृताप्लुतैः ॥

प्रयोगान्तरम् —

औदुम्बरं च सर्वेषां रोगाणां शान्तिमिच्छता ।
सकलरोगशान्त्यर्थं औदुम्बरसमिधो हुनेत् ॥

प्रयोगान्तरम् —

बिल्ववृक्षसमिद्धोमः कर्तव्यो द्विजसत्तमैः ।
अन्तस्तापे तु जुहुयात्पद्मपत्रैर्घृताप्लुतैः ॥

अयमर्थः — बिल्वसमिद्भिश्च पद्मपत्रैश्च घृताप्लुतैः सहस्रं हुनेत् अन्तरुष्णनिवृत्त्यर्थम् ।

प्रयोगान्तरम् —

दूर्वाः पयोक्ता जुहुयाच्चन्दनेन घृतेन वा ।
शतं वाऽश्वत्थसमिधो रक्तस्रावे च होमयेत् ॥

अथवा गोघृतेनैव रक्तातीसारशान्तये ।

अयमर्थः — पयस्सिक्तया चन्दनसिक्तया घृतसिक्तया वा दूर्वया हुनेत् रक्तस्रावशान्त्यर्थम् । अथवा शतमश्वत्थसमिधो हुनेत् रक्तस्रावशान्त्यर्थम् । अथवा गोघृतेनैव जुहुयात् रक्तातिसारशान्त्यर्थम् ॥

प्रयोगान्तरम् —

आस्यरोगेषु सर्वेषु कण्ठरोगे महोदरे ।
त्रिभिः फलैस्तु जुहुयात् मधुक्षीरघृताप्लुतैः ॥

त्रिफलं — अवले, हिरडे, ब्याहडे । நெல்லிக்காய், கடுக்காய் தானிக்காய், अयमर्थः — त्रिमधुरसिक्तैरेतैर्जुहुयात्सहस्रम् ॥

प्रयोगान्तरम् —

मधुरत्रयहोमस्तु सर्वरोगप्रशान्तिदः ।

मधुरत्रितयं-त्रिमधुरम् ।

प्रयोगान्तरम् —

आयुर्वेदेषु यत्प्रोक्तं यस्य रोगस्य भेषजम् ।
तस्य रोगस्य शान्त्यर्थं तेन तेनैव होमयेत् ॥

अयमर्थः — आयुर्वेदेषु यस्य रोगस्य यदौषधमुक्तं तेनौषधेन तद्रोगशान्त्यर्थं हुनेत् ।

प्रयोगान्तरम् —

अथवाऽनेन मन्त्रेण पावमानीभिरेव वा ।
तीर्थतोयेन देवेशमभिषिञ्चेत्समाहितः ॥

ज्वरमारीग्रहादीनां सर्वेषामपि शान्तये ।

पावमानीभिरिति पावमानीसूक्तैरित्यर्थः ॥

प्रयोगान्तरम् —

अथवा तर्पणं कुर्यात् मन्त्री पूर्वोक्तसंख्यया ।
नद्यां समुद्रगामिन्यां तटाकेषु सरस्सु वा ॥

प्राङ्मुखोदङ्मुखो वारि सर्वरोगप्रशान्तये ।

प्रयोगान्तरम् —

अथवा नियताहारो जपेन्मन्त्रं समाहितः ।

शान्तये सर्वरोगाणां तथैवानुद्भवाय च ॥

उक्तमर्थमुपसंहरति —

एवं होमं द्विजः कुर्यात् तर्पणं जपमेव वा ।
आयुरारोग्यसिध्यर्थमात्मनो वा परस्य वा ॥

एकाहं वा ऽयहं वापि दशाहं द्वादशाह्निकम् ।
पक्षं मासं द्विमासं वा मासत्रयमथापि वा ॥

अथवा चतुरो मासान्षण्मासान्वैकहायनम् ।
पापे महति सञ्जाते दीर्घकालं समाहितः ॥

अल्पेऽल्पकालं कुर्वीत जपहोमादिकाः क्रियाः ।
रोगकालोपयुक्तं च द्रव्यं शय्यासनादिकम् ॥

रोगमुक्तस्तु तत्सर्वं नोपयुञ्ज्यात्कदाचन ।
मृतसंजीविनीं नित्यं ब्राह्मणेभ्यः प्रदापयेत् ॥

इति वसिष्ठप्रोक्ते ऽयम्बककल्पे चतुर्थः पटलः ॥

अथ मृत्युञ्जयोपायमहं वक्ष्याम्यतः परम् ।
पूर्वोक्तदेशकालेषु शुचिर्भूत्वा समाहितः ।
मधुत्रितययुक्ताभिः दूर्वाभिर्जुहुयाच्चतः ॥

सहस्रमयुतं वापि श्वेतार्ककुसुमैरथ ।
जुहुयात् गोघृताक्तैस्तु मृत्युं जयति मानवः ॥

अपामार्गसमिद्भिर्वा यवैः कृष्णतिलैरपि ।
अथवा गोघृतेनैव पयसा वापि होमयेत् ॥
कपिलागोघृतं क्षीरं प्रशंसन्ति मनीषिणः ।

अयमर्थः — त्रिमधुरसिक्ताभिर्दूर्वाभिर्वा गोघृतसिक्तैः श्वेतार्ककुसुमैर्वा अपामार्गसमिद्भिर्वा यवैर्वा कृष्णतिलैर्वा गोघृतेन वा क्षीरेण वा सहस्रमयुतं वा होमयेत् । तस्मान्मृत्युं जयति ॥

तत्र घृतक्षीरादि तु कपिलायाः समीचीनतरम् । श्वेतार्क–पाण्ढरीरुयी । अपामार्ग–आधाडा ।

प्रयोगान्तरम् —

शनैश्चरदिनेऽश्वत्थं स्पृशन्मन्त्रमिमं जपेत् ।
अपमृत्युमतिक्रम्य सुखं जीवेन्न संशयः ॥

साक्षान्मृत्योर्विमुक्तस्स्यात् किं पुनस्त्वपमृत्युतः ।

प्रयोगान्तरम् —

अथवा पयसा देवमभिषिच्य घृतेन वा ।
पालाशखादिराश्वत्थसमिद्भिर्जुहुयाद्बुधः ॥

बिल्ववृक्षोद्भवैर्वापि सोऽपि मृत्योर्विमुच्यते ।

खादिरं-खैर । अयमर्थः — क्षीरेण वा घृतेन वा रुद्रमभिषिञ्चेत् । पलाशसमिद्भिर्वा खादिरसमिद्भिर्वा अश्वत्थसमिद्भिर्वा हुनेच्च । तस्मान्मृत्योर्मोचनं भवति ॥

प्रयोगान्तरम् —

अथवा श्रपयित्वा तु पञ्चगव्यचरुं पुनः ।
मन्त्रेणानेन जुहुयात् ध्यायन्नेव त्रियम्बकम् ॥

अष्टोत्तरशतं जप्त्वा मृत्युं जयति मानवः ।

अयमर्थः — पञ्चगव्यं चरुं संपाद्य जुहुयात् । पश्चात् ध्यात्वा जपेच्च । तस्मान्मृत्युं जयति ॥

इति वसिष्ठप्रोक्ते त्र्यम्बककल्पे प्रथमः पटलः ॥

अथोपायान्तरं वक्ष्ये साक्षान्मृत्योर्निवर्तनम् ।
तण्डुलैर्व्रीहिभिर्वापि चतुरस्रं समाहितः ॥

हस्तमात्रप्रमाणेन वेदिं कृत्वा विचक्षणः ।
तन्मध्ये स्थापयेत्कुम्भं सितसूत्रेण वेष्टितम् ॥

वस्त्रयुग्मेन संवेष्ट्य तीर्थतोयेन पूरयेत् ।
तत्रावाह्य महादेवं देवदेवं त्रियम्बकम् ॥

पूजयेद्गन्धपुष्पाद्यैः त्रैय्यम्बकऋचाऽपि च ।
ततोऽभिमन्त्रयेत्कुम्भं मन्त्रेणानेन मन्त्रवित् ॥

अष्टोत्तरसहस्रेण नियतात्मा समाहितः ।
अभिषिञ्चेत् प्रोक्षयेद्वा स्नानाशक्तं विशेषतः ॥

*अपमृत्युभयं तस्य न च व्याधिकृतं भयम् ।*
मातरं पितरं पुत्रं गोसहस्रप्रदायकम् ।
सर्वापत्सु च सर्वत्र मृतसंजीवनीं जपेत् ॥

मृतसंजीवनीति त्र्यम्बकमन्त्रः ॥

इति वसिष्ठप्रोक्ते त्र्यम्बककल्पे षष्ठः पटलः ॥

अथ रक्षाविधिं वक्ष्ये सर्वभूतहितावहम् ।
औपासनेऽग्निहोत्रे वा गृहीत्वा भसितं शुचि ॥

तद्भस्म मन्त्रयेन्मन्त्री मन्त्रेणानेन मन्त्रितम् ।
ललाटे हृदये कण्ठे बाह्वोश्चैव विशेषतः ॥

अनेनैव विधानेन यस्य रक्षा कृता भवेत् ।
नापमृत्युभयं तस्य नच व्याधिकृतं भयम् ॥

इति त्र्यम्बककल्पे किञ्चिल्लिखितम् ॥

इच्छन्मसूरिकाशान्तिं मधुत्रितयसंयुतैः ।

इति त्र्यम्बककल्पे उक्तः खलु वसूरिशान्त्यर्थं प्रयोगः । तत्प्रसङ्गात् मसूरिकाशान्त्यर्थं कल्पान्तरोक्तो घण्टाकर्णमन्त्रोपि अत्र योग्यतावशात् लिख्यते —

घण्टाकर्ण महाप्राज्ञ सर्वोपद्रवनाशन ।
स्फोटकानां रुजं प्राश्य रक्ष रक्ष महाबल ॥

*अनेन मन्त्रेण मसूरीशान्त्यर्थं भस्मादि जपेत् ॥ (अस्य यन्त्रम्—)*

कर्णिकायां लिखेत्तारं क्रमात्पत्रेषु चाष्टसु ।
घण्टाकर्णस्य वर्णांस्तान् चतुरश्चतुरो लिखेत् ॥

मातृकार्णैश्च संवेष्ट्य साध्यादीन्मध्यतो लिखेत् ।
एतच्च घण्टाकर्णस्य यन्त्रं स्फोटविमोचकम् ॥

स्वर्णादिपट्टे संलिख्य धारयेद्यो यथाविधि ।
*तस्य स्फोटा विनश्यन्ति नात्र कार्या विचारणा ॥*

कार्पासवीजफलीकरणाद्यां हुनेच्च । फलीकरणं—ฉิวอ

अथानुष्टुप्मन्त्रप्रसङ्गात् अनुष्टुप्त्रयमपि वैरिञ्चिकल्पोक्तमायुष्करमत्र योग्यतावशात् लिख्यते —

विधिब्रह्ममैत्रावरुणिवसिष्ठा ऋषयः । अनुष्टुभः छन्दांसि । ब्रह्मनृसिंहविष्णुत्र्यम्बकरुद्रा देवताः । मन्त्रे स्थिता हलो बीजानि । मन्त्रे स्थिताः स्वराश्शक्तयः । परमात्मज्ञानद्वारा तत्प्रीत्यर्थे विनियोगः । मूलमन्त्रैरेकैकैरर्धीकृत्य क्रमेण षडङ्गानि ॥ ध्यानम्—

हेमाम्भोजे निषण्णं स्रवदमृतघटौ चक्रशङ्खौ कराब्जैः
अक्षस्रक्कुण्डिकाख्ये शशिशकलधरं धारयन्तं सुभूषम् ।

हेमाभं पीतवस्त्रं रविशशिदहनत्रीक्षणं चित्स्वरूपं
सर्वज्ञं सर्वगं तं विधिहरिहरजं विश्वरूपं नमामि ॥

एतत् समष्टिध्यानम् । व्यष्टिध्यानमुच्यते —

पद्मोद्भवं वेदनिधिं पुराणं चतुर्मुखं रक्ततनुं द्विनेत्रम् ।
स्रुचं स्रुवं कुम्भमथाक्षमालां दधानमाद्यं प्रणमामि देवम् ॥ इति ॥

द्वितीयस्य ध्यानं जान्वोरासक्तेत्यादि नृसिंहविधानोक्तम् । तृतीयं अच्छस्वच्छारविन्दे इत्यादि त्र्यम्बकविधाने उक्तम् ॥

ओं हंसात्मको यो अपामग्नेस्तेजसा दीप्यमानः ।
स नो मृत्योस्त्रायतां नमो ब्रह्मणे विश्वनाभिः ॥ १ ॥

ओं उग्रं वीरं महाविष्णुं इत्यादि ॥ २ ॥

ओं त्र्यम्बकं यजामहे इत्यादि ॥ ३ ॥ ओं ॥

इत्यनुष्टुप्त्रयाख्यो मन्त्रः अतिरहस्यतरः । आयुःप्रधानोयं मन्त्रः । प्रणवचतुष्टयेन साकं शताक्षरी ॥

अथास्यैवानुष्टुप्त्रयस्य मन्त्रविशेषः —

ओं ह्रीं हंसः सोहं स्वाहा । इत्यात्मज्ञानप्रदो मन्त्रः । सहस्रज्वालिनी मृत्युनाशिनी स्वाहा । इत्यायुःपरीक्षामन्त्रः । अनेन प्रयोगः —

त्रिवारमेनं दिनशो मन्त्रविद्दक्षिणामुखः ।
जप्त्वा संख्यासु गणयेदक्षरान्मन्त्रसंभवान् ॥

*आज्यं गोपियुतं मन्त्रो द्वादशार्णो भवेद्यदि ।
तदाप्रभृति विज्ञेयं वत्सरादात्मनो मृतिः ॥

---

* आद्यं गोपीयतन्मन्त्रो इति ख, ग, घ, मातृकापाठः ।

अयमर्थः— इमं मन्त्रं दिनशः त्रिवारं जप्त्वा त्रयोदशाक्षराणि परिगणयेत् । यदा च द्वादशाक्षराणि भवन्ति तदाप्रभृति संवत्सरात् प्राक् मृतिरिति ज्ञेयम् ॥

प्रयोगान्तरम्—

साधं तैलं घृतं सम्यक् क्वथयेन्मिळितं निशि ।
मन्त्रजप्तं तु तद्गुप्तं रोगार्तनिकटे स्थितम् ॥

प्रभाते यदि संपश्येपृथक्त्वं घृततैलयोः ।
सप्ताहान्मरणं तस्य विद्यते नात्र संशयः ॥

प्रयोगान्तरम्—

रसे केवलदूर्वायाः स्वांगुष्ठद्वयसे निशि ।
तन्मन्त्रपुटितं नाम लिखितं काञ्चनं क्षिपेत् ॥

नान्यदृष्टं तु संजप्तं पश्येन्मन्त्रं जपन्मनुम् ।
वैवर्ण्यं वा हिरण्यस्य छायया वाप्यदर्शनम् ॥

व्याधिस्तु जायते तस्य विकीर्णे तत्तु काञ्चनम् ।

अयमर्थः—

अंगुष्ठनिमग्नप्रमाणे दूर्वारसे, काञ्चनपट्टे मन्त्रवर्णपुटितं साध्यनाम विलिख्य तस्मिन् रसे विनिक्षिपेत् । तद्रसमन्यैर्यथा अदृश्यं भवति तथा कृत्वा अनुष्टुप्त्रयं जप्त्वा प्रातःकाले पश्येत् । तद्यन्त्रे वैवर्ण्यं वा आत्मच्छायाया अदर्शनं वा विकीर्णतां वा यदि पश्येत् तस्यालस्यं (व्याधिः) भवति ॥

प्रयोगान्तरम्—

अन्तश्शून्यार्कच्छायायां मण्डलान्मरणं भवेत् ।

प्रयोगान्तरम्—

अर्धे दूर्वारसं मूत्रं पशोः प्रस्थार्धकं पिबेत् ।
जप्तं यदि वमेत्पीतं तं विद्यान्मृत्युहस्तगम् ॥

अनुष्टुप्त्रयं लक्षं जपेत् । खादिरेन्धनकृताग्नौ त्रिमधुरसिक्ताभिः अयुतं पुरश्चरणाहोमः । तत्संपातं च प्रकाशयेत् (प्राशयेत्) ।

तमग्निं सर्वमादाय घटे प्रज्वाल्य तं वहन् ।
ग्रीवादघ्नजले स्थित्वा जपेद्दशशतं पुनः ॥

अनेन कर्मणा तस्य प्रसीदति *हरिः स्वयम् ।
अञ्जलिप्रभृतिं कृत्वा मृत्युर्नायाति भीतवत् ॥

चित्रगुप्तेन लिखितं यत्कर्मास्य पटे स्वके ।
तत्सर्वं क्षाळ्यते तेन जपमात्रेण मन्त्रिणः ॥

एवं तु पुनरावृत्त्या गन्धर्वायुरवाप्नुयात् ।
देवकालसमं जीवेदावृत्त्या च तृतीयया ॥

जीवेत्स चतुरावृत्त्या ब्राह्मं कालं न संशयः ।
दक्षिणा गुरवे कार्या समाप्तौ तत्र तत्र च ॥

हेमनिष्कशतं पूर्वं द्वितीये द्विगुणं ततः ।
तृतीये त्रिगुणं दद्याच्चतुर्थे तु चतुर्गुणम् ॥

अप उत्तीर्य तं वह्निमुद्वास्य हृदये पुनः ।
विहरेद्देववद्भूमौ सर्वदुःखविवर्जितः ॥

प्राणाकर्षणम्—

प्राणप्रतिष्ठामन्त्रेण मृतदेहं तु संस्पृशन् ।
जपित्वाऽस्त्रमनुं तस्मिन् जीवसूक्ताष्टकं जपेत् ॥

---

* हरः इति ख, ग, घ मातृकापाठः ।

न्यासध्यानक्रियामन्त्रविपर्यांश्चेत् पृथक्पृथक् ।
वक्ष्यामि मन्त्रविहृतौ मृतोत्थापनकर्मणि ॥

* नातिबालं तथा वृद्धं ब्रह्मशापहतं तथा ।
पूतिगन्धयुतं देहं विकलाङ्गं च वर्जयेत् ॥

प्रयोगान्तरम्—

गुह्याद्गुह्यतरं यत्तु मृत्योर्हृदयकं परम् ।
हिताय सर्वजगतां वक्ष्ये रहसि तच्छृणु ॥

त्रिधाऽऽकाशोदरच्छिद्रश्चतस्रो मेखलास्ततः ।
कार्याः कुण्डस्य तत्राग्निं ज्वालयित्वा यथाविधि ॥

गुणात्मकेन तोयेन मेखलास्त्वभिपूर्य च ।
पयोक्तदूर्वात्रितयैर्मन्त्रेणानेन यो हुनेत् ॥

देवसाहस्रिकोदन्तं मृत्युर्धिभ्यति दर्शनात् ।

प्रयोगान्तरम्—

मध्वक्तदूर्वया होमात् श्रियमाप्नोति पुष्कलाम् ।
आज्याक्तया यशः स्फीतं हेमसिद्धिर्गुलाक्तया ॥

दध्यक्तयाऽनुरक्तिं च विद्यां ब्रह्मरसाक्तया ।
पञ्चगव्याक्तया होमात् ब्रह्महापि विशुध्यति ॥

नारिकेळाक्तया कान्तिमारोग्यं तैलसिक्तया ।
मृत्योः पाशं छिनत्त्याशु मुक्तिः पाशादिवेश्वरि ॥

क्षीराद्वेदगुणं क्षौद्रं तद्गुणाद्द्विगुणं गुळम् ।
घृतं भूतगुणं विद्यात्तावद्दूर्वारसः स्मृतः ।

* अतिबालं इति पाठेन भाव्यमिति भाति ।

हेमपात्रे तु संपूर्य रसं दूर्वारसोत्तरम् ॥

तस्मिन्नक्त्वा हुनेद्दूर्वात्रितयैरयुतत्रयम् ।
त्रिसहस्राधिकं विद्याद्ब्रह्मकल्पो भवेत् ध्रुवम् ॥

तत्पात्रं गुरवे दद्यात् दक्षिणां च गवां शतम् ।
ब्रह्मणो मनुना होमात् जीवेद्वर्षशतं नरः ॥

त्रैय्यम्बकेन त्रिशतं नृसिंह्मेन तु पट्शतम् ।
त्रिवृता मनुना होमात् सहस्रायुर्भवेन्नरः ॥

द्रव्यं तु पूर्वोक्तमेव ॥

प्रयोगान्तरम्—

आपत्सु जुहुयादेवं दूर्वया स्वरसाक्तया ।
मन्त्रेण त्रिवृता मूर्तिं मृत्युं तर्तुं न संशयः ॥

नृसिह्ममन्त्रेणैव प्रयोगान्तरम्—

दैवज्ञैश्च निमित्तैश्च सामुद्रिकादिलक्षणैः ।
दुस्स्वप्नैर्व्याधिभिर्वापि प्रकृतेर्वा विपर्ययात् ॥

आयान्तं मृत्युमालोक्य होमेनैव निवारयेत् ।
ज्योतिषा वा दशासन्धौ चक्रे वा पुण्यपापयोः ॥

जन्मर्क्षे देवताकोपे ब्रह्मशापे विशेषतः ।
होतव्यं सम्यगुक्तेऽग्नौ दक्षिणां च यथाविधि ॥

नावज्ञेयो यतो मृत्युः कर्तव्यं चात्मरक्षणम् ।
जपेद्वा यदि दुस्स्वप्ने दृष्टमात्रे जले स्थितः ॥

अम्भोधिगायामवगाह्य चान्तः हृत्पुण्डरीके नृहरिं विचिन्त्य ।
जपेत्सहस्रत्रितयं घृताक्तो मग्नोऽप्सु मन्त्रं मनसा य एनम् ॥

जपेत्स मृत्युं निकटे स्थितं वा कामं सकोपं दुरितं च कोपात् ।
राज्यं परेषां नृपतिस्स शत्रुं सर्वात्मना किं पुनरात्मनोन्यम् ॥

चैत्रे मासे तु राकायां कृत्वा चक्रं तु मण्डलम् ।
कृष्णाजिने तिलान् स्थाप्य तेषु ताम्रघटं न्यसेत् ॥

निजमानमितेनास्मिन्नाज्येनैव तु पूर्य च ।
कृत्वा प्रतिकृतिं हेम्ना पलमानेन निक्षिपेत् ॥

तस्मिन्नावाह्य देवेशमर्चयित्वा नृकेसरिम् ।
अन्वीक्ष्य चात्मनः छायां तद्यन्मे मन इत्यृचा ॥

तत्सर्वं द्विजमुख्याय पूजिताय निवेदयेत् ।
निराहारस्तु तां रात्रिं क्षपयेच्च मनुं जपन् ।
प्रभाते भोजयेद्विप्रान् अर्चयित्वा जनार्दनम् ॥

आचार्यमपि सन्तोष्य स्वयं भुञ्जीत बन्धुभिः ।
एवं करोति यो मन्त्री दीर्घमायुस्स विन्दति ॥

राज्यैश्वर्यं तदाधीनं भवेत्संवत्सरात् ध्रुवम् ।
अन्वयेपि न जायन्ते व्याधयस्तस्य कर्मजाः ॥

मृत्युश्च न भवेदेषामकाले यस्य कस्यचित् ।

नृसिंहमन्त्रेण प्रयोगान्तरम्—

सर्वतोमुखमाक्षिप्य पर्वतोपमप्युत्क्षिपेत् ।
अनेन खादिराहुत्या स्तम्भयेदपि जाह्नवीम् ॥

प्रयोगान्तरम्—

रिपूनुच्चाटयेत् क्षिप्रं पायसाहारहोमतः ।

ओं भूः ओं भुवः ओं सुवः ओं महः ओं जनः ओं तपः ओं सत्यं

ओं तत्सवितुर्वरेण्यं ओं घृणिस्सूर्य आदित्य ओं तत्सत् ओं हंसात्मको यो अपामग्नेस्तेजसा दीप्यमानः स नो मृत्योस्त्रायतां नमो ब्रह्मणे विश्वनाभिः हाहि हाहि हाहि हावु हावु हावु ओं ह्रीं हंसः सोहं स्वाहा, ओं भुवः भर्गो देवस्य धीमहि, ओं नमो नारायणाय, क्ष्रौं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतो- मुखं, नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं, भ्राजा भ्राजा भ्राजा वत्रे ववायवों आधातोरण्याय वयों, सहस्रज्वालिनी मृत्युनाशिनी स्वाहा, ओं सुवः धियो यो नः प्रचोदयात्, आमद्य ओं ह्रीं ओं नमश्शिवाय, त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्[1] व वावं व व वं व वं वेन वेवं वन वे सजझदौंझ ह्रीं अरे वं वं मेवरयु धावया दं जं ओं जुंमः स्वौं हंसः मां पालय पालय ह्लादय ह्लादय मृत्योर्मोचय मोचय सोहं स्वौं [2] ईं हंसः जुं ओं ईं स्वौं हंसः मां पालय पालय ह्लादय ह्लादय मृत्योर्मोचय मोचय सोह स्वौं ईं सः जुं ओं, परो रजसे सावदों, आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्स्वरों ॥ इति महामृत्युञ्जयमन्त्रः ॥

अथानुष्टुबायुष्करत्वमन्त्रप्रसङ्गात् आयुष्करादिफलप्रदस्सन्ततधारास्थापन विधिरपि तन्त्रसमुच्चयोक्तप्रकारेण लिख्यते —

ऐशान्यां धान्यराशौ हरति सुमहिते स्वीयपीठे कटाहं
लोहं संपाद्य संस्कृत्य च तदनु समुत्तानितेऽधोग्रकूर्चम् ।
विन्यस्यापूर्य वारा नवपटपरिपूतेन मन्त्री जलेऽस्मिन्
विन्यस्येन्मत्स्ययुग्मं कमठयुगमपि स्वर्णदुर्वर्णक्लृप्तम् ॥

दुर्वर्णं-रजतम् । रूप्ये । तत्र शान्तिके कर्मणि अधोग्रकूर्चम् । पौष्टिके ऊर्ध्वाग्रकूर्चम् । पद्मिनीं ससुमनो मृणालिनीं न्यस्य, तत्र वरुणं सतीर्थकं, ओं वं वरुणाय नमः इति वरुणावाहनमन्त्रः । गङ्गे च यमुने- त्यादि तीर्थावाहनमन्त्रः ॥

---

१ वंववं इति ख ग घ मातृकापाठ । २ ईसः जुं इति ख ग घ मातृकापाठः

प्राच्यदेवमपि सन्निधाप्य तत् संस्पृशन् जपतु वारुणादिकम् ।

अव ते हेड उदुत्तममिमं मे वरुण तत्त्वायामि यच्चिद्धि ते इति पञ्च वरुणमन्त्राः ।

पालाशादित्रिपदकलितं लोहजं हेमरन्ध्रं
धारापात्रं स्नपनसमयेऽथोग्रकूर्चं प्रकल्प्य ।
पादानिष्ट्वा प्रणवलिपिभिस्तेन पात्रं च कूर्चं
चास्मिन्पात्रे न्यसतु च पुनर्गन्धपुष्पाक्षतानि ॥

पात्राद्वार्यथ वारुणादधितरं कृत्वाञ्चितेनामुना
तत्पात्रं परिपूर्य मूलमनुना तच्छेषतोयैरपि ।
तत्कूर्चाग्रविनिर्गतामविरळां धारां समापातये-
दर्चामूर्धनि याममात्रमभिजप्यैतान्मनूंस्तन्मनाः ॥

अस्त्यत्रोपदेशः — प्रथमं वरुणमन्त्रतीर्थमन्त्रसाध्यदेवतामन्त्रैर्जलद्रोण्यां समावाह्य, पुनस्साध्यदेवतायामभिषेकनिवेद्यानन्तरं पीठपूजां कृत्वा बाह्य-स्नानोपचारसमये शुद्धजलैरभिषिच्य पुष्पमाराध्य, पुनः प्रणवावयवैस्त्रिपादमिष्ट्वा, पुनर्धारापात्रं प्रणवेन संस्थापयेत् । पुनः तत्तत्कामानुसारेण श्रीरुद्रत्र्यम्बक-वारुणसूक्तादिमन्त्रान् जप्त्वा, यामकालावसाने कटाहजलस्थं देवं धारापात्र-जलस्थं देवं च बिम्बे उद्वास्य धारापात्रे (पात्रस्थं) शेषं जलं च साध्यस्य प्रोक्षणादि कुर्यात् । पुनर्देवस्य वस्त्रादिभूषणान्तं दत्वा जलगन्धादिभिः सावरणं संपूज्य पायसादीन् निवेद्य प्रसन्नपूजां कृत्वा ब्राह्मणान् सदक्षिणं भोजयेत् ॥

अथ शताक्षरीविधानमुच्यते —

विश्वामित्र ऋषिः । गायत्रीछन्दः । सविता देवता । गायत्र्य-क्षराणि बीजानि । त्रिष्टुबक्षराणि शक्तयः । मारीचः काश्यप ऋषिः । त्रिष्टुप् छन्दः । जातवेदोऽग्निर्देवता । वसिष्ठः ऋषिः । अनुष्टुप् छन्दः । त्र्यम्बकरुद्रो देवता । तत्सवितुर्वरेण्यं भर्गो देवस्य हत् । धीमहि

धियो यो नः प्रचोदयात् शिरः । जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः शिखा । स नः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः कवचम् । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं नेत्रम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् अस्त्रम् ॥

अक्षरन्यासस्तु पूर्वं गायत्रीविधानोक्तस्थानेषु गायत्र्या कुर्यात् । पुनः अनुष्टुप्विधानोक्तस्थानेषु अनुष्टुभा कुर्यात् । एवं त्रिभिः कुर्यादक्षरन्यासम् ।

स्रर्तव्याखिललोकवर्ति सततं यज्जङ्गमस्थावरं
व्याप्तं येन च यत्प्रपञ्चविहितं मुक्तिं च यत्सिद्धितः ।
यद्वा स्यात्प्रणवत्रिभेदगहनं श्रुत्या च यद्गीयते
तद्वः कांक्षितसिद्धयेऽस्तु वरदं ज्योतिस्त्रयोत्थं महः ॥

एवं ध्यात्वा जपेत् । पूर्वं गायत्रीं सर्वामुक्त्वा तदन्ते त्रिष्टुभं सर्वामुच्चार्य पुनस्तदन्ते अनुष्टुभं सर्वामुच्चरेत् । एव शताक्षरीमन्त्रः । लक्षं जपेत् । रक्षामुक्त्यायुःप्रधानोयं मन्त्रः । सर्पिस्सिक्तेन दौग्धेन अयुतसंख्यं हुनेत् । पुरश्चरणाहोमः । दौग्धं दुग्धपायसम् ॥

अथ पूजाविधिः —

पूर्वमष्टाविंशपटलोक्तसौरपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । प्रह्लादिन्यै० प्रभायै० नित्यायै० विश्वम्भरायै० विलासिन्यै० प्रभावत्यै० जयायै० शान्तायै० ८ इति द्वितीयावृतिः । कान्तायै० दुर्गायै० सरस्वत्यै० विद्युद्रूपायै० विशालायै० ईशायै० व्यापिन्यै० विमलायै० ८ इति तृतीयावृतिः । तमोपहारिण्यै० सूक्ष्मायै० विश्वयोन्यै० जयावहायै० पद्मालयायै० परायै० शोभायै० भद्ररूपायै० ८ इति चतुर्थ्यावृतिः । जागतायै० तपन्यै० वेदगर्भायै० दहनरूपिण्यै० सेन्दुखण्डायै० शुम्भहन्त्र्यै० नभश्चारिण्यै० वागीश्वर्यै० मदवहायै० सोमरूपायै० मनोजवायै० ११ इति पूर्वदिशि, मरुद्वेगायै० रात्र्यै० तीव्रकोपायै० यशोवत्यै० तोयात्मिकायै० नित्यायै० दयावत्यै० हारिण्यै० तिरस्क्रियायै०

वेदमात्रे० दमरप्रियायै० ११ इति दक्षिणदिशि, समाराध्यायै० नन्दिन्यै० परायै० रिपुमर्दिन्यै० षष्ठ्यै० दण्डिन्यै० तिग्मायै० दुर्गायै० गायत्र्यै० निरवद्यायै० विशालाक्ष्यै० ११ इति पश्चिमदिशि, श्वासोद्वाहायै० नादिन्यै० वेदनायै० वह्निगर्भायै० सिंहवाहायै० धुर्यायै० दुर्विषहायै० रिरंसायै० तापहारिण्यै० त्यक्तदोषायै० निस्सपत्नायै० ११ इत्युत्तरदिशि समर्चयेत् । एवं पञ्चमावृतिः । रमायै० राकायै० प्रभायै० ज्योत्स्नायै० पूर्णायै० उषायै० पूरिण्यै० सुधायै० ८ इति षष्ठ्यावृतिः । विश्वायै० विद्यायै० सितायै० प्रह्वायै० सारायै० सन्ध्यायै० शिवायै० निशायै० ८ इति सप्तमावृतिः । आर्द्रायै० प्रज्ञायै० *प्रभायै० मेधायै० कान्त्यै० शान्त्यै० धृत्यै० मत्यै० ८ इत्यष्टम्यावृतिः । वरायै० उमायै० पावन्यै० पद्मायै० शान्तायै० अमोघायै० जयायै० अमलायै० ८ इति नवम्यावृतिः । इन्द्रादिभिर्दशमी ॥

अथ प्रयोगः —

दुग्धाक्तैर्जुहुयात्सहस्रममृताकाण्डैस्तु दीर्घायुषे ।

प्रयोगान्तरम् —

दूर्वाणां त्रितयैस्तथा घृतपयस्सिक्तैर्घृतेनैव वा ।

अयमर्थः — दूर्वयाप्यायुषे जुहुयात्सहस्रम् ।

प्रयोगान्तरम् —

लक्ष्म्यै कोकनदैश्च शोणरुचिभिः त्रिस्वादुयुक्तैस्तथा
रक्तैरुत्पलकैस्तदह्नि विकचैर्बैल्वैः प्रसूनैरपि ।

कोकनदं—कमलम् । त्रिमधुरसिक्तैररुणैः कमलैः सहस्रं जुहुयाल्लक्ष्म्यै । तस्मिन्दिने विकसितैश्च रक्तोत्पलैस्त्रिमधुरसिक्तैः सहस्रं जुहुयाल्लक्ष्म्यै ॥

प्रयोगान्तरम् —

---

* प्रभायै इत्यस्य स्थाने परायै इति ख, ग, घ. पाठः

अनुदिनमघशान्त्यै संयतात्मा सहस्रं
प्रतिजुहुत तिलैर्वा मन्त्रविन्मासमेकम् ।
अपि दिनकरसंख्यं भोजयीत द्विजातीन्
विविधरसविशिष्टैर्भक्तितो भोज्यजातैः ॥

अयमर्थः — एकं मासं नित्यशः सहस्रसंख्यं तिलैर्जुहुयात् । द्वादश ब्राह्मणान् भोजयीत । एवं कृते दुरितशान्तिर्भवति ॥

प्रयोगान्तरम् —

शतं शतं प्रातरतन्द्रितोद्यतो जपेद्द्विजो मन्त्रममुं शताक्षरम् ।
अरोगजुष्टं बहलेन्दिरायुतं शतं सुजीवेच्छरदां सुखेन सः ॥

जपप्रयोगविशेषः —

प्रणवव्याहृत्याद्या व्याहृतितारान्तिका च मन्त्रिवरैः ।
जप्या शताक्षरी स्यादिहपरलोकप्रसिद्धये दिनशः ॥

अयमर्थः — पूर्वं प्रणवमुक्त्वा पश्चात् व्याहृतित्रयमुच्चार्य पुनर्मन्त्रत्रयं क्रमेण जप्त्वा, पुनरपि प्रतिलोमेन व्याहृतित्रयं जप्त्वा प्रणवं योजयेत् । एवं जप्ते ऐहिकपारत्रिके भवतः ॥

प्रयोगान्तरम् —

मनुममुमघशान्त्यै तत्पदाद्यं प्रजप्यात्
गदगणरहितायाप्यायुषेऽनुष्टुबाद्यम् ।
विमलमतिररातिध्वंसने त्रिष्टुबाद्यं
दिनमनु दिनवक्त्रे वत्सरं संयतात्मा ॥

अयमर्थः — तत्पदाद्यं त्रिष्टुबन्त्यं, तत्पदाद्यमनुष्टुबन्त्यमिति द्विप्रकारस्त्वघशान्त्यै । पुनरनुष्टुबाद्यं तत्पदाद्यमनुष्टुबाद्यं त्रिष्टुबन्त्यमिति द्विप्रकारो-

प्यायुषे । त्रिष्टुबाद्यं तत्पदान्त्यं त्रिष्टुबाद्यमनुष्टुबन्त्यं च द्विप्रकारोऽरिनाशकरः॥ इति ॥ तस्मादेवं जपेत् ॥

अथ संवादविधानमुच्यते—

संवनन ऋषिः । अनुष्टुप्त्रिष्टुभौ छन्दसी । संवादाग्निर्वा संज्ञानाग्निर्वा देवता । तृतीया ऋक् बीजम् । द्वितीया शक्तिः । ब्रह्मणे नमः हृत् । विष्णवे नमः शिरः । रुद्राय नमः शिखा । ईश्वराय नमः कवचम् । सदाशिवाय नमः नेत्रम् । सर्वात्मने नमः अस्त्रम् ॥ ध्यानम्—

धवळनळिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं चाभयं च ।
सवरदममलेन्दुक्षीरगौरं त्रिणेत्रं
प्रणमत सुरवक्त्रं मंक्षु संवादयन्तम् ॥

संसमिद्युवसे वृषन्नित्यृक् । संगच्छध्वं संवदध्वं इति द्वितीया ऋक् । समानो मन्त्रस्समितिस्समानी इति तृतीया ऋक् । समानीव आकूतिस्समाना इत्यादिरृक् चतुर्थी । एवं ऋक्चतुष्टयमिळितस्संवादसूक्तमन्त्रः । जनानामैकमत्यफलप्रधानोयं मन्त्रः । तादृशप्रयोगसमये तु प्रथमं जातवेदोमन्त्रऋचं जप्त्वा, पुनस्संसमित्यृचं जप्त्वा पुनरपि जातवेदोऋचं जप्त्वा, संगच्छध्वमृचं जप्त्वा, जातवेदोऋचमित्येवंप्रकारेण ऋक्चतुष्टयमपि जातवेदोमन्त्रपुटितं जपेत् । ततः चत्वारिंशत्सहस्रसंख्यं जपेत् पुरश्चरणार्थं । पयोन्नेन दशांशं जुहुयाच्च ॥

अथ पूजाविधिः—

आधारशक्त्यादिकेवलसामान्यपीठं संपूज्य तस्मिन्पञ्चदशपटलोक्तमाग्नेयपीठं संपूज्य तस्मिन्नावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । पुनर्जातवेदसे नमः सप्तजिह्वाय० हव्यवाहनाय० अश्वोदरजाय० वैश्वानराय० कौमार-

तेजसे॰ विश्वमुखाय॰ देवमुखाय॰ ८ एताभिरष्टमूर्तिभिर्द्वितीयावरणम् । इन्द्रादिभिस्तृतीयावरणम् । एवमावरणत्रितयेन संपूजयेत् ॥

अथ प्रयोगविधिः —

होमजपादिवक्ष्यमाणप्रयोगविधौ सर्वत्र संख्यानियममादावेव कथयति ।

चतुश्शतं चापि दशोत्तरेण चतुश्चतुष्कं प्रजपेध्दुनेद्वा ।

इति, षड्विंशत्युत्तरं चतुश्शतं हुनेद्वा जपेद्वा इत्यर्थः ॥

पायसेन मधुरत्रयभाजा विप्रराजतरुजैः कुसुमैर्वा ।
सर्पिषा स्तनजवृक्षसमिद्भिर्वाञ्छितार्थविषये प्रजुहोतु ॥

अस्यार्थः — मधुरत्रयं त्रिमधुरम् । विप्रतरुः पलाशः । राजतरु— கொன்றை. स्तनजवृक्ष अश्वत्थवटोदुम्बरप्लक्षाः ॥ एतदुक्तं भवति — त्रिमधुरसिक्तेन पायसेन वा तत्सिक्तैरेव पलाशकुसुमैर्वा राजतरुकुसुमैर्वा सर्पिरादिष्वेकेन वा संवादसूक्तेन हुनेत् पूर्वोक्तसंख्यया इति ॥

प्रयोगान्तरम् —

जुहुयात्कलाचतुष्कैः प्रत्यृचमायोज्य कादिवर्गचतुष्कैः ।
तद्वच्च पयशलाद्यैर्वर्गैस्संयोज्य पूर्ववन्मतिमान् ॥

अस्यार्थः — अकारादिचतुष्टयान्ते प्रथमां ऋचं योजयेत् । उकारादिचतुष्टयान्ते द्वितीयां ऋचम् । तथैव लृकारादिऋचतुष्टयान्ते तृतीयां (ओकारादिचतुष्टयान्ते) चतुर्थीं च संयोजयेत् । एवं कृते एकवारं भवति । एवंप्रकारेण पूर्वोक्तसंख्यया पूर्वोक्ताष्टद्रव्येषु मध्ये एकेन द्रव्येण हुनेज्जपेद्वा, वाञ्छितार्थसिद्धये ॥

प्रयोगान्तरम् —

तद्वदृचं प्रतियोज्य त्रिष्टुप्पादांश्च पूर्वसंख्येन ।

सर्पिस्सिक्तं पायसमचिरेण कार्यसमवाप्त्यै ॥

अस्यार्थः — त्रिष्टुभः पादचतुष्टयान्ते यथाक्रमेण ऋक्चतुष्टयं संयोजयेत् । एवं कृते एकवारं भवति । एवं पूर्वोक्तसंख्यं सर्पिस्सिक्तं पायसं हुनेदिति॥

प्रयोगान्तरम् —

प्रतिपादमथर्क(र्क्)पादं प्रतियोज्य जुहोतु पूर्ववन्मतिमान् ।
तेनाभीष्टावाप्तिर्नचिरेण नरस्य हस्तगता ॥

अस्यार्थः — तत्र प्रतिपादमिति सूक्तस्येति शेषः । ऋक्पादमिति भद्रं न इत्यादीनामित्यर्थः । एतदुक्तं भवति — भद्रं नो अपि वातय मन इत्यृक्पादमुक्त्वा, ततस्संवादप्रथमऋचः प्रथमपादमुक्त्वा, एवं मरुतामोजसे स्वाहा इत्यृक्पादमुक्त्वा संवादप्रथमऋचो द्वितीयः पादः, ततः इन्द्रो विश्वस्य राजति इत्यृक्पादः ततस्संवादप्रथमऋचः तृतीयः पादः, ततश्शं नो भवद्द्विपदे चतुष्पदे इत्यृक्पादः, ततस्संवादप्रथमऋचः चतुर्थः पादः, एवं संवादसूक्तस्य प्रथमां ऋचमान्तमुक्त्वा हुनेत् । पुनरप्येवमेव भद्रं न इत्यादि ऋक्पादचतुष्टयपुरस्सरं संवादद्वितीयां ऋचं पादशस्संयोज्यान्तमुक्त्वा हुनेत् । एवमेव तृतीयचतुर्थौ ऋचौ च संयोज्य हुनेत् । एवं कृते एकवारं भवति । *एवमेवावृत्त्या पूर्वोक्तसंख्यया पूर्वोक्ताष्टद्रव्येषु एकेन वाञ्छितार्थसिध्यर्थम्* ॥

प्रयोगान्तरम् —

अक्षरपादत्रिष्टुब्युक्तैस्सूक्तैस्तु पूर्वसंख्येन ।
*कुर्यात् समाजरूपं संवादयितुं प्रवर्तयेद्वाऽद्भिः ॥

अस्यार्थः — अकारादिचतुष्टयं भद्रं न इत्यादिकं ऋक्पादं, जातवेदो-मन्तस्य प्रथमपादं, संवादसूक्तस्याद्यामृचं, पुनरुकारादिचतुष्टयं, मरुतामाद्यर्क्-पादं, त्रिष्टुब्द्वितीयपादं, संवादसूक्तद्वितीयामृचं, एवं क्रमेण तृतीयचतुर्था-

* जुहुयात् इति ख ग घ मातृकापाठः

षपि ऋचौ संयोजयेत्। एवं कृते एकवारं भवेत्। एवमेवावृत्त्या पूर्वोक्तसंख्यया पूर्वोक्तद्रव्येष्वेकेन हुनेद्वा जपेद्वा तर्पयेद्वा । तस्मात्समाजस्थितानां याभिस्समीचीनत्वेन संवादसिद्धिः ।

प्रयोगान्तरम् —

उद्दिश्य यद्यदिह मन्त्रितमो जुहोति
सूक्तैरमानिगदितैस्त्रिविधैश्च मन्त्रैः ।
व्यस्तैर्यथाविभवतो विधिवत्समस्तैः
तत्तस्य सिध्यति समग्रमयत्नमेव ॥

अस्यार्थः — अत्र अमासार्धं त्रिविधैश्च मन्त्रैरिति मातृकापादमन्त्रत्रिष्टुब्भिरित्यर्थः । एतदुक्तं भवति — प्रथम मातृकामान्तमुचार्य, पुनः पादमन्त्रस्यैकमुचार्य, ततस्त्रिष्टुभमान्तमुचार्य, ततस्संवादसूक्तस्य प्रथमामृचमुचार्य हुनेत् । तथा द्वितीयाऋच आदौ संयोजयेत् । तथैव तृतीयचतुर्थ्योरपि। अथवा मातृकापादमन्त्रत्रिष्टुभ उक्तक्रमेणैव संयोज्य तदन्ते संवादसूक्तमेवान्तं संयोजयेत् । यथाविभवतः विभवानुसारेण । एवं कृते एकवारं भवति । एवमेवावृत्त्या पूर्वतरोक्तद्रव्येष्वेकेनैव हुनेद्वा जपेद्वा वाञ्छितावाप्त्यर्थम् । सर्वेषु पक्षेष्वपि संवादस्य ऋगन्ते वा सूक्तान्ते वा होमः । न पादान्ते ॥

अथ संवादमन्त्रप्रसङ्गात् मन्त्रसारोक्तं संवादयन्त्रमप्यत्र लिख्यते —

पट्कोणकर्णिकामध्ये तारं कोणेषु षट्स्वपि ।
ओं श्रीं ह्रीं क्लीं ग्लौं गमिति महागणपतिं (तेः) बहिः ॥

* शिष्टान् चतुष्पञ्चपञ्चसप्तवर्णान् चतुर्दळे ।
बाह्ये संवादसूक्तस्याप्यर्धमर्धमृचां क्रमात् ॥

आलिख्य चाष्टपत्रेषु त्रिष्टुभावेष्टय तद्बहिः ।

* मन्त्रवर्णानुरोधेन शिष्टान् पञ्च पञ्च पञ्च इति युक्तः पाठः ।

मातृकार्णैश्च भूबिम्बकोणेषु च यथाक्रमम् ॥

आलिखेद्भद्र इत्यादि पादमन्त्रचतुष्टयम् ।
एतत्संवादसूक्तस्य यन्त्रं लोके सुदुर्लभम् ॥

सङ्घातभेदे मर्त्यानामाशु मैत्रीकरं परम् ।
जगत्संमोहनं वश्यकान्तिसौभाग्यपुष्टिदम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य, तन्मध्ये प्रणवं विलिख्य, तन्मध्ये साध्यनामादियन्त्रन्यायान् विलिखेत् । पुनष्षट्कोणेषु ओं श्रींह्रींक्लीं ग्लौं गं इति महागणपतिमन्त्रस्य बीजानि विलिखेत् । पुनस्तद्बाह्ये चतुर्दळं पद्मं विलिख्य, तेषु *गणपते(तये) इति पूर्वदिशि, वर वरद इति दक्षिणे, सर्वजनं मे इति पश्चिमे, वशमानय स्वाहा इत्युत्तरदळे विलिखेत् । पुनस्तद्बहिरष्टपत्रं पद्मं विलिख्य, संसमिद्युवसे वृषन्, संगच्छध्वं संवदध्वं, समानो मन्त्रः, समानीव आकूतिः, इत्यृक्चतुष्टयस्यार्धमर्धं क्रमेण विलिखेत् । तद्बहिर्जातवेदोमन्त्रेण वेष्टयेत् । तद्बहिर्मातृकावर्णैर्वेष्टयेत् । बहिश्चतुरश्रं विलिख्य तत्कोणेषु भद्रं नो अपिवातय मनः, मरुतामोजसे स्वाहा, इन्द्रो विश्वस्य राजति, शन्नो भव (अस्तु)द्विपदे शं चतुष्पदे, इति मन्त्रचतुष्टयं विलिखेत् । एवं विलिख्य निखनेत् ध्रियतां वा । ऐकमत्यभेदनिवृत्त्यादिफलं भवति ॥

अथ वारुणऋग्विधानमुच्यते —

वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः । वरुणो देवता । ध्रुवासु त्वासु क्षितिषु हृत् । क्षियन्तो व्या अस्मत्पाशं शिरः । वरुणो मुमोचत् शिखा । अवो वन्वाना अदितेः कवचम् । उपस्थाद्यूयं पात नेत्रम् । स्वस्तिभिस्सदा नः अस्त्रम् । ध्यानम् —

* अत्रेदमवधेयं गणपतये वर वरद, इति, गणपते वरद वरद, इति वा मन्त्रः । उभयथापि अष्टाविंशतिवर्णात्मक एव मन्त्र इति ध्येयम् ।

अच्छांशुकाभरणमाल्यविलेपनाढ्यः
पाशांकुशाभयवरोद्यतदोस्सरोजः ।
शुभ्रारविन्दवसतिस्सुसितः प्रसन्नो
भूयाद्विभूतिविधये वरुणश्चिरं वः ॥

ध्रुवासु त्वासु क्षितिषु क्षियन्तो *व्या३स्मत्पाशं वरुणो मुमोचत् । अवोवन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिस्सदा नः इति मन्त्रः । ऋणमोचनप्रधानोयं मन्त्रः ॥

अस्याक्षरन्यासः—

अंगुल्यग्रससन्धिपायुशिवसंज्ञाधारनाभिष्वधः
कुक्षौ पृष्ठहृदोरुरोजगळदोस्सन्ध्यग्रवक्त्रेषु च ।
गण्डघ्राणविलोचनश्रवणयुक्भ्रूमध्यमस्तेषु के
सर्वाङ्गेषु तथा न्यसेद्विशदधीर्वर्णैर्मनूत्थैः क्रमात् ॥

ध्रुवासुत्वान्यासे त्रिचत्वारिंशदक्षराणि । व्या३स्मदित्यत्र त्रिं नमः अं नमः स्मं नमः इति ॥

अथ पूजाविधिः—

केवलपद्मे विद्यायै० सुधायै० कुमुदिन्यै० पूर्णवारुण्यै० विश्वतोमुख्यै० तरङ्गिण्यै० सुरसायै० सुशीलायै० व्यापिन्यै० ९ इति नवशक्तयः विवरणे प्रोक्ताः । अस्मिन्पीठे वरुणं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । अनन्ताय० वासुकये० तक्षकाय० कार्कोटकाय० पद्माय० महापद्माय० शङ्खाय० गुळिकाय० ८ इति द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । एवं शुद्धजलेन दीक्षाकलशं संपूर्य तस्मिन्नावाह्य वरुणं संपूज्य समभिषिच्य लक्षं जपेत् पुरश्चरणार्थम् । आज्यसिक्तेन क्षीरपायसेन दशांशं जुहुयात् । पुरश्चरणाहोमः । एवं कृते ऋणमोचनं भवति ॥

* व्याअसत्पाशं इति ङ पाठः ।

अथ प्रयोगः—

इक्षोस्सितस्य शकलैर्घृतसंसिक्तैश्चतुर्दिनं जुहुयात् ।
सकलोपद्रवशान्त्यै तथर्णमुक्त्यै च संपदे सुचिरम् ॥

तत्र इक्षोः, सितस्य शकलैरिति शर्कराशकलैः । खण्डशर्कराभिरित्यर्थः । एतदुक्तं भवति — खण्डैः घृतसिक्तैः संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं चतुर्दिनं जुहुयात् । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम्—

वेतससमिद्युतहुतात् वृष्टिं काले वितनुते वरुणः ।

वेतसं—நீர்வஞ்சி. प्रयोगान्तरम्—

गव्यक्षीरसमेतं त्रिदिनकृतं दिनमुखेषु मुदितमनाः ।
शतभिषजि समुदितेर्के चतुश्शतं पायसं(प्र)हुनेत् ॥

सघृतं ऋणमोचनाय लक्ष्म्यै जनसंवननाय शुक्रवारे वा ।

अयमर्थः — सूर्ये शतभिषङ्नक्षत्रे समुदिते वा शुक्रवारे वा गव्यक्षीरेण पायसं संपाद्य तेन पायसेन घृतसिक्तेन त्रिदिनं प्रातश्चतुश्शतसंख्यं हुनेत् । तस्मादृणमोचनं च जनवश्यं च लक्ष्मीश्च भवति ॥

प्रयोगान्तरम्—

पाशावद्धं वैरिणमंकुशसंप्रोतमम्बुधेः पारे ।
*ध्यायेत्परे क्षिपन्तं वरुणं जुहुयाच्च वा तथा प्रजपेत् ॥

पाशनिबद्धं वैरिणमसिनाच्छित्वाशु नाशयन्तममुम् ।
ध्यायन्वेतससमिधो गोमूत्रयुता हुनेत्तदपहत्यै ॥

अयमर्थः — समुद्रस्य परे पारे क्षिपन्तं पाशेन बद्धं चांकुशेन प्रोतं

* ध्यायन् इति ख, ग, घ मातृकापाठः ।

यं शत्रुं ध्यायेत् । एवं ध्यात्वा, समिधोऽनुक्तविषये पलाश इति न्यायात् सहस्रं पलाशसमिधो जुहुयात् । केवलं जपेद्वा । उच्चाटनं भवति । तमेव शत्रुं पाशेन बद्ध्वाऽसिना छित्वा नाशयन्तं वरुणं च ध्यायेत् । एवं ध्यात्वा गोमूत्रसिक्ताभिः वेतससमिद्भिर्हुनेत् । अथवा एवमेव ध्यात्वा जपेन्मन्त्रम् । तस्मात्तस्य शत्रोर्मरणं भवति ॥

वेतसं– நீர்வஞ்சி प्रयोगान्तरम् —

दौग्धान्नैर्भृगुवारे घृतसंसिक्तैः कृतश्च हवनविधिः ।
ऋणमोक्षदश्च विविधोपद्रवशमकृद्रमाकरः प्रोक्तः ॥

प्रयोगान्तरम् —

पश्चिमसन्ध्यासमये पश्चिमवदनोऽनलं समाराध्य ।
ऋचमेनामभिजप्याच्चतुश्शतं सकलदुःखशमनाय ॥

अयमर्थः — सन्ध्याकाले अग्निं पुरतस्संस्थाप्य तस्मिन्वरुणं समावाह्य समर्च्य पश्चिमाभिमुखो भूत्वा जपेच्चतुश्शतसंख्यम् । तस्मादुक्तफलं भवति ॥

प्रयोगान्तरम् —

शालीर्घृतसंसिक्तास्सरिदन्तरितो जुहोतु परसेनाम् ।
संस्तम्भयितुं त्रिदिनं सुमना मन्त्री चतुश्शतावृत्त्या ॥

शाली—धान्यविशेषः குளச்செந்நெல்.

अयमर्थः — होमस्थानसेनानिवेशयोर्मध्ये सरिद्यथा भवेत्तथा स्थित्वा घृतसिक्ताभिश्शालीभिः चतुश्शतसंख्यं नित्यशः त्रिदिनं हुनेत् । तस्मात्पर-सेनास्तम्भनं भवति ॥

प्रयोगान्तरम् —

प्रत्यङ्मुखोऽथ मन्त्री प्रतर्पयेद्वा जलैस्सुशुद्धतरैः ।
यस्सोऽप्युपद्रवाणां रुच्यां निचयं श्रियं समृच्छति च ॥

अयमर्थः — उपद्रवनिरोधनार्थं पश्चिममुखो जलैस्तर्पयेत् वरुणम् । तस्मादुपद्रवनिवृत्तिश्च श्रीश्च भवेत् ॥

अथ वारुणमन्त्रप्रसङ्गात् वारुणयन्त्रमपि अस्यैव मन्त्रस्य यन्त्रसारोक्तं लिख्यते —

षट्कोणकर्णिकामध्ये तारं कोणेषु षट्स्वपि ।
षड्वर्णमष्टपत्रे च केसरोद्यत्स्वरे लिखेत् ॥

पञ्चषड्वेदषट्पञ्चषट्चतुष्षण्मनोः क्रमात् ।
ध्रुवासुत्वाद्यक्षराणि बहिः परऋणेत्यृचा ॥

हलिभश्चावेष्ट्य भूगेहकोणे वंबीजमालिखेत् ।
ऋणमोचनमेतत्तु यन्त्रं सर्वसमृद्धिदम् ॥

सर्वरक्षाकरं वश्यं शत्रुचोरविनाशनम् ।
किमत्र बहुनोक्तेन वाञ्छितार्थप्रदं नृणाम् ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तन्मध्ये प्रणवं विलिख्य तन्मध्ये साध्यनामादियन्त्रन्यायान्विलिखेत् । पुनः षट्कोणेषु वरुणाय नमः इति षडर्णान्विलिखेत् । पुनस्तद्बहिरष्टपत्रं पद्मं विलिख्य तत्केसरेषु स्वरान् द्वौ द्वौ विलिखेत् । पुनस्तद्दळमध्ये ध्रुवासुत्वासु इति पूर्वदळे, क्षितिषु क्षियन्त इत्याग्नेयें, व्यासत्पाशं इति दक्षिणे, वरुणो मुमोचत् इति नैर्ऋत्यां, अवो वन्वाना इति पश्चिमे, अदितेरुपस्थात् इति वायव्ये, यूयं पात इति सौम्ये, स्वस्तिभिस्सदा नः इति ऐशान्ये विलिखेत् ॥ पुनस्तद्बहिः वृत्तद्वयं विलिख्य, पूर्ववृत्ते "परऋणासावीरधमत्कृतानि माहं राजन्नन्यकृतेन भुजम् । अव्युष्टा इन्नु भूयसीरुषास आनो वीरान्वरुण तासु शाधि" ॥ इत्यनया ऋचा वेष्टयेत् । द्वितीयवृत्ते कादिवर्णैर्वेष्टयेत् । पुनस्तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु वं वं इति विलिखेत् । एवं विलिख्य धृते द्राव्यादृणान्मुक्तो भवति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
त्रिंशः पटलः ॥

# अथैकत्रिंशः पटलः ॥

—:*:—

अथ प्रागुक्तनवमे पटले भुवनेशीमन्त्रविधाने प्रोक्तत्रिगुणितादियन्त्रे लेखनविशेषं फलविशेषाय आह—

त्रिगुणितसंज्ञे मायालंकृतकोणे तयाऽभिसंवीते ।
या या विशेषक्लसिस्तां तामपि संग्रहेण समभिदधे ॥

कोणोल्लसितसुधाक्षरगळदमृतस्फुरितवह्निपरिवीतान् ।
बिन्दौ मध्यगबीस्थितान्सुधाधारया परिस्नुतया ॥

पूर्णसुपुम्नारन्ध्रां साध्यतनुं संस्मरन् शिरसि बध्यात् ।
तेनारोगी पुरुषः प्रज्ञावान्दीर्घमायुराप्नोति ॥

अस्यार्थः— नवमपटले प्रोक्तप्रकारेण त्रिगुणितयन्त्रं विलिख्य, तत्र कोणोदरस्थितस्य चतुर्थस्वराख्यस्य ईकारस्य त्रयस्यापि पार्श्वेषु अमृतबीजाख्यं सबिन्दुकं वकारं विलिख्य तस्माद्वकारत्रयान्निस्सृतामृतजलेन मिश्रितकर्णिकामध्यस्थहृल्लेखाबिन्दोः स्रुतेनामृतजलेनापूरितसुपुम्नारन्ध्रां साध्यतनुं स्मृत्वा तच्छिरसि यन्त्रं धारयेत् । तस्मात्प्रोक्तफलं स्यात् ॥

अस्मिन्नेव त्रिगुणिते प्रयोगान्तरमाह—

शीतांशुमण्डलस्थं कूर्मचतुर्थाचकोणलसितमिदम् ।
शीतप्रलिप्तजप्तं कधृतं च शिरोरुजाज्वरार्तिहरम् ॥

अस्यार्थः— एतदेव नवमपटलप्रोक्तकेवलत्रिगुणितयन्त्रं विलिख्य, एतद्यन्त्रं चन्द्रमण्डलाख्यस्य उकारस्य मध्यस्थं यथा भवेत्, तथा बहिश्चन्द्रमण्डलं विलिख्य, पुनस्त्रिकोणोदरस्थितचतुर्थस्वरपार्श्वे पूर्वविधानोक्तं वकारं त्यक्त्वा, तस्य स्थाने चकारचतुर्थाक्षरं झकारं विलिखेत् । एवं विलिख्य चन्दनकर्पूराभ्यामालिप्य ढकारझकारहृल्लेखाउकारझकाराक्षराणि

सविन्दुकानि क्रमेण संयोज्य, एवमक्षरद्वयेन भुवनेशीं पुटित्वा अनेन मन्त्रेण तद्यन्त्रं जप्त्वा विधानोक्तन्यायेन अमृतास्रावादिकं ध्यात्वा साध्यशिरसि निबध्यात् इति ॥

अथ त्रिगुणितयन्त्रे विशेषलेखनप्रकारेणोक्ते यन्त्रद्वयेऽपि लेखन-विशेषेण स्त्रीपुरुषवश्यार्थं प्रयोगान्तरम् —

तद्यन्त्रयुगं विलिखेदभिविलिखितसाध्यसाधकाख्ययुतम् ।
साध्यमधस्तात्कृत्वा बध्वाऽत्र स्वपितु साधको नित्यम् ॥

विधिनाऽनेन तु सद्यः साध्योऽस्य वशीभवेदयत्नेन ।
तत्तु खनित्वाऽगारे तत्रान्नं नित्यमत्तु वश्यकरम् ॥ इति ॥

अस्यार्थः — पूर्वोक्ते त्रिगुणिते, विशेषेणोक्तं यन्त्रद्वयं विलिख्य, तत्रापि प्रथमोक्ते यन्त्रे साध्यस्य पुरुषस्य वा स्त्रियो वा नाम, द्वितीयोक्ते यन्त्रे साधकस्य पुरुषस्य वा स्त्रियो वा नामयुक्तं यन्त्रं तदुपरि तन्मुखं च कृत्वा तदुपरि सुप्तः प्रोक्तफलं प्राप्नोति । पुनरेतद्यन्त्रयुगळमेवमेव खनित्वा तदुपरि साधकोऽन्नं भुञ्ज्यात् । तस्मादपि वश्यकरम् ॥

अथास्मिन्नेव त्रिगुणिते केवललेखनविशेषेण पुरुषाकर्षणं च स्त्र्याकर्षणं चाह —

साध्याख्यां शक्तिवह्नौ नरहरिमपि रन्ध्रत्रये च त्रिशक्तौ
कर्मालिख्याथ लोष्टे सततगमपि संस्थाप्य जप्त्वा स्वशक्त्या ।
आगारे स्थापयित्वा नरमुदकनिधेश्चित्रपत्रे लिखित्वा
दीपाग्नौ तापयित्वा स्त्रियममलधियः सम्यगाकर्षयेयुः ॥ इति ॥

अस्यार्थः — पूर्वोक्तप्रकारेण केवलत्रिगुणितयन्त्रं विलिख्य, तन्मध्ये स्थितहृल्लेखाया उदरे साध्यपुरुषस्य नाम विलिख्य, त्रिकोणोदरस्थितस्य तुरीयस्वराख्यस्य ईकारस्य सबिन्दुकस्य उदरे साधकस्य पुरुषस्य वा स्त्रियो

या नाम समालिख्य, पुरस्तुरीयाख्यस्य स्वरस्य ईकारत्रयस्य पार्श्वेषु नृसिंहबीजमालिख्य, त्रिकोणबाह्यस्थहृल्लेखासु तिसृषु साध्यनामयोजनायामवशिष्टपदमाकर्षय इत्येतद्विलिखेत्। एतदुक्तं भवति—साध्यस्य देवदत्तस्य मुखहृदयमिति पदं मध्यस्थितहृल्लेखाया उदरे, पुनस्साधकस्य देवदत्तस्येति वा देवदत्ताया इति वा पदं कोणस्थतुरीयस्वराणामुदरेषु, पुनर्बाह्यस्थितहृल्लेखात्रयस्योदरेषु आकर्षयेति पदं च विलिखेत्॥ इत्थमभिनवे मृत्कपाले लिखित्वा प्राणान्प्रतिष्ठाप्य सहस्रादधिकं यावत्कार्यसिद्धि जपित्वा हृल्लेखां गृहे जलभाण्डनिधानस्थाने तस्याधस्तात्खनित्वा तत्र स्पृष्ट्वा नित्यं जपेच्च। तस्मात् साधकः पुरुषो वा वनिता वा पुरुषमाकर्षयति॥

अथ वनिताकर्षणविधौ चित्रपत्रे हेरण्ड (एरण्डे) एवमेवैतद्यन्त्रं परपुष्टकण्टकेन कोकिलकण्टकेन विलिखेत्। तत्र तु देवदत्तस्य मुखहृदयमित्यत्र देवदत्ताया मुखहृदयमिति। पूर्वं स्त्रीनाम योजयेत्। अयमेव विशेषः॥ एवं विलिख्य प्राग्वत्प्राणप्रतिष्ठां कृत्वा हृल्लेखां जप्त्वा दीपाग्नौ तद्यन्त्रं तापयेत्। कोकिलकण्टकं—குயில் முள்.

अथ प्राक् नवमपटले प्रोक्ते षड्गुणिते प्रयोगविशेषमाह—

त्रिगुणितविहिता विधयष्षड्गुणितेऽपि प्रयोजनीयास्स्युः।
रक्षाकर्मणि विहितं तत्प्रायः प्रचुरमन्त्रयुक्ततया॥

पाशाष्टाक्षरवीतशक्तिदहनप्रोल्लासिसाध्याह्वयं
शक्तिश्रीस्मरसंवृतं कुयुगरन्ध्राबद्धचिन्तामणि।
इत्थं षड्गुणितं विलिख्य जपितं मन्त्री दधानोऽसकृत्
राज्ञां वामदृशां प्रियो भवति स ग्रामे पुरे वा चिरम्॥ इति॥

अस्यार्थः—पूर्वं नवमपटलोक्तवत् षड्गुणितयन्त्रं विलिख्य तत्कर्णिकामध्यस्थभुवनेशीं पाशाद्यष्टाक्षरेण वेष्टयेत्। "पाशश्रीशक्तिस्मरमन्मथशक्ती-

न्दिरांकुशं चेति" । अस्यार्थः — "आं श्रीं ह्रीं क्लीं क्लीं ह्रीं श्रीं क्रों" इत्यनेन मन्त्रेण संवेष्टय पुनस्तस्या भुवनेश्या रेफांशस्य पार्श्वे साध्यनाम विलिखेत्। पुनः षट्कोणेषु पूर्वलिखितशक्तिप्रणवस्य परितः भुवनेशी श्रीवीज कामबीजानि बहिर्वेहिराधृतरूपेण विलिखेत् । पुनः पूर्वलिखिताष्टसु कोणेषु पूर्वलिखितमपास्य चिन्तामणिमेवालिखेदिति ॥

अथ नवमपटलप्रोक्ते षड्गुणित एव लेखनीयविशेषोक्त्या प्रयोगान्तरमाह —

चिन्तारत्नाश्रिताश्रित्रियुगमथ नृसिंहावृतान्तस्थबीजं
प्रादुस्साध्याभिधानं बहिरपि लिपिभिः प्रानुलोमाभिवीतम् ।
क्ष्माबिम्बद्वन्द्वरन्ध्रप्रचितचतुरर्णं ग्रहोन्मादभूत-
व्याधिघ्नं यन्त्रमस्मिन्कृतकलशविधिर्गर्भरक्षादिकारी ॥ इति ।

अस्यार्थः — प्रथमं नवमपटले प्रोक्तवत् षड्गुणितयन्त्रं विलिख्य, षट्सु कोणेषु प्रागुक्तान्यक्षराण्यपास्य चिन्तामणिबीजं तेष्वालिखेत् । पुनः कर्णिकामध्यस्थभुवनेशीं नृसिंहबीजेन संवेष्टय, भुवनेश्या मध्ये साध्यनाम साधकनाम च कर्मपदं च एवं साध्यादिलिकं विलिखेत् । पुनः सर्वतो बहिः पूर्वमनुलोमप्रतिलोमक्रमेण समावेष्टितमातृकावर्णानपास्य, तत्र प्रतिलोममातृकया, तद्बहिरनुलोममातृकया च पूर्वविलिखितव्युत्क्रमेण संवेष्टय, तद्बहिः भूपुरद्वन्द्वाष्टकोणेषु पूर्वविलिखितनृसिंहबीजं चिन्तामणिबीजं चापास्य, तत्र प्रणवभुवनेश्वर्यजपाक्षराणि ओं ह्रीं हंसः इति सर्वत्र विलिखेत् ॥

अथ प्राक् दशमे पटले प्रोक्ते द्वादशगुणिते लेखनविशेषोक्त्या प्रयोगविशेषमाह —

द्वादशगुणिते शूले नृसिंहबीजं महेन्द्रपुरवीतम् ।
शीतालिप्तं पुरलघुधूपितमन्तः प्रबध्य कर्मयुतम् ॥

चतसृषु दिक्षु निखन्यात्सीमाया द्वारतोरणाधो वा ।
देशाभिगुप्तिरेषा गुप्ततरा सूरिभिः पुरा प्रोक्ता ॥

अलदलनिशाकुशीतैर्मसृणे पट्टे. विलिख्य यन्त्रमिदम् ।
सेरस्थापनकर्म प्रतिजप्तं प्राङ्गणे खनेन्मन्त्री ॥

तत्र विशन्ति न चोरा गृहकृत्या स्यान्निकेतरक्षा च ॥
अश्माभिपातवारणमभिवृद्धिस्संपदां भवेदचिरात् ॥ इति ॥

अस्यार्थः— पूर्वं दशमे पटले प्रोक्तप्रकारेण द्वादशगुणितयन्त्रं विलिख्य तस्य पूर्वलिखितद्वादशशूलानामग्रेषु नृसिंहबीजं विलिख्य कर्णिकामध्यस्थभुवनेश्या उदरे साध्यसाधककर्मपदान्तिकं विलिख्य पुनः पूर्वलिखिताष्टकोणाद्बहिः महेन्द्रपुरं चतुरश्रं विलिखेत् ॥ एवं पञ्चयन्त्राण्यालिख्य शीतारसेनालिप्य तेषु चत्वारि यन्त्राणि गृहादीनामवसानप्रदेशे चतसृषु दिक्षु निखन्यात् । अवशिष्टमेकं द्वारतोरणाधस्तान्निखन्यात् । तत्र द्वारतोरणाधो वा इति वाशब्दस्समुच्चये । द्वारतोरणाधश्च निखन्यादित्यर्थः ॥

तत्र अलमिति–हरितालम् । दलं–तमालपत्रम् । शीता–चन्दन-कर्पूरादिलघुकर्पूरम् । निशा हरिद्रा । कुशीतं–रक्तचन्दनम् । मसृणपट्टं=सुवर्ण-रजतताम्रत्रितयेन विरचितं पट्टम् ॥ अश्माभिपातवारणमिति–वास्तुदेवता-पिशाचादिभूतक्षोभात् तैर्निपात्यमानमुपलपातादिकं क्लेशं निवारयतीत्यर्थः ॥

अथ प्राक् दशमे पटले प्रोक्ते घटार्गळायन्त्रे प्रयोगविशेषेण फल-विशेषमाह—

तद्वद्घटार्गलाख्यं यन्त्रं नीले विलिख्य पट्टवरे ।
मेचकसाध्यप्रतिकृतिहृदये गुळिकां निधाय निक्षिप्य ॥

त्रिमधुरपूर्णे पात्रे विन्यस्याभ्यर्च्य गन्धपुष्पाद्यैः ।
बलिमपि विकिरेद्रात्रिषु सप्ताहादानयेद्वधूमिष्टाम् ॥

तामेवाथ प्रतिकृतिमग्नौ किञ्चित्प्रतापयेत्प्रजपन् ।
शक्तिं पाशांकुशमनु साध्याह्वविदर्भितां समाहितधीः ॥

विधिनामुना त्रिरात्रात् गर्वितधियमपि सुराङ्गनां मन्त्री ।
आकर्षेन्निजवाञ्छाप्रदायिनीं मदनबाणविह्वलिताम् ॥

यन्त्रं तदेव लाक्षाताम्रावीतं निधाय कलशजले ।
जप्त्वा भानुसहस्रकमभिषिञ्चेद्रजतकाञ्चनाभ्यां च ॥

तद्वद्विधाय कलशं तद्यन्त्रं धारयेत्पुनर्नित्यम् ।
वाञ्छितसिद्धिं लभते भक्त्या प्रणमन्ति देवता अपि तम् ॥

यन्त्रं तदेव मन्दिरभित्तावालिख्य पूजयेद्दिनशः ।
चोरारिभूतनागा अपि तं देशं न वीक्षितुं शक्ताः ॥

आलिख्य वीरपट्टे यन्त्रमिदं मस्तकार्पितं कृत्वा ।
युध्यात्प्रत्यर्थिनमपि हत्वाऽऽयात्यव्रणाङ्कितो योद्धा ॥

मदजलविलिखितमेतद्यन्त्रं जप्तं च मस्तकन्यस्तम् ।
करिणीमपि मदयेद्द्राक् चण्डतरे का कथा करेणुवरे ॥

बहुनेति भाषितेन किमेभ्यो मुख्यं न किमपि यन्त्रेभ्यः ।
तस्मादमूनि सद्भिः धार्याणि च विश्ववश्यमिच्छद्भिः ॥

अस्यार्थः— तद्वदित्यादिभिर्वश्यमिच्छद्भिरित्यन्तैर्दशभिः श्लोकैः घटार्गळायन्त्रविशेषविधानानि कथयति ॥ तत्र तद्वत् यथा त्रिगुणितादीनि। मेचकेति मधूच्छिष्टमुच्यते। त्रिमधुरेत्यादिना श्लोकेन पूर्वोक्तपुत्तल्या सप्तरात्राद्वनिताकर्षणविधानं करोति । तामेवेत्यादिना विह्वलितामित्यन्तेन श्लोकद्वयेन सप्तरात्राद्वनिताकर्षणविधानं करोति । तत्र किञ्चित्प्रतापयेत् अवयवहानिर्यथा भवेदित्यर्थः। अनु पाशांकुशशक्ति इति योजयेत् । एतदुक्तं भवति— पाशमनु पाशाक्षरानन्तरं शक्तिः । अन्वंकुशं शक्त्यनन्तरं अंकुश-

मिति । एप संप्रदायार्थः । गर्वितधियं प्रौढाङ्गनाम् । यन्त्रमित्यादिना अपि तमित्यन्तेन श्लोकद्वयेन तस्य यन्त्रस्य ताम्रराजतकाञ्चनाभिवेष्टनकलशाभिपेकधारणतः फलानि कथयति । तत्र लाक्षाताम्रावीतं लाक्षया समालिख्य ताम्रेणावीतमित्यर्थः ॥ तद्वत्ताम्रावीतयन्त्रस्य यथा कलशस्थापनं कृतं, तद्वद्रजतकाञ्चनावृतयोश्च कलशस्थापनं कुर्यादित्यर्थः । यन्त्रं तदेवेत्यादिना श्लोकेनापि प्रयोगान्तरं कथयति ॥ आलिख्येत्यादिना श्लोकेन समरविजयविधानं करोति । तत्र वीरपट्टे फालबन्धनीये पट्टे यन्त्रं इदं घटार्गळायन्त्रमित्यर्थः । मदजलेत्यादिना श्लोकेन गजमदोत्पादनं करोति । तत्र करेणुवरे करेण्वधिपे पुंगजे इत्यर्थः ॥ बहुनेत्यादिना श्लोकेन त्रिगुणितपड्गुणितद्वादशगुणितघटार्गळानामितरेभ्यः आधिक्यं कार्यकरत्वं च कथयति ॥ गजमृगेत्यादिना उक्तानां भुवनेशीविपयाणां यन्त्राणां सर्वेषां लेखनद्रव्यविशेषेण फलविशेषं कथयति ॥

गजमदमृगमदकाश्मीरैर्मन्त्रितमः सुरभिरोचनोपेतैः ।
विलिखेदलक्तकरसालुळितैर्यन्त्राणि सकलकार्यार्थी ॥ इति ॥

अथ पाशांकुशघटितभुवनेश्वर्याः प्रयोगविशेषमाह —

हृल्लेखान्तस्थसाध्याह्वयमथ बहिरांक्रोंवृतं वह्निगेह-
द्वन्द्वाश्रिस्वस्तिकाख्यं प्रतिलिखतु दळे यन्त्रकं नागवल्याः ।
जप्त्वा शक्तिं तु पाशांकुशलिपिसहितं तापयेद्दीपवह्नौ
नक्तं भुक्त्वा नताङ्गी स्मरशरविवशा प्रेमलोलाऽभियाति ॥ इति ॥

अस्यार्थः—प्रथमं पट्कोणं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिख्य, पुनस्तां भुवनेशीं पाशाक्षरेण आं इत्यनेन संवेष्ट्य, तद्बहिरंकुशाक्षरेण क्रों इत्यनेन च संवेष्ट्य, पुनष्षट्सु कोणेपु प्राक् त्रयोदशपटले मृत्योस्तुन्यमन्त्रोक्तप्रकारेण स्वस्तिकं विलिखेत् । एवं ताम्बूलपत्रोदरे कोकिलकण्टकेन विलिख्य प्राणान् प्रतिष्ठाप्य, आं ह्रीं क्रों

इत्येनां पाशांकुशत्र्यक्षरीं जप्त्वा रात्रौ भुक्त्वा, तदनन्तरं दीपाग्नौ शनैश्शनैस्तापयेत् । तस्मादिष्टा वनिताऽभियाति तत्क्षणादेव ॥

कोकिलकण्टकं—குயில்முள்ளு.

वनिताकर्षणयन्त्रान्तरमाह —

शक्तिस्थं निजनामवह्निभवनद्वन्द्वोदरे मान्मथं
बीजं साध्यविदर्भया परिवृतं शक्त्या बहिः पार्थिवम् ।
तत्कोणे स्मरमन्यपुष्टनयनप्रोत्थैः पुनः कण्टकैः
ताम्बूले लिखिताभिजप्तमदयेद्योपिन्मनोमोहनम् ॥ इति ॥

अस्यार्थः — प्रथमं षट्कोणं विलिख्य तन्मध्ये भुवनेशीं विलिख्य तन्मध्ये साध्यनामादीन् विलिखेत् । षट्कोणेषु कामबीजं विलिख्य पुनर्बहिर्वृत्तं विलिख्य तस्मिन्साध्याक्षरद्वन्द्वेन विदर्भितया पुटितया भुवनेश्या वेष्टयेत् । तद्बहिश्चतुरश्रं विलिख्य तत्कोणेषु कामबीजमालिखेत् । इत्थं ताम्बूले कोकिलकण्टकेन लिखित्वा प्राणान्प्रतिष्ठाप्य भुवनेशीं कामबीजं च जप्त्वा योषिते दत्वा अदयेत् । तस्मात्सा तस्य वशीभवति ।

अथ वश्ययन्त्र (यन्त्रान्तर) माह —

शक्त्यन्तस्थितसाध्यनामपरितो बीजैश्चतुर्भिस्समा-
बद्धैश्शक्तिमनोभवांकुशलिपिप्रौंभिः समावेष्टितम् ।
शाल्पुत्थैः प्रतिलिख्य पिष्टविकृतौ प्राणान्प्रतिष्ठाप्य च
निस्वादौ परिभर्ज्य तत्समदतः साध्यो वशे तिष्ठति ॥ इति ॥

अस्यार्थः — प्रथमं भुवनेशीं विलिख्य तन्मध्ये साध्यनामादीन्विलिख्य, तद्बहिः भुवनेशीकामबीजांकुशप्रौंवर्णैः ह्रीं क्लीं क्रों प्रों इत्येतैः चतुर्भिर्बीजैरन्योन्याबद्धरेखारूपेण तां भुवनेशीं समावेष्टयेत् । इत्थं शालिपिष्टेन वृषाकारं फलकावद् घनीभूतमाबध्द्वा, अस्मिन् कोकिलकण्टकेन विलिख्य प्राणान्

प्रतिष्ठाप्य लिखितबीजाक्षराणि भुवनेशीमेव वा जस्वा, तत्पिष्टं त्रिमधुरे पाकं कृत्वा तद्रूपं साध्यहृदयमिति मत्वा साधकः उपयुञ्ज्यात्। तस्मात्साध्यो वशीभवेत् ॥

ह्रींकारं चन्द्रमध्ये उपरि दवलये षोडशावर्णपूर्णे
वाह्ये पत्राकृतिस्स्यादिनकरसहितं सान्तयान्ताभियुक्तम्।
तद्वाह्ये भानुवेष्ट्यं हरिहरसहितं मूलमन्त्रेण युक्तं
साक्षात् त्रैलोक्यवश्यं सकलविषहरं यन्त्रराजाधिराजम् ॥

अस्य भुवनेश्वरीयन्त्रस्यायमर्थः — प्रथमं वृत्तं विलिख्य तन्मध्ये भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन्विलिख्य, वृत्ताद्बहिरपि वृत्तं विलिख्य, अनयोर्वृत्तयोर्मध्ये षोडशस्वरैः स्वयं वेष्ट्य तद्बहिरष्टदळं पत्रं विलिख्य, तत्केसरेषु घृणिः सूर्य इत्यादिसौराष्टाक्षरवर्णान् विलिख्य, दळमध्येषु हकाररेफयोः कूटं ह्र् इति विलिख्य, बहिर्वृत्तं विलिख्य, तस्मिन् हरिहर इति वर्णैर्वेष्टयेत्। तद्बहिर्दक्षिणपार्श्वे क्षौं क्रों इति, वामपार्श्वे आं ह्रीं इति च विलिख्य, तद्बहिर्भुवनेश्या एतत्सर्वं वेष्टयेत्। इति ॥

अथ स्त्रीपुरुषयोरन्योन्यवश्य(कर) यन्त्रमाह —

सान्तं शिखीलवयुतं दहनांशुसाध्यं
मायांशसाधकमथाभिवृतं कलाभिः।
मध्योल्लसद्द्विमुखशूलमिदं तु भर्तृ-
यन्त्राह्वयं नरनताङ्घ्रिवशङ्करं स्यात् ॥ इति ॥

अस्यार्थः — प्रथमं केवलभुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन्विलिख्य, पुनस्तस्या हृल्लेखाया रेफांशईकारांशरेखयोरन्तराळस्थं केवलहकारमभिमुखीकृत्य ऊर्ध्वाधश्शूलद्वयं विलिख्य, पुनर्बहिर्वृत्तं विलिख्य, तस्मिन् षोडशस्वरैरावेष्टयेत्। एतत् भर्तृयन्त्राह्वयं ताम्रपट्टादिषु वा ताम्बूला-

दिषु वा लिखित्वा भुवनेशीं जप्त्वा पुरुषेण स्त्रियै वा स्त्रिया पुरुषाय वा प्रयुक्ते तद्वशंकरं स्यात् ॥

अथ वश्यकरपुत्तलिकाप्रयोगमाह —

मृत्कारांगुलिकात्तया सकृकलासान्तर्वसायुक्तया
साध्यस्यांघ्रिरजोयुजा मृदुमृदा कल्पस्य शक्तिं हृदि ।
रूपस्याभिविलिख्य तद्विरके साध्यं तदीयान्प्रति-
ष्ठाप्याजप्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृत् ॥ इति ॥

अस्यार्थः — कुलालकरलग्नया मृदा साध्यस्य पादरजसा युक्तया कृकलासोदरगतवसायुक्तया प्राक् त्रयोदशपटलोक्तलक्षणेन पुत्तलीं कृत्वा, तस्या हृदये भुवनेशीं साध्यनामयुक्तां विलिख्य प्राणांश्च प्रतिष्ठाप्य भुवनेशीं जप्त्वा तां पुत्तलिकां सविधानं क्वचिन्निखन्य तदुपरि नित्यशो मूत्रविसर्जनं कुर्यात् । तस्मात् त्रिदिनैः साध्यो वशीभवेत् ॥

अथ हरिद्रया स्त्र्याकर्षणविधानमाह —

वामाक्ष्याः प्रविलिख्य नाम निशया वामोरुदेशे निशा-
मध्ये वामकरेण संशितमतिः संच्छादयंस्तन्मनाः ।
पूर्वं रुद्रपदं ततश्च दयिते योगेश्वरि द्वीन्दुम-
*न्मन्त्रं जप्यति चेदनङ्गविवशां सद्यः प्रियामानयेत् ॥ इति ॥

अस्यार्थः — साध्यायाः स्त्रिया अनुलिप्तावशिष्टया हरिद्रया साधकः पुरुषः स्ववामोरुदेशे अर्धरात्रौ साध्यायाः स्त्रियो नाम देवदत्तामाकर्षयेत्या-लिख्य, पुनस्साधकः स्वस्य वामकरतलेन तत्साध्यनामलिपिमाच्छादयन् तां साध्यां च स्मरन् अत्र वक्ष्यमाणमन्त्रमसकृज्जपेत् ॥ रुद्रदयिते योगेश्वरि स्वाहा ॥ इत्येकादशाक्षरोयं मन्त्रः ॥ अनेन मन्त्रेणैवं जप्ते तां साध्यां सद्यः समाकर्षयेत् ॥

* चेन्मन्त्रं जपति त्वनङ्गविवशां इति मुक्त. पाठः ।

अथ पार्वतीदैवत्यो ब्रह्मश्रीमन्त्र उच्यते—

अर्जुन ऋषिः । अतिनिचृदकृतिश्छन्दः । गौरी देवता । ह्रीं बीजम् । स्वाहा शक्तिः । ह्रीं नमो ब्रह्मश्रीराजिते राजपूजिते हृत् । जये विजये गौरि गान्धारि शिरः । त्रिभुवनवशंकरि शिखा । सर्वलोकवशंकरि कवचम् । सर्वस्त्रीपुरुषवशंकरि नेत्रम् । सुदुघेवासुदुघेवा ह्रीं स्वाहा अस्त्रम् । ध्यानम्—

अमकलशशिराजन्मौळिराबद्धपाशा-
ङ्कुशरुचिरकलाब्जा बन्धुजीवारुणाङ्गी ।
अमरनिकरवन्द्या त्रीक्षणा शोणलेपां-
शुककुसुमयुता स्यात् संपदे पार्वती वः ॥

ह्रीं नमो ब्रह्मश्रीराजिते राजपूजिते जये विजये गौरि गान्धारि त्रिभुवनवशंकरि सर्वस्त्रीपुरुषवशंकरि सुदुघेवासुदुघेवा ह्रीं स्वाहा । इति मन्त्रः ॥ (त्रिपञ्चाशद्वर्णात्मकः)। अयुतं जपेत् । घृतसिक्तैः क्षीरान्नैः दशांशं पुरश्चरणाहोमः ॥

अथ पूजा—

नवमे पटले भुवनेशीविधाने प्रोक्ते शाक्ते पीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । मातृभिर्द्वितीयावृतिः । इन्द्रादिभिस्तृतीयावृतिः ।

अथ प्रयोगः—

तिलतण्डुलकैर्लोणैः त्रिमधुरसिक्तैः फलैश्च मधुरतरैः ।
आज्यैररुणकुवलयैस्त्रिदिनं हवनक्रिया सुवश्यकरी ॥

अयमर्थः—तिलैश्च तण्डुलैश्च मधुरतरफलैश्च आज्येन च अरुणकुवलयैश्च त्रिमधुरसिक्तैः संख्यानुक्ते सहस्रमिति न्यायात् सहस्रं जुहुयात् । तस्माद्वशीकरं भवति ॥ लोणं-मीठ । अरुणकुवलयं-செங்கெய்தல்பூ, मधुरतरफलं-कदलीपनसादिकम् ॥

प्रयोगान्तरम् —

नित्यं वाऽऽदित्यगतां देवीं प्रविचिन्त्य तन्मुखो जप्यात् ।
अष्टोत्तरशतमह्नामादौ भुवनं वशीकरोत्यचिरात् ॥

प्रयोगान्तरम् —

वार्णादर्वाङ्मन्त्री प्रयोजयेत्साध्यनाम कर्मयुतम् ।
प्रजपेद्वा हवनविधौ वाञ्छासिद्धिप्रदस्तथा मन्त्रः ॥

त्रिभुवनवशंकरीति वकारं च सर्वलोकवशंकरीति वकारं च वार्णमित्युक्तम् ॥

अथ राजमुखीमन्त्रविधानमुच्यते —

अज ऋषिः । अतिनिचृत् छन्दः । गौरी देवता । ह्रीं बीजम् । स्वाहा शक्तिः । क्लीं बीजं, श्रीं शक्तिरिति वा । ओं राजमुखि राजाधिमुखि हृत् । वश्यमुखि ह्रीं श्रीं क्लीं शिरः । देविदेवि शिखा । महादेवि कवचम् । देवादिदेवि नेत्रम् । सर्वजनस्य मुखं मम वशं कुरु कुरु स्वाहा अस्त्रम् । पूर्वमन्त्रध्यानवत् ध्यानम् । ओं राजमुखि राजाधिमुखि ह्रीं श्रीं क्लीं देवि देवि महादेवि *सर्वजनस्य मुखं मम वशं कुरु कुरु स्वाहा । इति मन्त्रः । (अष्टत्रिंश*दक्षरः ।) राजवश्यप्रधानोयं मन्त्रः । अयुतं जपेत् । घृतसिक्तैः पयोन्नैः दशांशं पुरश्चरणाहोमः ॥

अथ पूजा —

अत्रैव पूर्वोक्ते शाक्ते पीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । मातृभिर्द्वितीया । इन्द्रादिभिस्तृतीया । अस्य मन्त्रस्य सर्वजन (स्येति)पदस्थाने साध्यनाम संयोजयेत् ।

अथ प्रयोगः —

देवीघ्माष्टशतं प्रसूनवदथ त्रिस्वादुयुक्तं हुनेत्
सप्ताहं भसितेन तेन विहितं पुण्ड्रादिकं वश्यकृत् ।

अयमर्थः — सप्रसूनैर्देव्याख्यगुल्मैः त्रिमधुरसिक्तैरष्टोत्तरशतं नित्यशस्सप्तदिनैर्हुनेत् । पुनस्तेन भस्मना पुण्ड्रं च कुर्यात् । तस्माद्वश्यकरम् ॥ देवी–श्रीदेवी–செங்கழுநீர்.

प्रयोगान्तरम् —

आज्यैस्तत्कृतहोमपातितसमाजप्तं घृतं प्राशयेत्
साध्यं निष्परिहारकं च तदिदं वश्यं भवेद्देहिनाम् ॥

अयमर्थः — आज्यैस्सहस्रं हुत्वा तत्संपातं च जप्त्वा साध्यं प्राशयेत् । तत्साध्यो वश्यो भवत्यवश्यम् ॥

प्रयोगान्तरम् —

शक्ति साध्यर्क्षवृक्षप्रतिकृति हृदि संलिख्य संस्थाप्य जीवं
जप्त्वा खन्याङ्कणेऽस्मिन्विधिवदनलमाधाय पुष्पैर्जपायाः ।
देवीं मन्त्रेण रात्रौ दशपरशतसंख्यैस्तु काचन्दनाक्तैः
हुत्वा तां सप्तरात्रं सरिति निखनतामुत्तमं वश्यकर्म ॥

अयमर्थः — साध्यस्य नक्षत्रवृक्षेण प्रतिकृतिं संपाद्य तस्याः प्रतिमाया हृदि भुवनेशीं विलिख्य तत्र प्राणप्रतिष्ठां च कृत्वा मन्त्रं जप्त्वाऽङ्कणे निखन्य तस्या उपरि अग्निं संस्थाप्य देवीं संपूज्य अनेन मन्त्रेण रात्रौ जपाकुसुमैः काचन्दनाक्तैः दशोत्तरशतं नित्यशः सप्तदिनैर्हुनेत् । पुनस्तां प्रतिकृतिं नद्यां निखन्यात् । तस्मात्स साध्यो वशीभवेत् ॥

अथान्नपूर्णेश्वरीमन्त्र उच्यते —

वैश्रवणऋषिः । अनुष्टुप् छन्दः । अन्नप्रदायिके भूश्रियौ देवते ।

ग्लौं बीजम्। श्रीं शक्तिः। ग्लां श्रां अन्नं मह्यं हृत्। ग्लीं श्रीं अन्नं मे देहि शिरः। इत्यादियुक्तं अन्नाधिपतये शिखा। ममान्नं प्रदापय कवचम्। स्वाहा अस्त्रम्॥ ध्यानम्—

दुग्धाब्धौ रूप्यवप्रावृतकनकमयद्वीपवर्ये सुराढ्ये
कल्पद्रूद्यानकाधो मणिमयलसिते विचपस्याग्रभागे।
आसीने भूश्रियौ वाञ्छितवसुनिचयं मन्त्रिणे संसृजन्त्यौ
मन्त्री सञ्चिन्तयानो जपतु दिनमुखे संपदेऽन्नस्य मन्त्रम्॥

तत्र सुराढ्ये देवैर्निबिडीकृते इत्यर्थः॥ अन्नं मह्यं अन्नं मे देहि अन्नाधिपतये ममान्नं प्रदापय स्वाहा॥ अयुतद्वितयं जपेत्॥ आज्येन च अन्नेन च पृथगेकैकेन च सहस्रं हुनेत्। पुरश्चरणाहोमः। वैष्णवपीठे पूजा। अङ्गैः प्रथमावृतिः। पृथिव्यादिपञ्चभूतैर्द्वितीया। बलाक्यादिभिरेकादशपटले श्रीविधानोक्ताभिः तृतीया। इन्द्रवज्रादिभिरपरे द्वे॥

अथान्नपूर्णामन्त्रान्तरमुच्यते—

अज ऋषिः। अनुष्टुप् छन्दः। अन्नपूर्णा देवता। ह्रीं बीजम्। स्वाहा शक्तिः। ह्रां हृत्। ह्रीं शिरः। इत्याद्यङ्गानि। ध्यानम्—

रुद्रताण्डवविलोकनलोलां भद्रवक्त्रनयनां भवकान्ताम्।
अन्नदाननिरतां जननीं तां संस्मरन् जपतु चित्रदुकूलाम्॥

ओं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा। इति मन्त्रः। उदयकाले षोडशसहस्रं पुरश्चरणाजपः। घृतसिक्तैरन्नैर्दशांशं पुरश्चरणाहोमः। नवमपटले प्रोक्ते शाक्ते पीठे पूजा। अङ्गैः प्रथमावृतिः। मातृभिर्द्वितीया। इन्द्रवज्रादिभिरपरे द्वे॥

अन्नपूर्णामन्त्रप्रसङ्गात्कल्पान्तरोक्तमन्नपूर्णास्तोत्रमप्यत्र लिख्यते—

भगवति भवरोगात्पीडितं दुष्कृतोत्थात्
सुतदुहितृकलत्रोपद्रवेणानुयातम्।

विलसदमृतदृष्ट्या वीक्ष्य विभ्रान्तचित्तं
सकलभुवनमातस्त्राहि मामों नमस्ते ॥ १ ॥

माहेश्वरीमाश्रितकल्पवल्लीमहं भवच्छेदकरीं भवानीम् ।
क्षुधार्तजायातनयाद्युपेतस्त्वामन्नपूर्णे शरणं प्रपद्ये ॥ २ ॥

दारिद्र्यदावानलदह्यमानं स्वाहेन्नपूर्णे गिरिराजकन्ये ।
कृपाम्बुदृष्ट्या परिपिञ्च मां त्वं त्वत्पादपद्मार्पितचित्तवृत्तिम् ॥ ३ ॥

इत्यन्नपूर्णास्तुतिवद्धमेतत् श्लोकत्रयं यः पठतीह भक्त्या ।
तस्मै ददात्यन्नसमृद्धिमम्बा श्रियं च विद्यां च यशश्च मुक्तिम् ॥

अथान्नपूर्णामन्त्रप्रसङ्गात् अन्नगोपालमन्त्रोपि क्रमदीपिकोक्तप्रकारेण योग्यतावशात् लिख्यते —

श्रीनारद ऋषिः । अनुष्टुप् छन्दः । अन्नाधिपतिः कृष्णो देवता । क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि । ध्यानम् —

लम्बिते बालशयने रुदन्तं बल्लवीजनैः ।
प्रेख्यमाणं दुग्धबुध्या तर्पयेत्सोश्नुतेऽशनम् ॥

अन्नरूप रसरूप तुष्टिरूप नमो नमः अन्नाधिपतये ममान्नं प्रयच्छ स्वाहा ॥ इति मन्त्रः ॥ अङ्गेन्द्रवज्रादिभिरावरणत्रयम् ।

अथान्नगोपालमन्त्रप्रसङ्गात् कल्पान्तरोक्तान्नगोपालमन्त्रोपि लिख्यते —

श्रीनारद ऋषिः । अनुष्टुप् छन्दः । रुक्मिणीवल्लभो देवता । क्लीं बीजम् । नमश्शक्तिः । श्वेतो वर्णः । आचक्राय स्वाहा हृत् । विचक्राय स्वाहा शिरः । सुचक्राय स्वाहा शिखा । त्रैलोक्यरक्षणचक्राय स्वाहा कवचम् । असुरान्तकचक्राय स्वाहा अस्त्रम् । ध्यानम् —

उदयगिरितटान्ते रुक्मिणीसत्यभामा-
सहितमखिलगोपीवल्लभं देवदेवम् ।

अभयवरदहस्तं पायसादं प्रसन्नं
विविधगुणनिषेव्यं वासुदेवं नमामि ॥

दामोदराय विद्महे वासुदेवाय धीमहि । तन्नः कृष्णः प्रचोदयात् ॥ इति गायत्रीमन्त्रः ॥ एनां जप्त्वा मूलमन्त्रं जपेत् । ओं श्रीं ह्रीं क्लीं ग्लौं कृष्ण गोविन्द विश्वात्मन् गोपगोपीमनोहर अन्नं मे षड्रसोपेतं प्रयच्छ ग्लौं नमो नमः ॥ इति मन्त्रः ॥

अथान्नगोपालमन्त्रप्रसङ्गात् अन्नप्रदानपरमावहन्तीतर्पणमपि कल्पान्तरोक्तमत्र योग्यतावशाल्लिख्यते —

माहाचमस्यकहोळावृषी । त्रिष्टुबनुष्टुभौ छन्दसी । श्रीप्रदमहाविष्णुर्देवता । आवहन्ती वितन्वाना हृत् । कुर्वाणा चीरमात्मनः शिरः । वासाँसि मम गावश्च शिखा । अन्नपाने च सर्वदा कवचम् । ततो मे श्रियमावह नेत्रम् । लोमशां पशुभिस्सह स्वाहा अस्त्रम् ॥ ध्यानम् —

अरुणकमलसंस्थं काञ्चनोदीप्तवर्णं
करधृतदरचक्रं पीतकौशेयवस्त्रम् ।
कनककलशरक्ताब्जोत्पलासक्तपाणिं
श्रियमपि च भुजाभ्यां बिभ्रतं नौमि विष्णुम् ॥

आवहन्ती वितन्वाना इत्यादि पशुभिस्सह स्वाहा । आमायन्तु ब्रह्मचारिण स्वाहा । विमायन्तु ब्रह्मचारिणस्स्वाहा । प्रमायन्तु ब्रह्मचारिणस्स्वाहा । दमायन्तु ब्रह्मचारिणस्स्वाहा । शमायन्तु ब्रह्मचारिणस्स्वाहा । यशो जनेसानि स्वाहा । श्रेयान् वस्यसोसानि स्वाहा ॥ तन्त्वा भग इत्यादि,समा भग प्रविशेत्यादि, तस्मिन् सहस्रशाखे इत्यादि, यथापः प्रवतेत्यादि, प्रतिवेशोसीत्यादि, एवमावहन्तीसूक्तमन्त्रः ॥

अथानेन तर्पणप्रकार उच्यते —

प्रथमं जलसमीपे गत्वा उपविश्य गुरुवन्दनादिकं कृत्वा, यश्छन्दसा-मृषभो विश्वरूपः इत्याद्यृचा पादतलादारभ्य शिरःपर्यन्तं व्याप्य पुनः शरीरं मे विचर्षणं इत्याद्यृचा शिरआरभ्य पादपर्यन्तं व्याप्य, आवहन्त्या ऋचा च तथा व्याप्य, पुनरावहन्त्या अङ्गऋष्यादिकं विधाय ध्यात्वा, यश्छन्दसा-मित्यारभ्य आवहन्तीसूक्तं प्रतिवेशोसीत्यन्तं एकवारं जप्त्वा, पुनः यं रं वं इति जलं स्पृष्ट्वा जप्त्वा, शोषणदाहनप्लावनानि विधाय, पुनः यश्छन्दसा-मित्यृचा एकवारं सन्तर्प्य, तत्र जले सूर्यमण्डलादारभ्य जलपर्यन्तं राजत-सोपानं संचिन्त्य, तस्य सर्वस्याधः पद्मं साष्टपत्रं च संचिन्त्य, तस्मिन्कमले शरीरं मे विचर्षणमित्यादिऋचा सूर्यमण्डलसोपानमार्गेण उदकाञ्जलिना आवाहयेत्। एवमावाह्य आवाहनादिमुद्राश्च प्रदर्श्य, तस्मिन् देवेपि पूर्ववदङ्ग-ऋष्यादिकं विधाय ध्यात्वा अर्घ्यपाद्यादिकं दत्त्वा, मानसपूजां च गन्धादिभिः प्रदर्श्य (कृत्वा), पुनः तस्य पुरतः स्वर्णमयं घटं संचिन्त्य तस्मिन् सुरभि-मुद्रया तर्पणद्रव्यं संचिन्तयेत्॥

पायसं दधि भक्तं च क्षीरमाज्यं गुडं तथा।
भक्तं च कदळीपक्वं पक्वे च पुनमाम्रयोः॥
मधु त्रिमधुरं चैव तर्पयेदमृतांभसा।

एवमेकादशद्रव्याणि स्वर्णघटे संचिन्त्य, तैर्द्रव्यैरमृतमयजलेन तर्पयेत्। तत्र प्रथममावहन्ती वितन्वानेत्यृचा एकादशद्रव्येष्वेकैकेन द्रव्येणैकैकवारक्रमेण संतर्प्य, पुनः आमायन्तु ब्रह्मचारिणः स्वाहा इत्यादिभिः यथापः प्रवता यन्ति इत्यन्तैरेकादशभिर्मन्त्रैः एकैकेन मन्त्रेण पायसाद्येकादशद्रव्यैः पूर्वतर्पिता-वशिष्टैः क्रमेण संतर्पयेत्॥

तत्र तु यस्मिन् द्रव्ये वा फले वा अधिकवाञ्छा तेन द्रव्येण वा, तत्तत्फलवाचकेन तेन तेन मन्त्रेण वा बहुवारमावृत्त्या तर्पयेत्॥

एवं सन्तर्प्य पुनर्गण्डूषादीन्दत्वा मानसपूजां च कृत्वा तीर्थेनात्मानं संप्रोक्ष्य, पुनर्देवे लयाङ्ग ऋष्यादिकं कृत्वा, जलाञ्जलिना प्रतिवेशोसि

प्रमापाहीत्यनेन मन्त्रेण सूर्यमण्डले देवमुद्वासयेत् । पुनः स्वस्याप्यङ्गऋष्यादिकं विन्यसेत् । एवं नित्यशस्सन्तर्पिते अतीवात्र लाभो भवति । अयुतं जपेत्पुरश्चरणार्थम् ॥

अथ आवहन्तीतर्पणप्रसङ्गात् आवहन्तीहोमविधानमपि आकाशभैरवकल्पोक्तप्रकारेण लिख्यते—

प्रथमं वैश्वदेवावसाने, पूर्वं तर्पणविधानोक्तप्रकारेण ऋष्याद्यङ्गन्यासादीन् कृत्वा, पुनः यश्छन्दसामृषभो विश्वरूपः अदितेऽनुमन्यस्व, छन्दोभ्योध्यमृतात्संबभूव अनुमतेऽनुमन्यस्व, समेन्द्रो मेधया स्पृणोतु सरस्वतेनुमन्यस्व, अमृतस्य देवधारणो भूयासं देवसवितः प्रसुव, एवं परिषिच्य, पुनः शरीरं मे विचर्षणं स्वाहा, जिह्वा मे मधुमत्तमा स्वाहा, कर्णाभ्यां भूरि विश्रुतं स्वाहा, ब्रह्मणः कोशोऽसि मेधया पिहितः स्वाहा, इति उदुम्बरसमिद्धोमं कृत्वा, श्रुतं मे गोपाय इत्यञ्जलिपुटं कृत्वा, पुनः आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः वासाँसि मम गावश्च अन्नपाने च सर्वदा स्वाहा, पुनरावहन्तीत्यादि श्रियमावह स्वाहा पुनरपि आवहन्त्यादि पशुभिस्सह स्वाहा इति (एवं) चतुर्थपञ्चमषष्ठवाक्यान्ते (च) हविषा हुनेत् । पुनरेकवारं तूर्ष्णीं जपेत् ॥

पुनरामायन्तु ब्रह्मचारिणः स्वाहा । (?) यशोजनेसानिस्वाहा । श्रेयान्वस्यसोसानि स्वाहा । तन्त्वा भग प्रविशानि स्वाहा । समाभग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवतेत्यादि सर्वतः स्वाहा । इति हविषा हुत्वा, पुनरपि आवहन्तीत्यादि धातरायन्तु सर्वतः स्वाहा इत्यन्तमुक्त्वा एकवारं हुनेत् । पुनरावहन्तीत्यादि सर्वतः स्वाहा इत्यन्तं तूर्ष्णीं जप्त्वा प्रतिवेशोसीत्यनेन अञ्जलिबन्धनं कृत्वा, पुनः यश्छन्दसामित्यादिना पूर्ववत् अदितेऽन्वमँस्थाः इति परिषिच्य होमं समापयेत् । एवं कृते अन्नसमृद्धिर्जायते ॥

अथ विद्यारण्यकृते वाञ्छाकल्पलतासंज्ञके षट्सहस्रग्रन्थे प्रोक्तप्रकारेण आवहन्तीहोमविधानं लिख्यते—

माहाचमस्यकहोळाद्यपी। त्रिष्टुबनुष्टुभौ छन्दसी। विराटपङ्क्तिः छन्दः। महाविराट् छन्दः। आवहन्ती अन्नप्रदायिनी महालक्ष्मीर्देवता। श्रीप्रदामहालक्ष्मी-चिक्लीत ऋषिः। बृहती छन्दः। आवहन्ती अन्नप्रदायिनी महालक्ष्मीः देवता। श्रीप्रदमहाविष्णुर्देवता। चिक्लीत ऋषिः। बृहती छन्दः। महा लक्ष्मीर्देवता। गृत्समद ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता। आनन्दनारद ऋषिः। अमृतविराट् छन्दः। त्रैलोक्यसंमोहन श्रीगोपालकृष्णो देवता। नारद ऋषिः। गायत्री छन्दः। अर्धाङ्गलक्ष्मी श्रीगोपालकृष्णो देवता। नारद ऋषिः। गायत्री छन्दः। श्रीकृष्णो देवता। आनन्दभैरव ऋषिः। देवीगायत्री छन्दः। श्रीमहात्रिपुरसुन्दरी देवता। बदरिकाश्रमवासी श्रीनारायण-भगवान् ऋषिः। गायत्री छन्दः। परमात्मा श्रीकरविष्णुर्देवता। शं बीजम्। ईं शक्तिः। लं बीजम्। ह्रीं शक्तिः। ह्रीं बीजम्। स्वाहा शक्तिः। क ए ई लह्रीं इति बीजम्। हसकहलह्रीं इति शक्तिः। सकलह्रीं इति कीलकम्। मम निरतिशयसम्पदर्थे विनियोगः॥

आवहन्तीत्यादिवाक्यषट्केन पूर्वोक्तवत् षडङ्गानि कृत्वा, इन्द्रश्रेष्ठानि हृत्। द्रविणानि धेहि शिरः। चित्तिं दक्षस्य शिखा। सुभगत्वमस्मे कवचम् पोषं रयीणामरिष्टिं तनूनां नेत्रम्। स्वात्मानं वाचस्सुदिनत्वमह्नां अस्त्रम्॥

श्रां हृत्। श्रीं शिरः। इत्याद्यङ्गानि। क्लां हृत्। क्लीं शिरः इत्याद्यङ्गानि। प्रागष्टमपटलोक्तप्रकारेण श्रीविद्यया षडङ्गं च कुर्यात्॥ (ध्यानम्—)

अरुणनळिनसंस्थं काञ्चनोद्दीप्तवर्णं
करधृतदरचक्रं पीतकौशेयवस्त्रम्।
कनककलशरक्ताब्जोत्पलासक्तपाणिं
श्रियमपि च भुजाभ्यां बिभ्रतं नौमि विष्णुम्॥

एवं ध्यात्वा होममारभेत । यश्छन्दसामृषभो विश्वरूपः— अदितेऽनुमन्यस्व । छन्दोभ्योध्यमृतात्संबभूव — अनुमतेऽनुमन्यस्व । स मेन्द्रो मेधया स्पृणोतु — सरस्वतेऽनुमन्यस्व । अमृतस्य देवधारणो भूयासं— देव सवितः प्रसुव, इति परिषिच्य, शरीरं मे विचर्षणं स्वाहा । जिह्वा मे मधुमत्तमा स्वाहा । कर्णाभ्यां भूरि विश्रुवं स्वाहा । ब्रह्मणः कोशोसि मेधया पिहितः स्वाहा इत्यौदुम्बरसमिचतुष्टयं हुत्वा, श्रुतं मे गोपाय इत्युपस्थाय, अथ वक्ष्यमाणद्रव्यहोमः ॥

श्रीं कांसोऽस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियं स्वाहा । श्रीं इन्द्र श्रेष्ठानि द्रविणानि धेहि । चित्तिं दक्षस्य सुभगत्वमस्मे । पोषं रयीणामरिष्टिं तनूनाम् । स्वात्मा(द्मा)नं वाचस्सुदिनत्वमह्नां स्वाहा । श्रींह्लक्लह्रीं स्वाहा । श्रींह्स्क्लह्रीं स्वाहा । श्रीं ह्रीं क्लीं कृष्णाय क ए ई ल ह्रीं आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः स्वाहा । गोविन्दाय हसकहलह्रीं वासाँसि मम गावश्च । अन्नपाने च सर्वदा स्वाहा । गोपीजनवल्लभाय स्वाहा । सकलह्रीं ततो मे श्रियमावह स्वाहा । लोमशां पशुभिस्सह स्वाहा । श्रीं उत्तिष्ठ श्रीकर श्रियै स्वाहा ॥

गोपालक श्रीविद्या श्रीकराष्टाक्षरसहित आवहमन्त्रेण चतुर्धा विभज्य हुत्वा, पुनः कांसोस्मीत्यारभ्य उत्तिष्ठ श्रीकर श्रियै स्वाहा इत्यन्तमेकाहुतिं हुत्वा, पुनः आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा । यशो जनेसानि स्वाहा । श्रेयान्वस्यसोसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । समाभग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । ओं

श्रीं ब्रह्मकोशिनि मां रक्ष रक्ष हुंफट् स्वाहा इति हुत्वा, पुनरपि कांसोसीत्यारभ्य ब्रह्मकोशिनि मां रक्ष रक्ष हुंफट् स्वाहा इत्यन्तमेकाहुतिं कृत्वा, पुनः कांसोसीत्यारभ्य उच्छिष्ट श्रीकर श्रियै स्वाहा इत्यन्तमुक्त्वा एकादशवारं हुनेत्। कांसोस्मीत्यारभ्य ब्रह्मकोशिनीमन्त्रान्तं सकृत् जप्त्वा, प्रतिवेशोसि प्रमा पाहि प्रमापद्यस्वेति अञ्जलिं कृत्वा, पुनरपि यः छन्दसामित्यादि प्रतिवेशोसीत्यन्तमेकाहुतिं कृत्वा, कांसोस्मीत्यादि उच्छिष्ट श्रीकर श्रियै स्वाहा, इत्यन्तमेकाहुतिः। एवमेकादशवारं हुत्वा एकादशवारं जपेच्च। एवमष्टोत्तरशतं वा अष्टोत्तरसहस्रं वा जुहुयाज्जपेच्च ॥

अथ होमार्थमेकादशद्रव्याण्युच्यन्ते — पयः, पायसं, दधि, आज्यसिक्तं शर्करान्नं, अपूपं, मोदकं, मधु, मधुरत्रितयं, कदळी, आम्रफलं, पनसं च इत्येकादश द्रव्याणि। एतैस्सर्वैर्द्रव्यैर्वा आज्यसिक्तान्नेन वा प्रत्यहं जुहुयात्। एकादशद्रव्यैस्तु प्रत्यहं वा, संक्रान्तिषु वा, शुक्रवारे वा जुहुयात्। इत्थं होमविधिः ॥

अथावहन्तीजपविधिः —

पूर्ववत् ऋष्यादिकं कृत्वा ध्यात्वा, कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्। इन्द्र श्रेष्ठानि द्रविणानि धेहि। चित्तिं दक्षस्य सुभगत्वमस्मे। पोषं रयीणामरिष्टिं तनूनाम्। स्वात्मा(द्मा)नं वाचस्सुदिनत्वमह्नाम्। श्रीं श् ह् क् ल् रीं श्रीं ह् स् क् ल् रीं श्रीं ह्रीं क्लीं कृष्णाय कएईलह्रीं, आवहन्ती वितन्वाना। कुर्वाणा चीरमात्मनः। गोविन्दाय हसकहल ह्रीं, वासाँसि मम गावश्च। अन्नपाने च सर्वदा, गोपीजनवल्लभाय स्वाहा। सकलह्रीं, ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा, श्रीं उच्छिष्ट श्रीकर श्रियै स्वाहा। इति मूलमन्त्रं सकृज्जप्त्वा, यः छन्दसामित्यादि प्रतिवेशोसीत्यन्तं पूर्वोक्तहोम-विधानोक्तप्रकारेण सकृत् जप्त्वा, कांसोस्मीत्यारभ्य उच्छिष्ट श्रीकर श्रियै

स्वाहा इत्यन्तमुक्त्वा, तदन्ते आमायन्तु ब्रह्मचारिणः स्वाहा, पुनरपि कांसोस्मीत्यारभ्य श्रीकरमन्त्रान्ते विमायंतु ब्रह्मचारिणः स्वाहा इत्येवंप्रकारेण प्रतिमन्त्रं पूर्वोक्तब्रह्मकोशमन्त्रपर्यन्तं संयोज्य जपेत्। लयाङ्गं कृत्वा प्रतिवेशोसीत्यनेन उपसंहरेत्। इति जपविधिः समाप्तः ॥

अथान्नगोपालादिमन्त्रप्रसङ्गात् अन्नप्रददधिवामनमन्त्रोपि मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते—

चन्द्र ऋषिः। विराट् छन्दः। दधिवामनो देवता। ओं बीजम्। स्वाहा शक्तिः। इष्टार्थे विनियोगः। ओं हृत्। नमः शिरः। विष्णवे शिखा। सुरपतये कवचम्। महाबलाय नेत्राभ्याम्। स्वाहा अस्त्रम्। ओं नमो विष्णवे सुरपतये महाबलाय स्वाहा इति मन्त्रः। अन्नप्रदोयं मन्त्रः। अस्य न्यासविधिः— षडङ्गान्यङ्गुळीष्वपि विन्यस्य मूलेन व्यापकं कृत्वा, मूलमन्त्राक्षराणि शिरोललाटनेत्रद्वयकर्णद्वयोष्ठद्वयतालुकण्ठबाहुहृदयोदरनाभिगुह्योरुजङ्घापादेषु विन्यस्य ऋष्यादीन्विधाय ध्यायेत् ॥

मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं
भृङ्गाकारैरलकनिकरैश्शोभिवक्त्रारविन्दम्।
हस्ताब्जाभ्यां कनककलशं शुद्धतोयाभिपूर्णं
दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ॥

चतुर्लक्षजपः। आज्याक्तैस्तिलैर्दशांशं पुरश्चरणाहोमः। दध्यन्नेन वा ॥

अथ पूजा—

पञ्चदशपटले प्रोक्तचन्द्रपीठे समावाह्य वामनमूर्तिं समर्चयेत्। अङ्गैः प्रथमावृतिः। पूषायै० सुमनसायै० प्रीत्यै० तुष्ट्यै० पुष्ट्यै० वृद्ध्यै० धृत्यै० सौम्यायै० मरीचिन्यै० अंशुमालिन्यै० तिष्ठायै० उद्गतायै० लक्ष्म्यै० इच्छायै० संपूर्णायै० मण्डलायै० १६ इत्याभिः शुभ्रवर्णाम्बरभूषणाभयवरकराभिः

षोडशकलारूपशक्तिभिः द्वितीया । सशक्तिकवासुदेवादिभिस्तृतीया । शान्त्यै० श्रियै० सरस्वत्यै० रत्यै० इति वासुदेवादीनां शक्तयः कोणेषु । मूर्तयो दिक्षु । केशवादिभिर्द्वादशनामभिश्चतुर्थी । कुमुदाय० कुमुदाक्षाय० पुण्डरीकाय० वामनाय शंकुकर्णाय० सर्वनेत्राय० सुमुखाय० सुप्रतिष्ठाय० पिङ्गलाय० हरिसेनाय १० एतैश्शुभ्रवर्णैः शङ्खचक्रगदापद्मपाणिभिः पञ्चमी । लोकपालैष्षष्ठी ॥

अथ प्रयोगः —

प्रतिदिनं दध्यन्नदशाहुतिहोमात् संपूर्णान्नो भवति। प्रतिदिनं नियमेन सहस्रजपादन्नसमृद्धिकरश्च मुक्तिकरश्च ॥

अन्नकामो हुनेन्नित्यमष्टाविंशतिसंख्यया ।
सितान्नं घृतमिश्रं तु प्राप्नुयादन्नमक्षयम् ॥

सितान्नं-शर्करान्नम् ।

अपूपं षड्रसोपेतं हुनेच्चाष्टसहस्रकम् ।
अलक्ष्मीर्नाशमाप्नोति महतीं श्रियमाप्नुयात् ॥

अयुतं चाहुतीर्हुत्वा दध्यन्नं शर्करायुतम् ।
अन्नपर्वतमाप्नोति यत्र यत्र स गच्छति ॥

हुनेत् बिल्वसमीपस्थः पद्माक्षैरयुतं नरः ।
वसुन्धरा महालक्ष्मीः वसु वर्षति तत्र तु ॥

विद्यार्थी प्रजपेन्नित्यं ध्यायन्नेव जनार्दनम् ।
जुहुयात्पायसं मन्त्रैः साक्षाद्वागीश्वरो भवेत् ॥

पुत्रकामो जपेल्लक्षं पुत्रजीवफलैर्हुनेत् ।
तत्काष्ठदीपिते वह्नौ स सत्पुत्रमवाप्नुयात् ॥

ध्यात्वा त्रिविक्रमं देवं रक्ताभं करवीरकैः ।

हुनेदयुतसंख्याकैः सर्वत्र विजयी भवेत् ॥

राज्यकामोपि पद्मानामयुतं जुहुयान्नरः ।
ध्यात्वा चेन्द्रपदं राज्यं लभेच्चिरमकण्टकम् ॥

अपामार्गदलैर्हुत्वा लवङ्गै(ङ्गै)र्वा मधुप्लुतैः ।
अयुतं साध्यनामान्तं महावश्यक्रियां लभेत् ॥

अपामार्गदलं-तदीयपत्रम् ।

आरोग्यकामी जुहुयादपामार्गैश्शतं शतम् ।
आयुष्कामस्त्रिमध्वक्ततिलदूर्वाङ्कुराक्षतैः ॥

अयुतं जुहुयात्तावज्जपेदायुर्लभेत् चिरम् ।
स्मृत्वा त्रैविक्रमं रूपं जपेद्दशसहस्रकम् ॥

मुक्तो बन्धाद्भवेत्सद्यः नात्र कार्या विचारणा ।

अथ यन्त्रमुच्यते —

ससाध्यलक्ष्मीप्रणवाढ्यकर्णिकं मन्त्राक्षरद्वन्द्वदलाष्टकं च ।
शिष्टार्णयुग्मोल्लसितान्त्यपत्रं अष्टाक्षरैरुज्वलपत्रकाग्रम् ॥

परीतमुद्वादशवर्णमन्त्रं ततो बहिर्मातृकया च वीतम् ।
ततो बहिः पूर्णमखण्डबीजं यन्त्रं त्विदं श्रीमदभीष्टदं च ॥

अस्यार्थः — अष्टपत्रकर्णिकायां प्रणवं तन्मध्ये श्रीबीजं तन्मध्ये साध्यनाम, अष्टदलमध्ये मन्त्रस्य वर्णद्वयं अन्त्ये अवशिष्टं वर्णद्वयं च। दलाग्रे प्रसिद्धाष्टाक्षरं, तद्बहिः प्रथमे वृत्ते वासुदेवद्वादशाक्षरमन्त्रेण वेष्टयेत्। द्वितीये वृत्ते मातृकया तद्बहिः प्रणवेन वेष्टयेत् ॥

अथ यज्ञेश्वरवामनमन्त्रः —

नळकूवर ऋषिः । अतिजगती छन्दः । यज्ञेश्वरवामनो देवता । क्लीं बीजम् । स्वाहा शक्तिः । क्लां हृत् । क्लीं शिरः इत्याद्यङ्गानि । ध्यानादिकं पूर्ववत् । ओं क्लीं श्रीं ठं नमो भगवते विष्णवे सुरपतये महाबलाय स्वाहा ॥ इति मन्त्रः । यज्ञेश्वरसमानैश्वर्यप्रदः ॥

अथ भोगवामनमन्त्रः —

कपिल ऋषिः । गायत्री छन्दः । भोगवामनो देवता । ओं बीजम् । स्वाहा शक्तिः । मन्त्रपदैः पञ्चाङ्गानि । ध्यानम् —

नीलवर्णश्चतुर्बाहुः शङ्खचक्रगदाब्जधृक् ।
सर्वान्भोगान्ददात्येष भक्तानां भोगवर्धनः ॥

ओं नमो भगवते विष्णवे महाबलाय स्वाहा ॥ इति मन्त्रः ॥

अथ विश्ववामनमन्त्रः —

ब्रह्मा ऋषिः । गायत्री छन्दः । मायाबालकवामनो देवता । ओं बीजम् । स्वाहा शक्तिः । मन्त्रपदैः पञ्चाङ्गानि ॥

पीताम्बरोत्तरीयोऽसौ मौञ्जीकौपीनधृक् हरिः ।
कमण्डलुं च दध्यन्नं दण्डं छत्रं करे दधत् ॥

यज्ञोपवीततत्त्वाङ्गो ध्यातव्यो वामनस्सदा ।

नमो मायाबालकविष्णवे महाबलाय स्वाहा ॥ इति मन्त्रः ॥

अन्नविद्याभूमिदोऽयं भक्तानामभयंकरः ।

एतेषां मन्त्राणां पुरश्चरणादिकं पूर्ववत् ॥ इति मन्त्र देवताप्रकाशिकोक्ता वामनमन्त्राः ॥

अथ वैश्रवणमन्त्र उच्यते —

ओं वैश्रवणाय स्वाहा। ओं यक्षाशाय स्वाहा। ओं पिङ्गलाय स्वाहा। ओं निधिपाय स्वाहा। ओं वित्तेशाय स्वाहा। ओं कुबेराय स्वाहा। ओं भूः स्वाहा। ओं भुवः स्वाहा। ओं सुवः स्वाहा। ओं भूर्भुवस्वः स्वाहा॥ १०॥ एते दश कुबेरमन्त्राः॥ ऋष्यादयः प्रसिद्धाः॥

वित्तेशस्यान्तराळे दशवटसमिधस्सर्पिषाक्ता विविक्ताः
होतव्या द्रव्यसिध्यै कनकघटकरण्डात्तदोस्तुन्दिलोसौ।
हेमाभो रत्नदीपोदरकमलनिधिद्योतिते हेमपीठे
ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्वदेवावसाने॥

मन्त्रैरेतैर्घृतयुतपायसहोमोपि मन्त्रिणां विहितः।
लक्ष्म्यै सघृतैश्च तिलैर्बिल्वसमिद्धोमतस्तदेव फलम्॥

अस्यार्थः — वटसमिधो दशसंख्यमाज्यसिक्ता वैश्रवणमन्त्रेषु वित्तेशाय स्वाहेत्यनेन मन्त्रेण जुहुयात् द्रव्यसिध्यै कनकघटेत्याद्युक्तप्रकारेण ध्यात्वा॥

प्रयोगान्तरम् —

वैश्वदेवावसानेऽग्नौ घृतसिक्तेन पायसेन जुहुयाल्लक्ष्म्यै। घृतसिक्तैस्तिलैश्च बिल्वसमिद्भिश्च जुहुयाल्लक्ष्म्यै॥

अथ यक्षप्रवरकुबेरमन्त्रप्रसङ्गात् गन्धर्वप्रवरचित्ररोनादिमन्त्रोपि (मन्त्रा अपि) मन्त्रदेवताप्रकाशिकोक्तप्रकारेणात्र योग्यतावशाल्लिख्यते (न्ते)॥

ब्रह्मा ऋषिः। विराट् छन्दः। गन्धर्वो देवता। क्लीं हृत्। राजन् शिरः। गन्धर्व शिखा। गगनाश्रय कवचम्। चित्रसेन नेत्रम्। कन्यां प्रयच्छ मे स्वाहा अस्त्रम्। ध्यानम् —

द्वादशस्त्रीपरिवृतं सुरसङ्घपुरस्सरम्।
कामदं चित्रसेनाख्यं कन्यादानसुदीक्षितम्॥

वन्दे गन्धर्वराजानं मणिमालाविराजितम् ।
सुधर्माधिष्ठितं नित्यं शुद्धचामीकरप्रभम् ॥

मन्दारपुष्पसुमनोहरकेशपाशं
वामभ्रुवां ललितविग्रहमप्रमेयम् ।
वन्दे च नित्यमभिराममनङ्गतुल्यं
आलोलकुन्तळमथाब्जदळायताक्षत् ॥

क्लीं राजन् गन्धर्व गगनाश्रय चित्रसेन कन्यां प्रयच्छ मे स्वाहा ॥
इति मन्त्रः । षण्मासं नित्यमष्टोत्तरशतं जपेत् । इष्टां कन्यां लभते ॥

लाजैः पुष्पैर्घृतैर्होमात् नित्यं द्वात्रिंशकं परम् ।
द्वादशं तर्पणं नित्यं विधिरेष भवेत्सदा ॥

तस्मै सर्वप्रयत्नेन कन्यां दद्यात्सदावराम् ।

पुष्पाणि यानि कानिचित् काम्यकुसुमानीति ।

प्रयोगान्तरम्—

वचापिप्पलिनिर्गुण्डीश्चूर्णं कृत्वा शुभे दिने ।
मन्त्रं जप्त्वाष्टशतकं भक्षयेद्यदि मानवः ॥

गानविद्यां समाप्नोति शीघ्रमेव विशेषतः ।

वचा-वेखण्ड । पिप्पली-पिंपली । निर्गुण्डी-निर्गुण्डी நொச்சில்.

प्रयोगान्तरम्—

मन्त्रमष्टोत्तरशतं जप्त्वा दशदिनं सुधीः ।
घृतं पिबेत्तु मन्त्रान्ते रूपमेव भवेत्क्षणात् ॥

प्रयोगान्तरम् —

गुरोर्वारे तथा विद्वान् सौम्ये वाथ विशेषतः।
घृतमिश्रैः प्रसूनैस्तु जुहुयाद्वै शतत्रयम् ॥

यथावर्णं प्रसूनं वै तद्वर्णं वस्त्रमाप्नुयात्।
सोमवारदिने पूर्वं पूजां कृत्वा विनायके ॥

आसीनोदङ्मुखो मन्त्री मन्त्रमष्टशतं जपेत्।
जपान्ते क्षीरहोमी स्यात्तदर्धं वै पुनः पुनः ॥

तच्छेषं प्राशयेद्विद्वान् वाङ्नदीवेगवान् भवेत्।
वटवृक्षस्य मूलेऽस्मिन्नासीनः प्राङ्मुखः शुचिः ॥

सायं प्रातर्जपेन्मन्त्री मन्त्रमष्टशतं क्रमात्।
सप्ताहं वाथ पञ्चाहं यथाविधि समाहितः ॥

जपान्ते तर्पणं होमं सतिलैर्घृतसंयुतम्।
तच्छेषं प्राशयेद्विद्वान् वाङ्नदीवेगवान् भवेत् ॥

भानुपुष्पं समादाय तीक्ष्णतैलेन मिश्रितम्।
द्विरात्रं होमयेन्मन्त्री मन्त्रमष्टशतं जपेत् ॥

उच्चाटनमिदं साक्षादरेस्तस्य न संशयः।

भानुपुष्पं – रुचीचेंफूल எருக்கம்பூ तीक्ष्णतैलं–मोहरयाचेंतेल கடுகுஎண்ணெய்

अत्र प्रसङ्गात् विश्वावसुमन्त्रोपि लिख्यते —

भार्गवः महावैश्रवणो वा ऋषिः। विराट् छन्दः। इन्द्राणी वा गन्धर्वराजविश्वावसुर्वा देवता। ह्रीं बीजम्। कं शक्तिः। अभिलषितकन्या-(प्राप्त्य)र्थे विनियोगः। गन्धर्वराजन् (राज) हृत्। विश्वावसो शिरः। ममाभिलषितां शिखा। कन्यां कवचम्। प्रयच्छ स्वाहा अस्त्रम् ॥

ध्यानम् —

ध्यायन्निक्षुरसान्विते रथवरे पुण्ड्रेक्षुभिः कल्पिते
कल्हारस्रगुपात्तपाणिकमलैः कन्याजनैस्सेवितम् ।
गन्धर्वाधिपतिं प्रसन्नवदनं विश्वावसुं यः पुमान्
मन्त्रं तस्य जपेल्लभेत नियतं कन्यामसौ कांक्षिताम् ॥

गन्धर्वराजन् (राज) विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा ॥ इति मन्त्रः ॥

रम्यां विश्वावसो कन्यामलङ्कारादिसंयुताम् ।
ममाभिलषितां कन्यां देहि वीणामिवापराम् ॥

इति च मन्त्रः ॥ अनयोर्मन्त्रयोरनुक्तं सर्वं पूर्वोक्ततो ग्राह्यम् ॥

अथ बृहस्पतिमन्त्र उच्यते —

ब्रह्माऽनुष्टुप् बृहस्पतयो ऋष्याद्याः । ब्रां हृत् । ब्रीं शिरः । इत्याद्यङ्गम् । ब्रं बृहस्पतये नमः ॥ इति मन्त्रः । अष्टसहस्रं जपेत् । सर्पिस्सिक्तेनान्नेन दशांशं पुरश्चरणाहोमः । पूजायामङ्गेन्द्रवज्रादिभिरावरणत्रयम् ॥ ध्यानम् —

रत्नस्वर्णांशुकादीन् निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमेवं
भीतापुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत्स्वर्णवस्त्रादिसिध्यै ॥

अयमर्थः — एवंरूपं बृहस्पतिं ध्यात्वा घृतसिक्तैर्भीतापुष्पैः विंशत्युत्तर-शतसंख्यं त्रिदिनं हुनेत् स्वर्णादिसिध्यै । भीतापुष्पं लज्जालुकाप्रसूनं (தொட்டாச்சிணுங்கிப்பூ) इति सत्संप्रदायसर्वस्वे उक्तम् ॥

अथ शुक्रमन्त्र उच्यते —

ब्रह्मा ऋषिः । विराट्छन्दः । शुक्रो देवता । ओं बीजम् । स्वाहा शक्तिः ।

प्रयोगान्तरम्—

गुरोर्वारे तथा विद्वान सौम्ये वाथ विशेषतः।
घृतमिश्रैः प्रसूनैस्तु जुहुयाद्वै शतत्रयम् ॥

यथावर्णं प्रसूनं वै तद्वर्णं वस्त्रमाप्नुयात्।
सोमवारदिने पूर्वं पूजां कृत्वा विनायके ॥

आसीनोदङ्मुखो मन्त्री मन्त्रमष्टशतं जपेत्।
जपान्ते क्षीरहोमी स्यात्तदर्धं वै पुनः पुनः ॥

तच्छेषं प्राशयेद्विद्वान् वाङ्नदीवेगवान् भवेत्।
वटवृक्षस्य मूलेऽस्मिन्नासीनः प्राङ्मुखः शुचिः ॥

सायं प्रातर्जपेन्मन्त्री मन्त्रमष्टशतं क्रमात्।
सप्ताहं वाथ पक्षाहं यथाविधि समाहितः ॥

जपान्ते तर्पणं होमं सतिलैर्घृतसंयुतम्।
तच्छेषं प्राशयेद्विद्वान् वाङ्नदीवेगवान् भवेत् ॥

भानुपुष्पं समादाय तीक्ष्णतैलेन मिश्रितम्।
द्विरात्रं होमयेन्मन्त्री मन्त्रमष्टशतं जपेत् ॥

उच्चाटनमिदं साक्षादरेस्तस्य न संशयः।

भानुपुष्पं – रुचीचेंफूल எருக்கம்பூ तीक्ष्णतैलं—मोहरयाचेंतेल கடுகுஎண்ணை

अत्र प्रसङ्गात् विश्वावसुमन्त्रोपि लिख्यते—

भार्गवः महावैश्रवणो वा ऋषिः। विराट् छन्दः। इन्द्राणी वा गन्धर्वराजविश्वावसुर्वा देवता। ह्रीं बीजम्। क्रूं शक्तिः। अभिलषितकन्या-(प्राप्त्य)र्थे विनियोगः। गन्धर्वराजन् (राज) हृत्। विश्वावसो शिरः। ममाभिलषितां शिखा। कन्यां कवचम्। प्रयच्छ स्वाहा अस्त्रम् ॥

ध्यानम् —

ध्यायन्निक्षुरसान्विते रथवरे पुण्ड्रेक्षुभिः कल्पिते
कल्हारस्रगुपात्तपाणिकमलैः कन्याजनैस्सेवितम् ।
गन्धर्वाधिपतिं प्रसन्नवदनं विश्वावसुं यः पुमान्
मन्त्रं तस्य जपेल्लभेत नियतं कन्यामसौ कांक्षिताम् ॥

गन्धर्वराजन् (राज) विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा ॥ इति मन्त्रः ॥

रम्यां विश्वावसो कन्यामलङ्कारादिसंयुताम् ।
ममाभिलषितां कन्यां देहि वीणामिवापराम् ॥

इति च मन्त्रः ॥ अनयोर्मन्त्रयोरनुक्तं सर्वं पूर्वोक्ततो ग्राह्यम् ॥

अथ बृहस्पतिमन्त्र उच्यते —

ब्रह्माऽनुष्टुप् बृहस्पतयो ऋष्याद्याः । ब्रां हृत् । ब्रीं शिरः । इत्याद्यङ्गम् । ब्रं बृहस्पतये नमः ॥ इति मन्त्रः । अष्टसहस्रं जपेत् । सर्पिस्सिक्तेनान्नेन दशांशं पुरश्चरणाहोमः । पूजायामङ्गैरष्टवज्रादिभिरावरणत्रयम् ॥ ध्यानम् —

रत्नस्वर्णांशुकादीन् निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमेवं
भीतापुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत्स्वर्णवस्त्रादिसिध्यै ॥

अयमर्थः — एवंरूपं बृहस्पतिं ध्यात्वा घृतसिक्तैर्भीतापुष्पैः विंशत्युत्तर-शतसंख्यं त्रिदिनं हुनेत् स्वर्णादिसिध्यै । भीतापुष्पं लज्जालुकाप्रसूनं (தொட்டாச்சிணுங்கிப்பூ) इति सत्संप्रदायसर्वस्वे उक्तम् ॥

अथ शुक्रमन्त्र उच्यते —

ब्रह्मा ऋषिः । विराट्छन्दः । शुक्रो देवता । ओं बीजम् । स्वाहा शक्तिः ।

बीजेन वा मन्त्रपदैर्वा अङ्गानि। वस्त्रं मे देहि शुक्राय स्वाहा। इति मन्त्रः। अयुतं जपेत्। आज्येन सहस्रं हुनेत्। पुरश्चरणाहोमः। अङ्गेन्द्रवज्रादिभिरावरणपूजा॥ अथ प्रयोगः—

शुक्रास्ये शुक्रपुष्पैर्हुतभुजि गुणशस्सप्तशो वैकविंश-
द्वारं होतव्यमेषोप्यतिसितकुसुमालेपनो वामदोष्णा।
वासोरत्नानि कार्तस्वरमपि सततं साधकाय प्रयच्छन्
ध्येयो व्याख्यानमुद्राकलितपरकरस्त्वापणालिन्दसंस्थः॥

तत्र अलिन्दमिति वेदिका। अस्यार्थः—शुक्रास्ये शुक्रवारे शुक्रपुष्पैः रलयोरभेदात् शुक्लपुष्पैः त्रिभिस्त्रिभिः पुष्पैर्वा सप्तभिस्सप्तभिः पुष्पैर्वा एकविंशतिवारं हुनेत्। उक्तप्रकारेण ध्यात्वा। तस्माद्वासोरत्नानि प्रदास्यति॥ तत्र गुणशः एकविंशद्वारहोमो मालतीमल्लिकाजातिभिः। जातीजायपत्री ஜாதிபத்திரி. सप्तशः एकविंशद्धोमः पङ्कजकुमुदकल्हारकुन्दमन्दारनन्द्यावर्तजवन्तिकाभिः। मिश्रहोमपक्षे द्विचत्वारिंशदाहुतिसंख्याः। अमिश्रहोमपक्षे दशाधिकद्विशतसंख्या आहुतयः। अमिश्रस्तु एकैकविधपुष्पहोमः॥

अथ शुक्रादिमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्ता इतरग्रहमन्त्रा उच्यन्ते-

अङ्गारकमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः। अङ्गारको देवता। अं बीजम्। आय शक्तिः। बीजेनैव षडङ्गानि। ध्यानम्—

नमाम्यङ्गारकं देवं रक्ताभं वरभूषणम्।
जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम्॥

अं अङ्गारकाय नमः। इति मन्त्रः। अष्टसहस्रं जपः। आज्येन दशांशं होमः। केवलपद्मे समावाह्य समर्चयेत्॥ अङ्गैः प्रथमावृतिः। नवग्रहैर्द्वितीयावृतिः। इन्द्रादिभिस्तृतीया। एवं संपूजयेत्॥

अथ बुधमन्त्रः—

बुधमन्त्रस्य ब्रह्मा ऋषिः । पङ्क्तिः छन्दः । बुधो देवता । बुं बीजम् । आय शक्तिः । बीजेनैव षडङ्गानि । ध्यानम् —

वन्दे बुधं सदा देवं पीताभं वरभूषणम् ।
जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ॥

बुं बुधाय नमः । इति मन्त्रः । अङ्गग्रहदिक्पालैरावरणत्रयेण पूजाविधिः । अक्षरसहस्रं जपः । आज्येन दशांशं होमः ॥

अथ शनैश्चरमन्त्रः —

शनैश्चरमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः शनैश्चरो देवता । शं बीजम् । आय शक्तिः । बीजेनैव षडङ्गानि ॥ ध्यानम् —

वन्दे शनैश्चरं दंष्ट्रावज्रनीलाभभूषणम् ।
जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ॥

शं शनैश्चराय नमः । इति मन्त्रः । अक्षरसहस्रं जपः । आज्येन दशांश-होमः । अङ्गग्रहदिक्पालैः आवरणत्रयेण पूजा ॥

अथ राहुमन्त्रः —

ऋष्यादिकं वक्ष्यमाणकेतुमन्त्रवत् । रां राहवे नमः । इति मन्त्रः । पूजादिकं पूर्ववत् ॥

अथ केतुमन्त्रः —

ब्रह्मा ऋषिः । पङ्क्तिः छन्दः । केतुर्देवता । कें बीजम् । वः शक्तिः । बीजेनैव षडङ्गानि ॥ ध्यानम् —

वन्दे केतुं कृष्ण(चित्र)वर्णं वराभरणभूषितम् ।
जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ॥

कें केतवे नमः। इति मन्त्रः। अक्षरसहस्रं जपः। आज्येन दशांशं होमः। पूजादिकं पूर्ववत् ॥

स्वस्ववारे जपपूजातर्पणहोमादीनि तत्तद्ग्रहप्रीतिकराणि सर्वसंपत्कराणि च भवन्ति ॥

अथ व्यासमन्त्र उच्यते —

ब्रह्मानुष्टुब्व्यासा ऋष्यादयः। व्यां बीजम्। नमश्शक्तिः। बीजेन दीर्घस्वरयुक्तेनाङ्गानि। व्यां वेदव्यासाय नमः। इति मन्त्रः॥ ध्यानम् —

मुनिव्रातावीतं मुदितवियमम्भोजरुचिर-
द्युतिं व्याख्यामुद्राकलितविलसद्दक्षिणकरम्।
परं जानौ कृत्वा दृढकलितकक्ष्यं कविवरं
समासीनं व्यासं स्मरत निरतं पुण्यचरितम् ॥

अष्टसहस्रं जपेत्। आज्यसिक्तेन पायसेन दशांशं पुरश्चरणाहोमः। कविताप्रज्ञाव्याख्याश्रीप्रदानप्रधानोऽयं मन्त्रः ॥

अथ सङ्कोचमन्त्रः —

ॐ अकचटतपहव्लों ह्रीं दुं सः हुंफट् स्वाहा। इति षोडशवर्णस्सङ्कोचमन्त्रः। ब्रह्मा ऋषिः। अनुष्टुप्छन्दः। पर्वतो देवता। दुं बीजम्। ह्रीं शक्तिः। अं ओं ह्रां हृत्। कं ओं ह्रीं शिरः। चं ओं ह्रूं शिखा। टं ओं ह्रैं कवचम्। तं ओं ह्रौं नेत्रम्। पं ओं ह्रः अस्त्रम्। षोडशसहस्रं जपेत्। तिलैश्च *सर्षपैश्च शालितण्डुलहविषा च आज्येन च प्रत्येकं त्रिशतसंख्यया संभूय दशांशं जुहुयात्। पुरश्चरणाहोमः ॥

* सर्षपैश्च शालितण्डुलैश्च हविषा च आज्येन च प्रत्येकं विंशत्यधिक त्रिशतसंख्यया इति पाठः शोधनीय इति भाति।

अथानेन मन्त्रेण रिपुनिग्रहार्थं ध्यानप्रयोगेण श्लोकद्वयं लिख्यते—

उत्तुङ्गाद्रिः प्रचेता अपि दहनसमीरौ धरा व्योमसंज्ञे
प्राक्प्रत्यक्दक्षसौम्यास्वधउपरि च दिक्षु प्रबद्धप्रभाः स्युः ।
तन्मध्यस्थान्विपक्षादिकहरिरुरुदन्तीन्द्रनागान्सचोरान्
हन्त्येतैर्मन्त्रिमुख्यो मनुविहितबलव्याकुलान्सद्य एव ॥

निजरिपुमचलाद्यैस्तैस्ससंबाधवीतं
मनुविदथ हलोभ्यां रुद्धनिश्वासवेगम् ।
तदुपरि गतबीजैस्साधु संसूतवक्त्रं
दहतु सकवचास्त्रं द्वीन्दुभिः स्वेच्छयैव ॥

अस्यार्थः— तत्र एतैरेव संकोचमन्त्राक्षरैरेव प्रयोगं कथयति । एतदुक्तं भवति— महापर्वतरूपेण अकारेण पूर्वभागं, महासलिलरूपेण ककारेण पश्चिमभागं, दहनरूपेण चकारेण दक्षिणभागं, महावायुरूपेण टकारेण उत्तरभागं, महाधरारूपेण तकारेण अधोभागं, महाव्योमरूपेण पकारेण उपरिभागं च दृढतरं तत्तदक्षरतेजोभिराबध्य तन्मध्यस्थानां रिपुसिंहव्याघ्रमत्तहस्ति भुजगचोरादीनां हकारलोंकाराक्षराभ्यां श्वासनिरोधं च नवरन्ध्रनिरोधं च कृत्वा, तदुपरि स्थितैः ह्रीं दुं सः इति त्रिभिरक्षरैः तद्वक्त्रं सूतं ध्यात्वा हुंफट्स्वाहा इत्येतैः शिष्टैश्चतुर्भिरक्षरैर्वह्निरूपैः तं सूतं दहेदिति ॥

अथाश्वारूढामन्त्र उच्यते—

दीर्घतपा ऋषिः । गायत्री छन्दः । अश्वारूढा देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । प्रणवभुवनेश्यौ वा बीजशक्ती । स्वाहा वा शक्तिः । वश्यप्रधानोयं मन्त्रः । प्रणवपाशाभ्यां हृदयम् । शक्त्या शिरः ।

क्रों शिखा। एहि कवचम्। परमेश्वरि नेत्रम्। स्वाहा अस्त्रम्। आं हृत्। ह्रीं शिरः। क्रों शिखा। आं कवचम्। ह्रीं नेत्रम्। क्रों अस्त्रम् इति वा। ध्यानम् —

अश्वारूढा कराग्रैर्नवकनकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्येनानयन्ती स्फुरिततनुलतां पाशबद्धां स्वसाध्याम्।
देवी नित्या प्रसन्नाननशशधरबिम्बा त्रिणेत्राभिरामा
दद्यादाद्यानवद्या प्रवरसुखफलप्राप्तिहृद्यां श्रियं वः॥

कल्पान्तरोक्तध्यानमुच्यते —

उत्तुङ्गतुरगारूढे करोद्यत्पाशदण्डिनि।
नारीलोकमशेषं मे वशमानय पार्वति॥

ध्यानान्तरम् —

रक्तामरवाधिरूढां नवकनकमयीं वेत्रयष्टिं दधानां
पाशेनाबध्य साध्यां स्मरशरविवशां दक्षिणेनानयन्तीम्।
नानाकल्पाभिरामामरुणकिरणसंकाशवस्त्रां प्रसन्नां
देवीं ध्यायेज्जगन्मोहनवशकरणीं पार्वतीं साधकेन्द्रः॥

ओं आं ह्रीं क्रों एहि परमेश्वरि स्वाहा। इति मन्त्रः त्रयोदशार्णः। पाशादिबीजत्रयं मूलग्रन्थे अनुक्तमपि विवरणकारैरुक्तम्। अयुतं जपेत्। आज्येन सहस्रं पुरश्चरणाहोमः॥

अथ पूजाविधिः —

नवमपटले प्रोक्तभुवनेशीविधानोक्ते पीठे समावाह्य समर्चयेत्। अङ्गैः प्रथमावृतिः। मातृभिर्द्वितीया। इन्द्रादिभिस्तृतीयावृतिः॥

अथ प्रयोगः —

ध्यातापि गिरिसुतेयं जगतीं विश्वां वशीकरोत्यनिशम् ।

प्रयोगान्तरम् —

विधयाऽनुदिनहृद्ययाऽनया होमकर्म वरहेमदायि तत् ।

द्रव्यानुक्ते घृतमिति न्यायात् घृतैस्सहस्रं हुनेदित्यर्थः ।

कामितां सपदि वामलोचनामानयेदविकमारपीडिताम् ।

प्रयोगान्तरम् —

हवनक्रिया सपदि वश्यकरी मधुरावसेकपटुना पटुना ।

अयमर्थः — पटु-मीठ (लवणं) । त्रिमधुरसिक्तैर्लवणैर्हुनेद्वश्यार्थम् ।

सदृशो न कश्चन जगत्यपरो मनुनामुनाऽऽनयनकर्मविधौ ।

इति मन्त्रप्रशंसा कृता ॥

अथ श्रीमुखन्यासविधिरुच्यते —

अस्य लक्ष्मीनारायण ऋषिः । बृहती छन्दः । श्रीर्देवता । श्रीं बीजम् । ह्रीं शक्तिः ॥

वाणी स्यात्तारूपा शिरसि गिरिसुता शक्तिरूपा ललाटे
रव्यग्न्यक्ष्णोस्तथामौ विधुरपि वदनावेष्टने टान्तरूपः ।
श्रीर्जिह्वायां स्वरूपा मद इह करिरूपौ स्वहौ दीर्घयुक्ता-
वेवं न्यासो मुखश्रीसुखविभवयशःकान्तिमेधाकरः स्यात् ॥

अस्यार्थः — अंगुष्ठमध्याग्रे संश्लिष्टे विधाय अन्यास्तिस्रोंगुलीः तलाग्रसंश्लिष्टाग्रसुश्लिष्टाग्रा विधाय अंगुष्ठमध्यमाग्राभ्यां प्रणवादिबीजैः सरस्वत्यादिभावनया सरस्वत्यादिनामोत्तरैः वक्ष्यमाणप्रकारेण न्यसेत् । ओं सरस्वत्यै नमः । ह्रीं पार्वत्यै नमः । अं सूर्याय नमः । मं अग्नये नमः । ठं चन्द्रमसे नमः । श्रीं श्रियै नमः । स्वां करिण्यै नमः । हां करिण्यै नमः ॥

अस्य न्यासस्य स्थानमुच्यते —

मूर्धललाटनेत्रद्वयमुखवृत्तजिह्वाकपोलद्वन्द्वेषु विन्यसेत् क्रमशः। एवं न्यस्त्वा उक्तफलमाप्नोति ॥

अथास्या अश्वारूढाया विवरणोक्तं यन्त्रमुच्यते —

षोडशकोष्ठानि लिखित्वा मध्यचतुष्करेखां मार्जयित्वा (तत्र मध्ये) प्रणवं ससाध्यं विलिखेत्। अवशिष्टेषु (कोष्ठेषु) अवशिष्टान्वर्णान्विलिखेत्। सर्ववश्यकरमिदं यन्त्रम् ॥

अथ मन्त्रसारोक्तप्रकारेणापि अश्वारूढाविधानमुच्यते —

शक्तिः ऋषिः। विराट् छन्दः। गिरीन्द्रसुता देवता। आं हृत्। ह्रीं शिरः। क्रों शिखा। एहि कवचम्। परमेश्वरि नेत्रम्। स्वाहा अस्त्रम्॥ ध्यानम् —

पाशेनाबध्य साध्यां स्मरशरविवशां वामदोष्णानयन्तीं
सौवर्णीं वेत्रयष्टिं निजकरकमलेनापरेणादधानाम्।
रक्तां रक्ताङ्गरागाम्बरकुसुमयुतामश्वसंस्थां प्रसन्नां
देवीं बालेन्दुचूडां मनसि मुनिनुतां पार्वतीं भावयामि ॥

आं ह्रीं क्रों एहि परमेश्वरि स्वाहा। इति द्वादशाक्षरोयं मन्त्रः ॥

पादाग्रजानुशिवनाभिहृदंसकण्ठ-
जिह्वाग्रघोणनयनालिकशीर्षकेषु।
न्यस्याक्षराणि च मनोरथपञ्चबाणान्
न्यस्येत्तनौ शितमतिर्दशधा पुरोक्तान् ॥

प्रागष्टमपटले स्वयंवराविधाने प्रोक्तानित्यर्थः ॥ अयुतं जपेत् पुरश्चरणार्थम्। आज्यैर्दशांशं जुहुयात् ॥

अथ पूजाविधिः —

पूर्वमष्टमपटले प्रोक्तस्वयंवराविधानोक्तवत् पूजा । अत्र तु प्रथमावृतौ शक्तिं यजेत् । पुनरङ्गाद्यावरणानि क्रमेण । हृल्लेखागगनारक्ताकरालिका महोच्छुष्मा अत्र शक्तयः ॥

अथ प्रयोगः—

मधुरत्रयसंयुतैस्सरोजैररुणाभैर्विकचैस्सहस्रसंख्यम् ।
दिवसस्य मुखे जुहोतु वह्नौ यशसे सर्वसमृद्धये सुतास्यै ॥

पटुनाष्टसहस्रतयं मधुरैर्जुहुयादनले सुसमिद्धतरे ।
स तु मण्डलतो जगतां त्रितयं वशयेत्परमां समवाप्य रमाम् ॥

पटु—मीठ (लवणम्) । त्रिमधुरसिक्तैर्लवणैर्जुहुयात् इत्यर्थः ॥

प्रयोगान्तरम् —

उदये सहस्रभानोस्सहस्रपत्रे विकस्वरे न्यस्य ।
नवनीतं तेनाग्नौ जुहुयाल्लभते महत्तरां लक्ष्मीम् ॥

सहस्रपत्रं—कमलम् ।

प्रयोगान्तरम् —

लोणकृतमुद्रिकाभिः दध्यक्ताभिर्हुतक्रिया त्रिदिनम् ।
लक्ष्मीकरी नराणां जनतासंवादकारिणी चोक्ता ॥

लोणं—लवणम् । मुद्रिका—गुडिका ॥

अथास्य यन्त्रम् —

कोष्ठान्यालिख्य मन्त्री विकृतिपरिमितान्येषु मध्ये चतुष्कं
संमार्ज्यास्मिन्ससाध्यं प्रणवमभिलिखेन्मन्त्रवर्णान्परेषु ।

वर्णैर्वीतं घटस्थं जलरुहपुटितं साधुसंपातसिक्तं
कुर्याद्वश्यां त्रिलोकीं मनुजपमहितं धारयन्यन्त्रमेतत् ॥

अस्यार्थः — विकृतिपरिमितान् षोडशपरिमितानित्यर्थः । वर्णैर्वीतं मातृकावर्णैर्वेष्टितमित्यर्थः ॥ अस्य फलमाह —

मन्त्रेणानेन सदृङ् नान्योस्त्याकर्षणे विशेषेण ।
मन्त्री मनुवरमेनं तस्माद्भक्त्या भजेदभीप्सितदम् ॥

प्रोक्तान्स्वयंवरस्य(वरायाः) प्रयोगभेदाननेन मन्त्रेण ।
कुर्यान्मन्त्री मन्त्रोरनयोर्नैवास्ति किञ्चिदपि भेदः ॥

अथाश्वारूढायाः (मन्त्र) अक्षरस्तोत्रं कल्पान्तरोक्तमत्र लिख्यते —

ओंकारभद्रपीठामुद्यन्मार्ताण्डमण्डलच्छायाम् ।
उल्लासिकमलवदनामुज्ज्वलवेषामुपास्महे गौरीम् ॥ १ ॥

आन्तरतमोनिहन्त्रीमाश्रयतामखिलमोहनाकाराम् ।
कलये कामपि करुणामरुणां गुरुणा प्रबोधितामन्तः ॥ २ ॥

ह्रींकारवाच्यरूपां हृतभक्तजनार्तिमिन्दुखण्डधराम् ।
अनुसन्धयामि विद्यामाद्यामश्वाधिरोहकौतुकिनीम् ॥ ३ ॥

क्रोडीभवन्मुकुन्दो हंसीभूतो विधिश्च यद्व्यक्तिम् ।
अनलमभूतां वेत्तुं तस्य स्थाणोर्भजे परां शक्तिम् ॥ ४ ॥

एधन्ते निरपाया यच्चरणजुषां विभूतयो विदुषाम् ।
अश्वाधिरोहिणीं तामम्बामानन्दकन्दलीं वन्दे ॥ ५ ॥

हितमुपदिशामि चेतो विजहिहि वृद्धान्वयापरिभ्रमणम् ।
परिहर वाहितमखिलं पशुपतिदयितापदाम्बुजस्मरणात् ॥ ६ ॥

परिहसितविद्रुमलताप्रभया पर्याप्तमधुमदस्फुरणा ।
वागपि च वर्णयन्तीवद्गतिवल्गत्तुरङ्गमाहृदये ॥ ७ ॥

रञ्जयति भुवनमखिलं वशयति वाणीं श्रियं समुन्नयति ।
शमयति तमांसि पुंसां चरणस्मृतिरेव शैलकन्यायाः ॥ ८ ॥

मेघश्यामळचिकुरां मीनध्वजविजयदीपिकाकलिकाम् ।
सुमुखीं तुरङ्गसंस्थां सुलभां सौभाग्यदेवतामीडे ॥ ९ ॥

श्वः खलु न भवति यस्मात् तस्मादश्वश्चराचरो लोकः ।
तमधिवसन्तीमम्बां अश्वारूढां वदन्ति तत्वविदः ॥ १० ॥

रिक्तत्वं परिहर्तुं कर्तुं स्कन्धाधिरोहणं करिणः ।
वशयितुमपि वरमहिळां वाञ्छसि यदि हृदि भावय भवानीम् ॥

स्वाभाविकारुणिम्ना सौभाग्यस्फुरणशालिना वपुषा ।
मदनद्विषोपि हृदयं वशयति या वस्तु वासना हृदि सा ॥ १२ ॥

हारविकासिपयोधरभारानतमध्यचारुदेहलताम् ।
तरुणेन्दुमौळितरुणीमरुणामश्वाधिरोहिणीमीडे ॥ १३ ॥

पठतामनुवासरं जनानां परविद्याक्षरगर्भितां स्तुतिम् ।
प्रभवत्यखिलार्थसंपदः सा प्रकृतिर्विश्वमयी प्रसीदति ॥ १४ ॥

इति अश्वारूढास्तोत्रं समाप्तम् ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
एकत्रिंशः पटलः ॥



# अथ द्वात्रिंशः पटलः ॥

अथ सन्तान(प्रद)यागविधिः —

'अथ सन्तानसंसिद्धिसमाकुलितचेतसाम् ।' इत्यादिभिः 'संपूर्यमाणादेवमेव त्रिकाब्दादर्वाक् पुत्रो जायते दैवशक्त्या' इत्यन्तैर्ग्रन्थैरुक्तमर्थं ग्रन्थबाहुल्यभयात्केवलमर्थत एव वक्ष्ये ॥

देवर्षिपितृतिथिपूजादानादिरहितदोषवशादपुत्रताप्रसक्तौ सत्यां तत्परिहारार्थं वक्ष्यमाणेन विधिना, प्रतिदर्शं संवत्सरत्रयं देविकर्पत्तृकविषयं यागं ब्राह्मणभोजनवृद्धिक्षययुतं कुर्यात् । तत्प्रकारो लिख्यते ॥

अङ्गशुद्धिदन्तधावनस्नानधौताम्बरधारणनियताहारतादिना दीक्षाविधिना युक्तो गृहस्थः कृष्णचतुर्दश्यां रात्रौ पत्न्या सह शयनं कृत्वा, परेद्युः प्रातस्सन्ध्यावन्दनादिपौर्वाह्णिकं कर्म सर्वं कृत्वा, पुनः प्रागष्टाविंशपटले गायत्रीविधानान्ते प्रसङ्गादुक्तेन विधिना वा, अत्रैव वक्ष्यमाणेन ऋक्पञ्चकेन वा पञ्चगव्यं संयोजयेत् । ता ऋचो लिख्यन्ते —

हंसः शुचिषत् इति ऋक् १, प्रतद्विष्णुस्तवते इत्यृक् २, त्र्यम्बकं इत्यृक् ३, तत्सवितुर्वरेण्यं इत्यृक् ४, विष्णुर्योनिं कल्पयतु इत्यृक् ५, एवं पञ्चभिः ऋग्भिः पञ्चगव्यानि गोमूत्रगोमयोदकपयोदधिघृताख्यानि द्रव्याणि क्रमेण संयोज्य, तत्पञ्चगव्यं तु उदुम्बरादियाज्ञीयवृक्षकृतेन मन्थेन संकोचमन्त्रजपपुरस्सरं निर्मन्थ्यात् ॥ तन्मन्त्रस्तु मूलग्रन्थे उपरिष्टाद्वक्ष्यमाणोप्यत्रैव सौकर्यार्थं लिख्यते —

तारश्च स्वरादिश्च कवर्गादिपञ्चवर्गादिश्च वाय्वीशव्योमभूसंज्ञकाक्षराणि च संभूय एकादशवर्णस्संकोचाख्यो मन्त्रः । तदेव स्पष्टं लिख्यते —

ओं अं कं चं टं तं पं यं शं हं लों इति संकोचमन्त्रः । पुनस्तस्मिन् अमृतबीजं विलिख्य वं वं इत्यमृतबीजेन तत्स्पृष्ट्वा अष्टोत्तरशतं जप्त्वा, पुनस्तत् द्विधा विभज्य, वक्ष्यमाणभूतमन्त्रजपपुरस्सरं एकैकं दम्पती पिबेताम् ॥

भूतमन्त्रस्तु मूलग्रन्थे उपरि वक्ष्यमाणोऽपि अत्रैव सौकर्यार्थं लिख्यते —

पञ्चमपष्ठस्वराक्षरौ च प्रणवगणपतिबीजे च चतृतीय टतृतीय ततृतीय पतृतीय यतृतीयान्त्यपूर्वाक्षराणि सबिन्दुकानि पञ्चानां भूतानामादौ संयोज्य पृथिव्यात्मने नमः, अबात्मने नमः, इत्येवंप्रकारेण । एतदुक्तं भवति— उं ऊं ओं गं जं डं दं बं लं ळं पृथिव्यात्मने नमः । पुनरपि उं इत्यादि ळं इत्यन्तं अबात्मने नमः । इत्येवंप्रकारेण इतरभूतेष्वपि संयोजयेत् । एवं पञ्चगव्यं विभज्य दम्पती संप्राश्य, पुनर्होमकार्यमारभेत् । तत्प्रकारः कथ्यते—

प्रथममग्रतो मण्डले देवे वा वक्ष्यमाणक्रमेण शंकरनारायणं संपूज्य, तस्योत्तरभागे स्थण्डिले स्वचरणोक्तेन विधानेनाग्निं निधाय, तत्र चरुं पञ्च-कुडुवतण्डुलैर्योग्यपरिमाणैर्वा निष्पाद्य, कुडुवं नाम प्रस्थचतुर्थांशम् । तच्चरुं पात्रे दक्षिणोत्तरतो द्विधा विभज्य, दक्षिणं पैतृकं उत्तरं दैविकं चेति बुध्द्वा, ताभ्यां क्रमेण पितृवर्गमातृवर्गतत्पितृवर्गगुरुवर्गगुरुपितृवर्गाणां पैत्रेण हविषा, दैविकेन पुनर्हविषा देवानां च, वक्ष्यमाणानां वक्ष्यमाणक्रमेण जुहुयात् । तत्प्रकार एव कथ्यते —

तत्र प्रथमं पित्र्यंशाम्नेन उपस्तरणपूर्वकं पिण्डयुगळं समवद्य, स्रुचि उपस्तरणपूर्वकं निधाय, पुनस्तस्मिन्नभिघार्य हविषि चाभिघार्य दक्षिणहस्ते निधाय अधस्तान्निषण्णं स्वपितरं स्मृत्वा प्रणवेन जुहुयात् । पुनर्व्या-हृतिभिश्चतसृभिः आज्याहुतीः कुर्यात् । पुनरपि पूर्ववदेव पित्र्यंशाम्नेन पिण्डयुगळं पूर्ववदेव समवद्य, अधस्तात् निषण्णं स्वपितामहं स्मृत्वा प्रणवेनैव जुहुयात् । तत्रापि व्याहृतिभिराज्याहुतीः कुर्यात् । एवमेव प्रपितामहं च

स्मृत्वा हुत्वा आज्याहुतीश्च कृत्वा, (कुर्यात्)। पुनरेवं मातृवर्गतिसृणां च तत्पितृवर्गत्रयाणां च गुरुपरमगुरुपरमेष्ठिगुरुपरापरगुरुत्रयाणां च प्रणवेनैव पक्काहुतिपूर्वकं व्याहृतीभिराज्याहुतीः कुर्यात्। अथवा अमुकगोत्राय अमुकनाम्ने अस्मत्पित्रे स्वाहा इत्यादि जुहुयात्। पुनरुत्तरेण दैविकेन चरुणा पूर्ववदेव पिण्डयुगळं समवद्य षोडशस्वराक्षरैकैकपूर्वकवैष्णवाष्टाक्षरैकैकपूर्वककेशवादिषोडशनामभिश्चतुर्थ्यन्तैः स्वाहान्तैश्च प्रत्येकमष्टवारं हुनेत्। तत्प्रकारविशेष एव कथ्यते —

अं ओं केशवाय स्वाहा। आं नं नारायणाय स्वाहा। इं ओं माधवाय स्वाहा। इत्येवंप्रकारेण स्वराष्टाक्षरावशिष्टवर्णानादौ संयोज्य, गोविन्दाय स्वाहा। विष्णवे स्वाहा। मधुसूदनाय स्वाहा। त्रिविक्रमाय स्वाहा। वामनाय स्वाहा। श्रीधराय स्वाहा। हृषीकेशाय स्वाहा। पद्मनाभाय स्वाहा। दामोदराय स्वाहा। वासुदेवाय स्वाहा। संकर्षणाय स्वाहा। प्रद्युम्नाय स्वाहा। अनिरुद्धाय स्वाहा। इत्येतैः षोडशनामभिः उक्तप्रकारेण प्रत्येकमष्टाष्टवारं हुते सति अष्टाक्षरस्य द्विरावृत्तिर्भवति। पुनरष्टाक्षरस्य एकैकवर्णयोजितस्थाने अष्टाक्षरं समस्तं संयोज्य पूर्ववत् स्वराक्षरैकैकपूर्वकं केशवाद्येकैकोत्तरं स्वाहान्तं च पूर्ववदेव प्रत्येकमष्टाष्टवारं दैविकेनैव हविषा पक्काहुतीः कुर्यात्। तत्प्रकार एव लिख्यते —

अं ओं नमो नारायणाय स्वाहा। इत्येवंप्रकारेण। एवं कृते अष्टाक्षरस्य षोडशावृत्तिर्भवति। एवमष्टवारं पक्काहुतीः कृत्वा, तत्तत्पक्काहुत्यनन्तरं तेन तेनैव मन्त्रेणाज्याहुतीश्चतुर्गुणं कुर्यात्। पूर्वोक्ताष्टाक्षरवर्णैकैकयोजनापर्याये आज्याहुतीनामयमेव न्यायः। एवं कृते एकैकमन्त्रविषये द्वात्रिंशत्संख्याका आज्याहुतयो भवन्ति। अष्टाष्टसंख्याकाः किल पक्काहुतयः। पुनरपि दैविकेनैव चरुणा पूर्ववदेव पिण्डयुगळं समवद्य, षोडशस्वराक्षरैकैकपूर्वकं पञ्चाक्षरवर्णैकैकपूर्वकश्रीकण्ठादिभिः षोडशनामभिः प्रत्येकं पञ्चवारं पक्काहुतीः कुर्यात्। एवं

संयोजिते पञ्चाक्षरवर्णास्त्रिरावृत्त्या पञ्चदशसंख्याका भवन्ति। तत्र षोडषसंख्यायां पञ्चाक्षरं समस्तं षोडशकमूर्त्यादौ संयोजयेत्। एवं संयोजिते पञ्चाक्षरस्य चतुरावृत्तिर्भवेत्। तद्योजनाप्रकार एव लिख्यते—

अं नं श्रीकण्ठाय स्वाहा। आं मं अनन्ताय स्वाहा। इत्येवं क्रमेण, सूक्ष्माय स्वाहा। त्रिमूर्तये स्वाहा। अमरेश्वराय स्वाहा। अर्घीशाय स्वाहा। भारभूतये स्वाहा। अतिथये० स्थाणवे० हराय० झण्डीशाय० भौतिकाय० सद्योजाताय० अनुग्रहेश्वराय० अक्रूराय० महासेनाय स्वाहा। इत्येवं षोडशनामभिः स्वराक्षरपञ्चाक्षरैकाक्षरपूर्वकैः प्रत्येकं पञ्चपञ्चवारं पक्वाहुतीः कृत्वा, पुनस्तेन तेन मन्त्रेण पक्वाहुत्यनन्तरमनन्तरं चतुर्गुणमाज्याहुतीः कुर्यात्। तत्रैकैकमन्त्रविषये पक्वाहुतयः पञ्च किल। तच्चातुर्गुण्येनाज्याहुतयोपि एकैकमन्त्रविषये विंशतिसंख्याका भवन्ति। पुनरपि पञ्चाक्षरैकैकवर्णयोजितस्थाने पञ्चाक्षरं समस्तं संयोज्य षोडशस्वराक्षरैकैकपूर्वकं श्रीकण्ठाद्येकैकोत्तरं स्वाहान्तं च प्रत्येकं पञ्चपञ्चवारं पक्वाहुतीः कुर्यात्। तत्प्रकार एव लिख्यते —

अं नमश्शिवाय शिति (श्री) कण्ठाय स्वाहा। आं नमश्शिवाय अनन्ताय स्वाहा। इत्येवंप्रकारेण एवं पञ्चपञ्चवारं पक्वाहुतीः कृत्वा, तेनैव मन्त्रेण तत्तत्पक्वाहुत्यनन्तरमनन्तरं तत्तच्चतुर्गुणसंख्यमाहुतीः कुर्यात्। तथा कृते एकैकमन्त्रविषये पक्वाहुतयः पञ्च किल। तच्चातुर्गुण्येन आज्याहुतयो विंशतिसंख्याका भवन्ति। पुनः पात्रे अवशिष्टौ दैविकपैतृकत्वेन विभक्तौ चरुभागावुभावपि संमिश्र्य, पुनस्तत् द्विधा विभज्य तदेकैकमेकैकस्मिन् फलके वा पात्रे वा आवद्ध्य पुरुषरूपेण च स्त्रीरूपेण च कृत्वा तत्पुरुषात्मकं पञ्चाक्षरमन्त्रेणाष्टोत्तरशतं जप्त्वा, स्त्र्यात्मकं तु वैष्णवाष्टाक्षरमन्त्रेण अष्टोत्तरशतं जप्त्वा, पुनः तदुभयात्मकमपि सहैव स्पृष्ट्वा, विष्णुर्योनिं कल्पयतु इति ऋचा एकादशवारं जप्त्वा, पुनः पुरुषः पुरुषात्मकं समाहित उपयुञ्ज्यात्। स्त्री च स्त्र्यात्मकं समाहिता उपयुञ्ज्यात्॥

पुनराचम्य अग्निमुपरिष्टात्तन्त्रेण हुत्वा क्रियां समापयेत्। गुरुदक्षिणां च बहु दत्वा अनलमुद्वास्य एकं द्विजं भोजयेत्तस्मिन्दिने। प्रतिदर्शमेवं हुत्वा एकैकवृद्ध्या ब्राह्मणान् भोजयेच्च। एवं संवत्सरत्रये पूरिते दैवशक्त्या वक्ष्यमाणगुणयुक्तः पुत्रो जायते। तमेव गुणमाह —

पितृदेवताप्रसादात् मेधायुःकान्तिसंयुतो लक्ष्मीतेजोयुक्तो धर्मरुचिर्भवति सन्ततेः कर्ता॥

अथ शङ्करनारायणमन्त्रविधानं मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते–

नारद ऋषिः। अनुष्टुप् छन्दः। हरिहरो देवता। ह्रौं बीजम्। ह्रीं शक्तिः। ह्रां हृत्। ह्रीं शिरः। इत्याद्यङ्गानि॥

शूलं चक्रं पाञ्चजन्यं कपालं दधतं करैः।
स्वस्वभूगार्त (र्ध) नीलार्धदेहं हरिहरं भजे॥

ओं ह्रौं ह्रीं शङ्करनारायणाय नमः ओं ह्रौं ह्रीं॥ इति मन्त्रः।

प्रणवह्रौमित्यक्षरहृल्लेखाचतुर्थ्येकवचनान्तशङ्करनारायणशब्दो नमश्शब्दः पुनः प्रणवह्रौमित्यक्षरहृल्लेखावसानोयं हरिहरमन्त्रः। लक्षं जपेत्। आज्यसिक्तपायसेनायुतं हुनेत् पुरश्चरणार्थम्॥

अथ पूजा —

शैवपीठे समावाह्य अङ्गैः प्रथमावृतिः। लक्ष्म्यै॰ नारायण्यै॰ भूम्यै॰ भूधरायै॰ अम्बिकायै॰ त्र्यम्बकायै॰ आनन्दायै॰ गङ्गाधर्यै॰ ८ इति द्वितीयावृतिः। इन्द्रादिभिस्तृतीया। प्रकृतिपुरुषैक्यात्मकहरिहरोपासनं सर्वसंपत्करं परम्। अत्र हरिहरात्माख्यपरमात्माभेदानुसन्धानपूर्वको जपः संसृतिमोक्षकरः॥

अथ सन्तानयागप्रसङ्गात् बोधायनसूत्रोक्तः प्रजार्थिहोमश्चात्र योग्यतावशाल्लिख्यते —

प्रजार्थिहोमः पूर्वपक्षे पुण्यनक्षत्रे अमावास्यायां विषुवायने वा देवालये नदीतीरेऽश्वत्थछायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा, ब्राह्मणानन्नेन परितोष्य, पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, प्राच्यां दिशि ब्रह्माणं संस्थाप्य, पार्श्वयोर्धातारं विधातारं च दक्षिणतो धातारं उत्तरतो विधातारं च (आवाह्य) ततस्तानर्चयेत् ॥

पूर्वे पुत्रब्राह्मणमावाहयामि । दक्षिणतः प्रजापतिमावाहयामि । पश्चात्परमेष्ठिनमावाहयामि । उत्तरतो हिरण्यगर्भमावाहयामि । इत्यावाह्य, तत्र पुत्रब्राह्मणप्रजापतिशब्दौ विशेषणविशेष्यौ । सावित्र्या पाद्यं ददामि । सावित्र्या निवेदयेत् । एतैरेव नामधेयैः शुक्लमन्नं ब्रह्मणे, मुद्गान्नं धातुः, पीतान्नं विधातुः । ततस्सावित्र्या अप आचम्य, प्रणवेनाष्टशतं हुत्वा ब्राह्मणमुपतिष्ठते नमो वाचे नमो वाचस्पतय इति ॥

अथाग्निमुपतिष्ठते नमो ब्रह्मणे,

सप्तार्चिस्सप्तजिह्वः (च) सप्तधाऽग्निः प्रतिष्ठितः ।
सप्तैव विश्वाभूतानि नो ह्यग्निः प्रतितिष्ठति ॥

तत्वमसि ज्योतिरसि ॥ इति ॥

अथ स्त्रियमाहूय सावित्र्या पलाशपर्णैः अष्टसहस्रैः तापयित्वा पुरुषसूक्तेन जुहुयात् । प्रणवेन नमस्कुर्यात् । अध्वर्युं वस्त्रकुण्डलाभ्यामलङ्करोति । ततस्सा गर्भिणी भवतीत्याह भगवान् बोधायनः ॥

अथ सन्तानयागप्रसङ्गात् वन्ध्यात्वनिवृत्तिप्रदः कल्पोप्यत्र लिख्यते—

वन्ध्यात्वयं समुद्दिष्टं महापातकसंज्ञिकम् ।
काकं चाकाकमित्येव बन्धनं च तथोच्यते ॥

गर्भप्राथमिकादूर्ध्वं यावदायुष्मती भवेत् ।
तावत्तस्यास्तु गर्भे वै न काकं त्वभिधीयते ॥

प्रतिगर्भं विनाशं वा प्रतिपुत्रमथापि वा ।
यस्यां तु जायते काकमित्यभिज्ञाः प्रचक्षते ॥

कदाचिदपि यस्यां तु गर्भशङ्को न विद्यते ।
तद्वन्धनमिति प्रोक्तं पूर्वजन्मकृताघजम् ॥

पूर्वजन्मान्तरे विष्णोः पूजकानां महात्मनाम् ।
कार्पण्यभाषिणी या तु काकवन्ध्या प्रजायते ॥

या तु पूर्वभवे स्तन्यं पातुकामान् शिशून्प्रति ।
विघ्नमाचरती बन्धून् सा काकं प्रतिपद्यते ॥

निकृतिं जो (जु) षमाणा या स्वपतिं प्रति पूर्वके ।
जन्मान्तरे सा तु याति बन्धनं त्वघसंभवम् ॥

तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विचक्षणः ।
यथा कर्मविपाकोत्थदोषो नश्यत्यशेषतः ॥

यथाशक्त्यनुसारेण वित्तशाठ्यं परित्यजन् ।
दया (श्रद्धा) भक्त्यन्वितः कुर्याच्छान्तिं सर्वाघशान्तये ॥

यथाविधि यथाकल्पं मान्त्रिकेण भवेत् (कृतं) यदि ।
सद्यश्शान्तिमवाप्नोति सन्तानं च भविष्यति ॥

कुम्भे कर्कटके चैव कन्यामिथुनवर्जिते ।
वृश्चिके चापफाल्गुन्योराचार्यः शान्तिमाचरेत् ॥

शुक्रादिशुभवारेषु पुण्ययोगर्क्षशुक्कि(क्ल)के ।
मैत्रे परममैत्रे च क्षेमसंपत्स्वसाधके ॥

सङ्कल्पपूर्वकेणाथ समस्तद्रव्यसञ्चयैः ।
रक्षाबन्धनहोमादिशान्तिं कुर्यात् सह द्विजैः ॥

आदौ तु पञ्चगव्यानां प्राशनं पक्षमात्रकम् ।
पश्चादौषधसंयुक्तं गोघृतं प्राशयेत्सुधीः ॥

षण्मासं वा त्रिमासं वा मण्डलान्तमथापि वा ।
दम्पती मन्त्रपूर्वं तु शीघ्रसिद्धिप्रदाय वै ॥

शुचौ देशे त्वथाचार्यो दम्पतीभ्यां सह द्विजैः ।
लौकिकाग्निं प्रतिष्ठाप्य स्वगृह्योक्तविधानतः ॥

मुखान्तं जुहुयात्पश्चादाहुतीभिश्चतुर्दशैः ।
यमाय चित्रगुप्तायेत्यन्तैराज्येन होमयेत् ॥

पश्चादर्कसमिद्भिश्च गायत्र्याऽष्टसहस्रकम् ।
हुत्वाऽथ रुद्रगायत्र्या पायसेन सहस्रकम् ॥

प्रत्यृचं घृतप्लुक्तेन जुहुयात्तु सहस्रकम् ।
आज्येनातः परं मार्पैर्विष्णुगायत्रिया हुनेत् ॥

तिलैरष्टसहस्रं तु त्र्यम्बकेन हुनेत्ततः ।
सक्तुनाऽष्टसहस्रं वै तस्या नक्षत्रवाक्यतः ॥

आचार्यः पञ्चचूर्णेन अष्टोत्तरसहस्रकम् ।
स्वेष्टदैवतमन्त्रेण हुनेत्सन्तानवृद्धये ॥

सर्पपाशमताकेन संयुतं सार्द्रमेव च ।
शुण्ठी पिप्पलि मारीचं चूर्णं पञ्चेति संज्ञिकम् ॥

तिन्त्रिणीबीजमात्रेण चूर्णहोम इतीर्यते ।
जयादिपरिषेचान्तमुपस्थानं विधाय च ॥

ततोऽग्नेरुत्तरे भागे कुम्भस्थापनमाचरेत् ।
द्रोणप्रमाणं धान्यं तु तदर्धं तण्डुलं तथा ॥

तदर्धं तु तिलं तत्र उपर्युपरि निक्षिपेत् ।
तन्मध्येऽष्टदलं लिख्य पद्मं तारेण वेष्टयेत् ॥

तस्मिन् कुम्भं निधायाथ सर्वालङ्कारशोभितम् ।
तिरःपवित्रमादाय जलेनापूर्य मन्त्रतः ॥

द्वादशारत्निमात्रेण वस्त्रेणावेष्ट्य तत्र वै ।
नवरत्नानि निक्षिप्य नारिकेळफलादिभिः ॥

अलंकृत्य ततः कुम्भमावाह्य वरुणं ततः ।
वारुणेनैव मन्त्रेण उपचारांस्तु षोडश ॥

कृत्वा पश्चान्महायन्त्रं कुम्भस्यैशान्यदिक्तटे ।
स्थापयेद्रक्तवस्त्रे तु यथावन्निर्मितं कृधि ॥

उत्तमं राजतं स्वर्णं मध्यमं पाञ्चधातुकम् ।
अधमं सीसं ताम्रं चेत्याहुर्मन्त्रविदां वराः ॥

मध्यमानामिकातर्जमात्रया पट्टमाचरेत् ।
विशेषेण तु पत्न्या वा दक्षिणस्य करस्य हि ॥

अथाचरणमन्त्रस्य आचार्यो यन्त्रमालिखेत् ।
यन्त्रप्राणप्रतिष्ठां च कृत्वाऽऽवाह्यास्य दैवतम् ॥

पूजयित्वोपचारैस्तु षोडशैरिष्टदेवताम् ।
एतद्यन्त्रं प्रतिष्ठाप्य कुम्भस्यैशान्य आसने ॥

आभिमुख्येन चाचार्यो दम्पतीभ्यां सह द्विजैः ।
स्पृष्ट्वा कुम्भं जपेन्मन्त्रं पूर्वं होमार्थमुद्यतान् ॥

प्रत्येकमष्टसाहस्रं प्रतिमन्त्रं जपेद्बुधः ।
पश्चात् प्रतिसरं मन्त्रं श्रीरुद्रं चमकं पुनः ॥

जपित्वैकादशं वारं पञ्चशान्तिमतः परम् ।
राक्षोघ्नं पौरुषं सूक्तं श्रीसूक्तं घृतसूक्तकम् ॥

*नमो ब्रह्मेति मन्त्रेण त्रिरुत्थाप्य घटं पुनः ।
वरुणोद्वासनं कृत्वा प्रोक्ष्य चाब्लिङ्गमन्त्रतः ॥

सह द्विजैस्सहर्त्विग्भिरभिषिञ्चेत्समाहितः ।
अग्ने रक्षाण इति च रक्षाबन्धनमाचरेत् ॥

बध्वा रक्षामथाचार्यो रक्ष माचल माचल ।
इति मन्त्रं जपेत्स्पृष्ट्वा रक्षामिष्टार्थसिद्धये ॥

यजमानस्त्वथर्त्विग्भ्यो यथाशक्त्यनुसारतः ।
दद्याद्वै दक्षिणां भक्त्या वित्तशाठ्यं परित्यजन् ॥

आचार्याय ततो दद्यात् कुम्भवस्त्रादिदक्षिणाम् ।
ब्राह्मणान् भोजयेत्पश्चात् चतुर्दश समाहितः ॥

अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
विभवे सति विप्राणां भोजयित्वाथवार्चयेत् ॥

इत्थं कृते पुत्रवती भवेच्च चित्रापि (वन्ध्यापि) पुष्पत्रयमात्ततो वा ।
तस्माद्विधिज्ञैस्सहसैव कुर्यात्पुत्राभिलाषी तु पुमान्बुधश्चेत् ॥

अथ सन्तानप्रकरणप्रसङ्गात् रेणुकाकल्पोक्तप्रकारेणापि तत्प्रकारो लिख्यते—

भार्गव ऋषिः । पङ्क्तिः छन्दः । रेणुका देवता । क्रीं बीजम् । स्वाहा शक्तिः । क्रां हृत् । क्रीं शिरः । इत्याद्यङ्गानि । ध्यानम्—

---

*ओं नमो ब्रह्मणे चेति त्रिजलत्रोद्वास्य वै घटात् । देवतां वरुणं चाथ इति पाठः शोधनीयो भाति ।

वामे शूलकपालयुग्ममितरे खड्गं क्वणड्डिण्डिमं
विभ्राणां करपङ्कजैस्त्रिनयनां नागाष्टभूषोज्ज्वलाम् ।
नानाकोटियुगान्तसूर्यसदृशां नानाज्वलद्भूषणां
दक्षालम्बितवामसुद्रितपदां श्रीरेणुकामाश्रये ॥

क्लीं नमो भगवति रक्तपक्ष्मि रेणुकादेवि दह दह पच पच अखिलजनं मे वशं कुरु स्वाहा क्लीं । इति अष्टत्रिंशदर्णो मन्त्रः । अयुतं जपः । अरविन्दादिकामबाणप्रसूनैः दशांशं होमः ॥

अथ यन्त्रम्—

षट्त्रिंशत्कोष्ठके यन्त्रे रेणुकामन्त्रमुत्तमम् ।
लिखित्वा क्लींतु शूलाग्रे साध्यनामादिसंयुतम् ॥

घृते लिख्य इदं यन्त्रं जप्त्वा मन्त्रं सहस्रकम् ।
पिबेद्वन्ध्या सुपुत्रार्थी पुत्रिणी भवति ध्रुवम् ॥

वटाग्रं निम्बबीजं च स्तन्येन पयसा पिबेत् ।
गर्भं प्रसूयते वन्ध्या दैवकोपाच्च मुच्यते ॥

प्रयोगान्तरम् —

अङ्कोलमूलवल्कं तु चूर्णयित्वा गुडेन युक् ।
काकाण्डतुल्यमश्नीयात् पुत्रिणी सा भविष्यति ॥

अङ्कोलं वृक्षविशेषः । ஏறழிஞ்சில்

अश्वत्थमूलं संगृह्य वन्दाकां वा पयोयुताम् ।
पिबेत्तदुभयं वापि प्रशस्तं गर्भधारणे ॥

वन्दाकं புல்லூரி पुल्लूरीहिमणताहेतु ।

पिष्ट्वा शिरीषपुष्पाग्रं पयोघृतसमन्वितम् ।
ऋतुस्नाता पिबेद्वन्ध्या लभते गर्भमुत्तमम् ॥

शिरीपस्य पुष्पाग्रमिति शिरीपस्य पुष्पं च तदग्रं चेत्यर्थः । शिरीपपुष्पं வாகைப்பூ.

सहदेवीश्रियोर्मूलं पिष्ट्वा चाग्रसमन्वितम् ।
पिबेत्क्षीरेण नारीणां गर्भलाभाय शस्यते ॥

सहदेवी–ஸ்ரீதேவியர்-செங்கழுநீர் श्रीति–ஸ்ரீதாளி

सप्तपर्णत्वचां पिष्ट्वा दापयेत् क्रिमिनाशने ।
संपिष्ट्वा वज्रवल्लीं च नवनीतेन दापयेत् ॥

क्रिमिः पतति देवेशि द्विदिनादायतेक्षणे ।

क्रिमिरिति–वन्ध्यात्वकारकः क्रिमिरित्यर्थः । वज्रवल्ली–मङ्गरोळी–பிரண்டை सर्वत्र मूलमन्त्रेण जपश्च ॥

प्रयोगान्तरम् —

अग्निं ज्वाल्यार्कसमिधा आसुरीमर्कदुग्धकम् ।
तन्नाम्ना जुहुयाच्छत्रुः स्फोटकान्म्रियते ध्रुवम् ॥

तन्नाम्नेति, साध्यनामयुतेन मूलमन्त्रेणेत्यर्थः । आसुरी–मोहर्या கடுகு.

आसुरीं क्षीरसंयुक्तां जुहुयाच निवृत्तये ।

प्रयोगान्तरम्—

अर्कानावासुरीं चैव कटुत्रयसमन्वितम् ।
अर्कक्षीरं च लवणं तैलाक्तं जुहुयाद्व्रती ॥

सप्ताहान्म्रियते शत्रुः नात्र कार्या विचारणा ।

कटुत्रयं-शुण्ठी, मिरे, पिप्पली சுக்கு, மிளகு, திப்பிலி.

आसुरीमश्वरोमाणि एकीकृत्य हुनेद्व्रती ।

अष्टोत्तरशतावृत्त्या सोपस्मारेण गृह्यते ॥

घृतेन जुहुयाद्देवि स्वस्थो भवति नान्यथा ।
आसुरीं लवणं चैव अष्टोत्तरशतं हुनेत् ॥

ज्वरेण पीड्यते शत्रुः स्वस्थो निम्बवृत्तैर्भवेत् ।

आसुरी-मोहर्या । निम्बं வேம்பு.

आसुरीनिम्बपत्राणि अष्टोत्तरशतं हुनेत् ।
स्फोटकैर्गृह्यते शत्रुः स्वस्थो होमात् घृतस्य तु ॥

आसुरीव्याघ्ररोमाणि एकीकृत्य हुनेद्व्रती ।
शिरोभ्रमणमेव स्यात् शत्रोः क्षीरेण शाम्यति ॥

आसुरीखररोमाणि एकीकृत्य हुनेद्व्रती ।
अपस्मारो भवेच्छत्रोः स्वस्थः क्षीरेण सुन्दरि ॥

मार्जारस्य तु रोमाणि आसुरीं यस्तु हूयते ।
अष्टोत्तरशताच्छत्रुः भवेत्पंगुर्महेश्वरि ॥

औदुंबरस्य क्षीरेण स्वस्थो भवति नान्यथा ।

निग्रहवश्यप्रधानोऽयं मन्त्रः । प्रयोगः सन्तानप्रधानश्च ।

अथ गुरुशिष्ययोर्लक्षणं लिख्यते—

अतो हिताय जगतां प्रथितं शितचेतसाम् ।
अद्य संक्षिप्य वक्ष्यामि लक्षणं गुरुशिष्ययोः ॥

स्वच्छस्वच्छन्दचरितः स्वच्छधीस्त्यक्तहृच्छयः ।
देशकालादिविद्देशे देशे देशिक उच्यते ॥

अग्रगण्यस्समग्रज्ञः निग्रहानुग्रहक्षमः ।

पड्वर्गविजयव्यग्रोऽनुग्रोऽपि गतविग्रहः ॥

शुक्लः शुक्लांशुकोऽक्लिष्टकर्माऽविक्लवमानसः ।
वेदवेदाङ्गविद्वादी वेदिता विदितागमः ॥

इष्टदोऽनिष्टसंहर्ता दृष्टादृष्टसुखावहः ।
रतोऽविरतमर्चासु परं पुरसुरद्विषोः ॥

दान्तोऽतान्तश्शान्तमना नितान्तं कान्तविग्रहः ।
स्वदुःखकारणेनापि परस्य तु सुखोद्यतः ॥

ऊहापोहविदव्यग्रोऽव्याकुलो मोहवर्जितः ।
आज्ञानुकम्पी विज्ञातज्ञानो ज्ञातपरेङ्गितः ॥

निरंशस्स्वांशवित्सर्वसंशयच्छिदसंशयः ।
नयविद्विनयोपेतो विनीतोऽनीतिरात्मवान् ।
व्याधिरप्रापितव्याधिस्समाधिविधिसंयुतः ॥

श्रुतिशूरोऽतिधीरश्च वीरो वाक्यविशारदः ।
वर्गोपेतसमारम्भो गम्भीरो डम्भवर्जितः ॥

आदर्श इव विद्यानां न तु दर्शनदूषकः ।
असौ मृग्यश्च दृश्यश्च सेव्यश्चाभीष्टमिच्छता ॥

शिष्यस्तदावर्जनकृत् देहेन द्रविणेन च ।
तस्य पादारविन्दोत्थरजःपटलभूषणः ॥

स्नानमप्राप्य न प्राप्यं (प्राप्यः) प्रायो बुद्धिमतेच्छया ।
नित्यशः कायवाक्चित्तैः सिद्ध्येकाब्दाधिकावधि ॥

परिचर्यापरश्शिष्यः स्यात्सुसंयतमानसः ।
तं तथाविधमालक्ष्य सदाऽवितथवादिनम् ॥

मातृतः पितृतश्शुद्धं बुद्धिमन्तमलोलुपम् ।
अस्तेयवृत्तिमास्तिक्ययुक्तं भुक्तिकृतोद्यमम् ॥

अकल्मषं मृषाहीनमहीनद्रव्यमानसम् ।
ब्रह्मचर्यापरं नित्यं परिचर्यापरं गुरोः ॥

अल्पाशनिद्रं पूजयामनल्पकृतकल्पनम् ।
अधीतवेदं स्वाधीनमनाधिं व्याधिवर्जितम् ॥

तरुणं करुणावासं परितोषपरं गुरोः ।
सुवेषमेषणातीतममलं विमलाशयम् ॥

सुप्रसन्नं प्रसन्नाङ्गं सदा सन्निहितं गुरोः ।
परोपकारनिरतं विरतं परदूषणे ॥

मातृवद्गुरुपत्नीं च भ्रातृवत् तत्सुतानपि ।
स्मरन्तमस्मराबाधं स्मितोपेतमविस्मितम् ॥

परिग्रहेत्परीक्ष्यैव शिष्यमेवंविधं गुरुः ।
अलसं मलसंक्लिन्नं क्लिष्टं क्लिष्टान्ववायजम् ॥

सभान्वित*मङ्गहीनं चण्डं पण्डितमानिनम् ।
रागिणं रोगिणं भोगलालसं बालसम्मतम् ॥

रौद्रं दरिद्रं निद्राळुं माद्यन्तं क्षुद्रचेष्टितम् ।
नृशंसमन्धं बधिरं पङ्गुं व्यङ्गममङ्गळम् ॥

अतिदीर्घमतिह्रस्वमतिस्थूलं कृशात्मकम् ।
आदित्सुं कुत्सितं वत्सं बीभत्सुं मत्सरात्मकम् ॥

परदारपरं भीरुं दारुणं वैरिणं सताम् ।
लुब्धं स्वलब्धवैदग्ध्यं स्तब्धं लुब्धकबान्धवम् ॥

---

* अगम्भीरं इति ख, ग, घ मातृकापाठः ।

सुखिनं मुखरं दुर्मं दुर्मुखं दुःखमानसम् ।
प्रत्यग्रमुग्रं व्यग्रेहमग्रगण्यं दुरात्मनाम् ॥

भ्रष्टहृतं तमस्स्पृष्टशिष्टमिष्टापहं नृणाम् ।
स्वार्थकृत्यप्रसिद्ध्यर्थं निरर्थारम्भिणं शठम् ॥

ईदृग्विधं गुरुशिष्यं न गृह्णीयात् कदाचन ।
यदि गृह्णाति मोहेन प्रायो गुरुमपि स्पृशेत् ॥

मन्त्रिदोषो यथा राज्ञि पत्यौ जायाकृतं यथा ।
तथा शिष्यकृतो दोषः गुरुमेति न संशयः ॥

स्नेहाद्वा लोभतो वापि योऽनुगृह्णात्यदीक्षया ।
तस्मिन्गुरौ सशिष्ये तु देवताशाप आविशेत् ॥

मधुद्विषि महादेवे मातापित्रोः महीभृति ।
भक्तिरेषां पदाम्भोजे मा(का)र्या निजगुरोस्सदा ॥

छायाज्ञापादुकोपानद्दण्डांश्च शयनासने ।
यानं मनोगतं चान्यदन्तेवासी न लङ्घयेत् ॥

व्याख्याविवादस्वातन्त्र्यकामिताकाम्यजृम्भिताः (तान्) ।
निद्राकुतर्कक्रोधांश्च त्यजेद्गुरुगृहे सदा ॥

सङ्ग्रामधर्मविण्मूत्रसर्गनिष्ठीवनादिकम् ।
परित्यजेत्परिज्ञातां वर्मीं च गुरुमन्दिरे ॥

ग्राहोक्तिमनृतं निन्दां ऋणं च वसुविक्रयम् ।
परित्याज्यं गुरौ तस्य सपत्नैश्च समागमः ॥

इष्टं वाऽनिष्टमादिष्टं गुरुणा यत्तु गुर्वपि ।
त्वरया परया कुर्यात् धिया सम्यगजिह्मया ॥

कर्मणा मनसा वाचा सदा भक्तियुजा गुरुम् ।
निर्व्याजं पूजयेच्छिष्यो निजकार्यप्रसिद्धये ॥

लोकोद्वेगकरी या च या च कर्मनिकृन्तनी ।
स्थित्युच्छेदकरी या च तां गिरं नैव भाषयेत् ॥

रम्यमप्युज्ज्वलमपि मनसोऽपि समीप्सितम् ।
लोकविद्वेषणं वेषं न गृह्णीयात्कदाचन ॥

इत्याचारपरः सम्यक् आचार्यं यस्समर्चयेत् ।
कृतकृत्यः स वै शिष्यः परत्रेह च नन्दति ॥

इति प्रपञ्चसारसारसंग्रहे गीर्वाणेन्द्रविरचिते
द्वात्रिंशः पटलः ॥

इति प्रपञ्चसारसारसंग्रहः समाप्तः ॥



## ॥ अनुबन्धः ॥

अथ प्रपञ्चसारसारसंग्रहोक्तमन्त्रप्रसङ्गात् अन्येपि केचिन्मन्त्रा लिख्यन्ते–

गृत्समद ऋषिः। त्रिष्टुप् छन्दः। रुद्रो देवता। मात्वारुद्रचुकुधामानमोभिः इति ऋक् ज्वरशान्तिकरी ॥

मेधातिथि मेध्यातिथी ऋषी। बृहती छन्दः। मघवान् देवता। यद्दतेचिदभिश्रिषः पुरा इत्यृक् समाधान (सन्धि) करी ॥

वसिष्ठ ऋषिः। निचृदनुष्टुप् छन्दः। विश्वेदेवा देवता। हस्ताभ्यां दशशाखाभ्याम्। इति ऋक् जिह्वादोपशान्तिकरी ॥

विश्वामित्र ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता। इळामग्ने पुरुदंसं सनिंगो। इति ऋक् सुपुत्रत्वार्थम् ॥

* परुच्छेप ऋषिः। गायत्री छन्दः। इन्द्रो देवता। पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्रसंमृण। इति ऋक् रक्षाकरी ॥

पवित्र ऋषिः। वसिष्ठो वा उभावपि वा। गायत्री छन्दः। पवमानो देवता। यदन्ति यच्च दूरके। इति ऋक् उपद्रवशान्तिकरी ॥

यक्ष्मनाशन ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता। यदि क्षितायुर्यदिवापरेतो यदि इति ऋक् आयुष्करी ॥

भरद्वाज ऋषिः। गायत्री छन्दः। पूषा देवता। परिपूषा परस्तात् हस्तं दधातु। इति ऋक् स्वहस्तद्वयं परितो बद्ध्वा जपेत्। तस्माचोरमपि तथा बद्ध्वा नष्टद्रव्यसिद्धिः ॥

मन्यु ऋषिः। जगती छन्दः। मन्युवरुणौ देवते। संसृष्टं धनमुभयं समाकृतम्। इति ऋक् शत्रुपलायनार्थम्। युद्धादिषु विशेषतस्समीचीनेयम्।

* परुच्छेप इति ख पाठः।

नेम ऋषिः । त्रिष्टुप् छन्दः । वाग्देवता । यद्वाग्वदन्त्यविचेतनानि । इति ऋक् वागीश्वरीप्रसादार्थम् ॥

नेम ऋषिः । त्रिष्टुप् छन्दः । वाग्देवी देवता । देवीं वाचमजनयन्त देवाः इति ऋक् वाक्सिद्ध्यर्थम् ॥

गृत्समदऋषिः । अनुष्टुप्छन्दः । सरस्वती देवता ॥ अम्बितमे नन्दितमे देवितमे सरस्वती ॥ इति ऋक् विद्यासिद्धिद्वारा प्रसिध्यर्थम् ॥

गौरीवीति ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । वयस्सुपर्णा उपसेदुरिन्द्रम् इति ऋक् दक्षिणनयनस्थरोगनिवृत्त्यर्थम् ॥

नारायण ऋषिः । अनुष्टुप् छन्दः । पुरुषो देवता । चन्द्रमा मनसो जातः । इति ऋक् वामनयनस्थरोगनिवृत्त्यर्थम् ॥

*मल ऋषिः । गायत्री छन्दः । वायुर्देवता । आवात वाहि भेषजम् । इति ऋक् वातरोगनिवृत्त्यर्थम् ॥

कण्व ऋषिः । अनुष्टुप् छन्दः । शम्भुर्देवता ।

ध्यानम् —

चन्द्रार्धमौळिं कालारिं व्याळयज्ञोपवीतिनम् ।
ज्वलत्पावकसंकाशं ध्यायेद्देवं त्रिलोचनम् ॥

अध्यवोचदधिवक्ता । इति ऋक् विषज्वरग्रहशूलाद्यखिलपीडां नाशयेत् ।

विश्वामित्र ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । किं ते कृण्वन्ति कीकटेषु गावो । इति ऋक् (चं) धनार्थी दातुर्निकटे स्थित्वा जपेत् । स सर्वस्वमपि ददाति ॥

---

* उल ऋषिः इति ख ग मातृकापाठः ।

भारद्वाज ऋषिः । गायत्री छन्दः । रात्रिर्देवता । रात्रीव्यख्यदायती पुरुत्रा देव्या । इत्यादिसूक्तं रात्रौ जपेत् । ज्वरादिशान्तिकरम् ॥

कुबेर ऋषिः । अनुष्टुप् छन्दः । कुबेररुद्रो देवता ॥

ध्यानम् —

अश्वारूढं कुन्तपाणिं कुबेरं चित्रिणीप्रियम् ।
*धनदं (दं) स्वर्णवर्णं तं वन्दे गन्धर्वनायकम् ॥

कुबेरं ते मुखं रौद्रं नन्दिमानन्दिमावह ।
ज्वरं मृत्युभयं घोरं ज्वरं नाशय मे ज्वर ॥

इति मन्त्रः । अनेन ज्वरादिनिवृत्तिः ॥

बार्हस्पत्यो भरद्वाज ऋषिः । देवीगायत्री छन्दः । पूषा देवता । अदित्सन्तंचिदाघृणे । पणादायार्थे ॥

गौतम ऋषिः । गायत्री छन्दः । सूर्यो देवता । अस्माकमुत्तमं कृधि इति ऋक् अधस्सपत्ना मे इत्यर्धर्चं मध्ये संयोज्यात्मकीर्त्यर्थं च शत्रुपराजयार्थं च वादिप्रतिवादिनोर्विवादे प्रतिवादिनः पराजयत्वेन वादिनो जयार्थं च युद्धादिषु जयार्थं च जपेत् ॥

विहव्य ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । अग्ने मन्युं प्रतिनुदन्परेषाम् । इति ऋचं शत्रोः पराजयार्थं च युद्धादिजयार्थं च जपेत् ॥

मारुतमसि मरुतामोजोपां धाराम् । इत्यनुवाकचतुष्टयं वृष्ट्यर्थं जपेत् ॥

समुद्रं गच्छस्वेत्यनुवाकं वृष्टिनिवारणार्थम् ॥

विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा हिंसीः वह्निरसि हव्यवाहनः रौद्रेणानीकेन इत्यादि, श्वात्रोसि प्रचेताः रौद्रेण

* धनेशं इति ख पाठः

इत्यादि, तुथोसि विश्ववेदाः रौद्रेण इत्यादि, उशिगसि कविः, अङ्घारिरसि बम्भारिः, अवस्युरसि दुवस्वान्, शुन्धूरसि मार्जालीयः, संराडसि कृशानुः, परिषद्योसि पवमानः, प्रतक्वासि नभस्स्वान् इत्येवं क्रमेण वाक्यानि छित्वा प्रतिवाक्यं रौद्रेणेत्यादि संयोज्य जपेत्। अतीव रक्षाकरम् ॥

गर्ग ऋषिः। त्रिष्टुप् छन्दः। पूर्वार्धस्य रथदुन्दुभिः उत्तरार्धस्यइन्द्रो देवता। आमूरजप्रत्यावर्तयेमाः। इत्यृचं युद्धादिषु जयार्थं च जपेत् ॥

ध्रुव ऋषिः। अनुष्टुप् छन्दः। राज्ञी देवता। आत्वा हारिषमन्तरेधि ध्रुवस्तिष्ठाऽविचाचलिः। इत्यृचं राज्यप्राप्त्यर्थंच राज्ञस्तु इतरजनवश्यार्थं च जपेत् ॥

भृगु ऋषिः। अनुष्टुप् छन्दः। आपो देवता। आनिवर्तन वर्तय निनिवर्तनवर्तय। इत्यृचं देशान्तरादिषु गतान् ततो निवर्तयित्वा आनेतुं तद्दिङ्मुखो भूत्वा जपेत् ॥

प्रणव व्याहृति प्रासाद मृत्युञ्जय त्र्यम्बक मृत्युञ्जय प्रासाद व्याहृति प्रणव क्रमेण मृतसंजीवनीमन्त्रः ॥

ह्रीमादि, ध्रुवासुत्वा हुनेन्मन्त्रं जपेन्मन्त्रयुतं पुनः। शृङ्खलादि- बन्धनान्मुच्यते सद्यो नारीवापि नरोपि वा ॥

अस्य ध्यानम्—

उत्तप्तहेमरुचिरे त्रिपुरे पुनीहि
चेतश्चिरन्तनमघौघवनं लुनीहि।
कारागृहे निगळबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झटिति मे निगळा गळन्ति ॥

एवं ध्यात्वा *ध्रुवासुत्वा सुक्षितिषु इत्यादृचा द्रव्यानुक्ते घृतमिति न्यायात् घृतेन हुत्वा राजमन्दिरादिषु निगळबन्धनान्निवृत्तिर्भवेत् ॥

*ओं ह्रीं दुं इति ख मातृकायां नूलतया योजितः पाठ'।

यो देवानां प्रथमं पुरस्तात् इति ऋक्। अनया ऋचा शुभा मतिर्जायते ॥

अगस्त्य ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । अग्ने नय सुपथा राये अस्मान् । इति ऋक् । सन्मार्गगत्यर्थम् ॥

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । बृहस्पतिर्देवता । बृहस्पते अतियदर्यो अर्हात् । इति ऋचं निगळबन्धनात् मोचनार्थं जपेत् ॥

गर्भोपनिषदं सन्तानार्थं जपेत् ।

इषेत्वोर्जेत्वा वायवस्थो । इत्यनुवाकं गोरक्षार्थं जपेत् ॥

इन्द्रस्य क्रोडोदित्यै पाजस्यं दिशां । इत्यनुवाकं उदरस्थ गुरुभक्तादि-जीर्णार्थं जपेत् ॥

ऐन्द्रं पञ्चशरा इति सूक्तं वृष्टयर्थं जपेत् ।

वामदेवाय नमो ज्येष्ठायेति (ऋचं) पिशाचनिवृत्त्यर्थं जपेत् ॥

दंष्ट्राभ्यां मलिम्लूं जंभैस्तस्करां उत । इत्यृचं चोरोपद्रवनाशनार्थं जपेत् ॥

नमो अस्तु सर्वेभ्यो ये के च पृथिवीमनु । इति सूक्तं सर्पाद्रक्षणार्थं जपेत् ॥

लाङ्गलं पवीरं वसुशेवं । इत्यृचं कृषिफलनार्थं जपेत् ॥

संपत्नीपत्न्याहं गच्छेसमात्मा । इत्यर्धर्चं पत्नीवश्यार्थं जपेत् ॥

गृत्समद ऋषिः । जगती छन्दः । ब्रह्मणस्पतिर्देवता । गणानां त्वा गणपतिं । इत्यृचं गजलाभार्थं जपेत् ॥

अथ महामृत्युञ्जयजपहोमं व्याख्यास्यामः । कृत्याद्रोहे आभिचारे दीर्घरोगे ग्रहपीडायां मृत्युप्राप्तौ महाव्याधौ महापदि चन्द्रग्रहणदोषे सूर्य-ग्रहणदोषे जन्मनक्षत्रे विषनाड्यां कुहूं व्रजेद्वाऽन्येषु महाभयेषु वा तेषां

परिहारार्थं मासि मासि जन्मनक्षत्रे प्राप्ते काले वा संवत्सरे संवत्सरे वा आचार्येण वा स्वयं वा आयुष्कामः (मेन) कर्तव्यः ॥

स्नात्वा पुण्याहं वाचयित्वा, प्राणानायम्य, नारायणशर्मण आयुष्कामार्थं महामृत्युञ्जयहोमं करिष्ये इति संकल्प्य अग्नेरुपसमाधानादि पात्रप्रयोगकाले दूर्वात्रिकं षट्त्रिंशदधिकशतत्रयं सह सादयेत्। गळूचीखण्डानि चतुरंगुल-प्रमाणानि ब्राह्मणदक्षिणतो दर्भेषु निधाय, व्रीहितण्डुलान्वा निर्वपति, मृत्यवे त्वा जुष्टं निर्वपामीति। तूष्णीमवहननं कृत्वा, प्रक्षाळ्योत्पूयाज्यं संस्कृत्य, चरुणा सह पर्यग्निकरणं कृत्वा, स्रुक्स्रुवमार्जनं कृत्वा, चरुमभिघार्य, उदगुद्वास्य प्रतिष्ठितमभिघार्य, परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वात् जुहोति ॥

दर्व्यामुपस्तीर्य मध्यात् द्विरवदाय त्रिः पश्चार्धवर्तिनोऽभिघार्य, अपैतु मृत्युरमृतं + शचीपतिः। इति पुरोनुवाक्यामनूच्य, परं मृत्यो अनु परेहि + मोतवीरान्। इति याज्यया जुहोति। पूर्ववदुपस्तीर्य, हरिं हरन्तमनु+विबधी-र्विक्रमस्व। इति पुरोनुवाक्यामनूच्य, मा छिदो मृत्यो मावधीः + विधेम। इति याज्यया जुहोति। आज्येन महाव्याहृतिभिश्च हुत्वा भूरग्नये इत्यादि पञ्चभिः पञ्चाहुतीर्हुत्वा, अथ दूर्वात्रिकं गळूचीखण्डानि पयसाऽक्त्वा जुहोति षट्त्रिंशदधिकशतत्रयम् ॥

प्रत्येकं अपैतु मृत्युरमृतं न आगन् + पतिः स्वाहा ॥ १ ॥ परं मृत्यो अनुपरेहि + वीरान् स्वाहा ॥ २ ॥ वातं प्राणं + जरामशीमहि स्वाहा ॥ ३ ॥ अमुत्र भूयादथ यद्यम + शचीभिः स्वाहा ॥ ४ ॥ शल्कैरग्नि + म्यहं स्वाहा ॥ ५ ॥ हरिं हरन्तं + विक्रमस्व स्वाहा ॥ ६ ॥ माछिदो मृत्यो मा + विधेम स्वाहा ॥ ७ ॥ मा नो महान्तं + रीरिष स्वाहा ॥ ८ ॥ मानस्तोके + विधेम ते स्वाहा ॥ ९ ॥ प्रजापते न त्व + रयीणां स्वाहा ॥ १० ॥ यत इन्द्र भयामहे + जहि स्वाहा ॥ ११ ॥ स्वस्तिदा विशस्पतिः + अभयंकरः स्वाहा ॥ १२ ॥ त्र्यम्बकं यजामहे + मामृतात् स्वाहा ॥ १३ ॥

अपमृत्युं + संहस्रिणं स्वाहा ॥ १४ ॥ ये ते सहस्रं + यजामहे स्वाहा ॥ १५ ॥ जातवेदसे + दुरितात्यग्निः स्वाहा ॥ १६ ॥ भूर्भुवस्स्वः + पुष्टिं ददभ्या-वद्वृत्स्वः स्वाहा ॥ १७ ॥ मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा ॥ १८ ॥ मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा ॥ १९ ॥ मृत्युर्नश्यत्वायुर्वर्धतां सुवः स्वाहा ॥ २० ॥ मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवस्सुवः स्वाहा ॥ २१ ॥

एतैरेकविंशतिमन्त्रैः षोडशपर्यायं प्रतिमन्त्रं हुनेत् । षट्त्रिंशदधिकशतत्रयाहुतिर्भवति । अथाज्येन अष्टपर्यायमेकविंशतिमन्त्रैः प्रतिमन्त्रं जुहुयात् । अष्टाधिकषष्टिशताहुतिर्भवति । पुनरन्नेन षोडशपर्यायं एकविंशतिभिर्मन्त्रैः प्रतिमन्त्रं जुहुयात् । षट्त्रिंशदधिकशतत्रयाहुतिर्भवति । पुनराज्येन अष्टपर्याय-मेकविंशतिभिर्मन्त्रैः प्रत्यृचं हुनेत् । अष्टाधिकषष्टिशताहुतिर्भवति । पुनराज्येन मृत्यवे स्वाहा इत्यष्टवारं हुनेत् । व्याहृतीभिर्हुत्वा ततः स्विष्टकृतमवदाय हव्यवाहमभिमातिषाह + हुवेम स्वाहा इति स्विष्टकृद्धोमं जुहोति । अनन्तरं परिध्यञ्जनं कृत्वा जयादिपरिषेचनान्तं कृत्वाग्रेणाग्निं दूर्वास्तम्भेषु हुतशेषं निदधाति । सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । तस्मै रुद्राय नमो अस्तु । इति द्वाभ्यां मन्त्राभ्यां निवेदयेत् । आयुर्दाअग्ने + रक्षतादिमं स्वाहा इति अग्नौ समिधमाधाय जातवेदा यदि वा पावकोसि + वद्गतस्व ॥ इत्युपस्थाय हुतशेषे हविषि आज्यशेषं निनयेत् । अग्निरायुष्मान् इति पञ्चभिः पुन-रेकविंशतिऋग्भिः चतुर्वारमभिमन्त्र्य आयुरसि वि + गेषं इति सर्वं चरुशेषं प्राश्य आचम्य जठरमभिमृशति यत इन्द्र + स्वस्तिदा विश + इत्येताभ्याम् । गुरवे वरं दत्वा, दशदानं कृत्वा, अवेक्षा(अवेक्षिता)ज्यं दत्वा, ऋत्विग्भ्यो दक्षिणां दत्वा, ब्राह्मणान् भोजयेदपूपैर्घृतपायसैः । एवं कृतवानायुष्मान् भवतीति ॥

अयुतहोमात् दीर्घायुर्भवति । लक्षहोमात्सहस्रायुर्भवति सहस्रायुर्भवति ॥

अथ यक्षिणीमन्त्रा लिख्यन्ते —

सर्वासां यक्षिणीनां तु ध्यानं कुर्यात्समाहितः ।
भगिनीमातृपुत्रीस्त्रीरूपतुल्यं यथेप्सितम् ॥

ओं ह्रीं रतिप्रिये स्वाहा । इत्यष्टार्णो मन्त्रः । ऋष्यादयः प्रसिद्धाः । अस्य प्रयोगः —

शङ्खालिप्तपटे देवीं गौरवर्णां धृतोत्पलाम् ।
सर्वालङ्कारिणीं दिव्यां समालिख्यार्चयेत्ततः ।

जातीपुष्पैस्सोपचारैः सहस्रैकं ततो जपेत् ।
त्रिसन्ध्यं सप्तरात्रं तु ततो रात्रौ शुचिर्जपेत् ॥

अर्धरात्रगते देवी समागत्य प्रयच्छति ।
पञ्चविंशतिदीनारान् प्रत्यहं तोषिता सती ॥

अथ कम्बलकामन्त्रः —

ओं चं वः कम्बळके गृह्ण पिण्डं पिशाचिनी(नि) स्वाहा । अस्य प्रयोगः —

एकविंशद्दिनं यावत् उदयास्तमयं जपेत् ।
नित्यं सायं स्वमाहारपिण्डं हर्म्योपरि क्षिपेत् ॥

त्रिसप्ताहेन सा तुष्टा शय्यां गत्वा पिशाचिनी ।
पञ्चविंशतिदीनारान् ददाति प्रतिवासरम् ॥

कर्णे कथयति क्षिप्रं यद्यत्पृच्छत्यसौ क्रमात् ।

अथ चन्द्रासुमतिमन्त्रः —

ओं गुळु गुळु चन्द्रासुमति सुरप्रव्रजति हुळु हुळु चन्द्रे चन्द्रगिरे स्वाहा । अस्य प्रयोगः —

गुहाचरा(ला)न्तरेकान्ते लक्षमेकं मनुं जपेत् ।
पुष्पं धूपं चरुं पूजां नित्यं कुर्यात्प्रयत्नतः ॥

पश्चामृतैर्दशांशेन हुत(ते) देवी प्रसीदति ।
दीनाराणां सहस्रैकं प्रत्यहं तोषिता सती ॥

(ददातीति वाक्यशेषः ॥)

अथ सुरसुन्दरीमन्त्रः —

ओं आगच्छागच्छ सुरसुन्दरी(रि) स्वाहा ॥

एकलिङ्गे महादेवीं त्रिसन्ध्यं पूजयेत्सदा ।
धूपं दत्वा जपेन्मन्त्री त्रिसन्ध्यं त्रिसहस्रकम् ॥

मासमेकं ततो याति यक्षिणी सुरसुन्दरी ।
दत्वाऽर्घ्यं प्रणमेन्मन्त्री स्मृतं सा तु प्रयच्छति ॥

देवि दारिद्र्यदग्धोस्मि तन्मे नाशकरी भव ।
ततो ददाति सा तुष्टा विनाऽऽयुश्चिरजीवितम् ॥

अथ अनुरागिणीमन्त्रः —

ओं ह्रीं अनुसारिणी (णि) मैथुनप्रिये ।

अस्य प्रयोगः —

कुंकुमेन समालिख्य भूमिदेशे सलक्षणम् ।
प्रतिपत्तिथिमारभ्य पूजां कृत्वा जपेत्ततः ॥

त्रिसन्ध्यं त्रिसहस्रं तु मासान्ते पूजयेन्निशि ।
संजप (जपेत्) न्नर्धरात्रे तु समागत्य प्रयच्छति ॥

दीनाराणां सहस्रैकं प्रत्यहं परितोषिता ।

दीनारं स्वर्णम् ॥

अथ मनोहरामन्त्रः —

ओं ह्रीं सर्वकामदे मनोहरे स्वाहा। अस्य प्रयोगः —

नदीतीरे शुभे देशे चन्दनेन सुमण्डलम् ।
विधाय पूजयेद्देवीं ततो मन्त्रयुतं जपेत् ॥

त्रिसप्ताहं जपेदेवं प्रसन्ना वितरेत्सदा ।
दीनाराणां सहस्रैकं व्ययीकुर्याद्दिने दिने ॥

विना व्ययेन सा क्रुद्धा न ददाति कदाचन ॥

अथ शङ्खचारिणीमन्त्रः —

ओं शङ्खचारिणे(णि) शङ्खाभरणे द्रां द्रीं ह्रूं श्रीं स्वाहा। अस्य प्रयोगः —

मन्त्रायुतं जपेन्मन्त्री प्रातस्सूर्योदये सति ।
मासमेकं जपेदेवं पूजां कुर्यात् दिने दिने ॥

शङ्खसंलिप्तपट्टे तु शुक्लपुष्पैः सपायसैः ।
दशांशं होमयेत्साज्यैः इन्धनैः करवीरजैः ॥

ददाति शङ्खिनी तुष्टा नित्यं रूपकपञ्चकम् ।

अथ माणिभद्र(यक्ष)मन्त्रः —

ओं नमो माणिभद्राय नमः। पूर्णभद्राय नमो महायक्षसेनाधिपतये मोट मोट धारय स्वाहा। अस्य प्रयोगः —

साहस्रमष्टकं मन्त्रं जपेत् सप्तदिनावधि ।
प्रत्यहं माणिभद्राख्यः प्रयच्छत्येकरूपकम् ॥

रूपकं रूपे ॥

अथ स्वामीश्वरीमन्त्रः—

ओं ह्रीं आगच्छागच्छ स्वामीश्वरी(रि)स्वाहा । अस्य प्रयोगः—

एकासने शुचौ देशे त्रिसन्ध्यं त्रिसहस्रकम् ।
मासमेकं जपेन्मन्त्री ततः पूजां समारभेत् ॥

पुष्पधूपादिनैवेद्यैः प्रदीपैर्घृतपूरितैः ।
रात्रावभ्यर्चयेत्सम्यक् सुस्थिरस्सुप्रसन्नधीः ॥

अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
रसं रसायनं दिव्यं वस्त्रालङ्कारभूषणम् ॥

अथ वटयक्षिणीमन्त्रः—

ओं ह्रीं श्रीं वटवासिनी (नि) यक्षकुलप्रसूते वटयक्षिणी(णि) एह्येहि स्वाहा। अस्य प्रयोगः—

त्रिपथस्थवटाधस्थो रात्रौ मन्त्रं जपेत्सदा ।
लक्षत्रयं ततस्सिद्धो (द्धा) देवी स्याद्वटयक्षिणी ॥

वस्त्रालङ्करणं दिव्यं रसं सिद्धं रसायनम् ।
दिव्याञ्जनं च सा तुष्टा साधकाय प्रयच्छति ॥

अथ विशालामन्त्रः—

ओं विशालेशे द्रां द्रं क्लीं एहि एहि स्वाहा। अस्य प्रयोगः—

चिञ्चावृक्षतले मन्त्रं लक्षमावर्तयेत् शुचिः ।
विशाला वितरेत्तुष्टा रसं दिव्यं रसायनम् ॥

चिञ्चावृक्ष-चिञ्चचेंजाड புளியமரம்.

अथ चन्द्रिकामन्त्रः—

ओं ह्रीं चन्द्रिके हंसः स्वाहा। अस्य प्रयोगः —

शुक्लपक्षे जपेत्तावद्यावत् दृश्येत चन्द्रमाः।
प्रतिपत्पूर्वपूर्णान्तं तावल्लक्षमिमं जपेत्॥

अमृतं चन्द्रिकादत्तं पीत्वाऽयममरो भवेत्।

अथ हंसी (चेटी) मन्त्रः —

ओं हंसः सर्वलोकलोचनानि बन्ध बन्ध देव्याज्ञापयति स्वाहा। अस्य प्रयोगः —

हृदि ध्यात्वा जपेद्रात्रौ हंससंस्थांस(च)चेटकाम्।
योगं ददाति सा तुष्टा जरामृत्युविनाशनम्॥

अथ विचित्रामन्त्रः —

ओं विचित्रे विचित्ररूपेण सिद्धिं कुरु कुरु स्वाहा। अस्य प्रयोगः —

लक्षमेकं जपेन्मन्त्री वटवृक्षतले शुचिः।
बन्धूककुसुमैः पश्चात् मध्वाज्यक्षीरमिश्रितैः॥

दशांशं योनिकुण्डे तु हुत्वा देवी प्रसीदति।
विचित्रा साधकस्यैव प्रयच्छेदीप्सितं फलम्॥

इति यक्षिणीमन्त्रास्समाप्ताः॥

अथ सुब्रह्मण्यपञ्चदशाक्षरीमन्त्रः —

सुब्रह्मण्यपञ्चदशाक्षरीमन्त्रस्य अमृताकर्षणदक्षिणामूर्तिः ऋषिः। गायत्री छन्दः। प्रसन्नस्कन्दो देवता। सौं बीजम्। श्रीं शक्तिः। प्रसन्नस्कन्दप्रसादसिद्ध्यर्थे जपे विनियोगः। शरवणभवपरापरब्रह्ममयाय विद्यादेहाय हृदयाय नमः। ब्रह्मचर्याय शिखिवाहनाय शिरः। द्वादशनेत्राय शिखा। स्कन्दस्वामिकुमाराय कवचम्। ब्रह्मरुद्रतेजोमयाय नेत्रम्। ब्रह्मास्त्रनिवारणाय अस्त्रम्।

ध्यानम्—

किंतु (नु) रूपं प्रवक्ष्यामि बालार्कायुततेजसम् ।
व्याख्यानमुद्रासहितं देवसङ्घैस्समावृतम् ॥

ओं श्रीं क्लीं ह्रीं ऐं ईं नळं स्वौं शरवणभव । इति मन्त्रः ॥ इति पञ्चदशार्णोयं मन्त्रः । विद्यारक्षाप्रधानोयं मन्त्रः ॥

अथ अन्नलाभप्रदमन्त्रः—

अहमस्मि प्रथमजा ऋतस्य, पूर्वं देवेभ्यः, इत्यृचं अन्नलाभार्थं जपेत् ॥

अथ गोरक्षाकरकृष्णमन्त्रः—

नारद ऋषिः। गायत्री छन्दः। श्रीकृष्णो देवता। आचक्रादि गोपालदशाक्षरोक्तवदङ्गन्यासादिकम् ॥

गोरक्षिणं क्वणद्वेणुं चारयन्तं पशूंस्तथा ।

इति ध्यायेत् । गोपालकाय वेणुधराय वासुदेवाय हुंफट् । इति मन्त्रः । अनेन गोरक्षायां जपेत् ॥

श्रद्धयाऽग्निः समिध्यते, श्रद्धया विन्दते हविः, इत्यादि, श्रद्धां कामस्य मातरं, हविषा वर्धयामसीत्यन्तं सूक्तं भोजनश्रद्धार्थं जपेत् ।

उल ऋषिः । गायत्री छन्दः । वायुर्देवता । वात आवातु भेषजम् । इति सूक्तं, अनिल ऋषिः । त्रिष्टुप् छन्दः । वायुर्देवता । वातस्य नु महिमानं रथस्य + । इति सूक्तं, उभयं वा वातशान्त्यर्थं जपेत् ॥

यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः, इत्यनयोर्मन्त्रयोः गर्गश्रासजितौ ऋषी । बृहत्यनुष्टुभौ छन्दसी । अभयंकर इन्द्रो देवता । कृधि बीजम् । जहि शक्तिः । तापत्रयनिवारणार्थे विनियोगः । शङ्खिने हृत् ।

चक्रिणे शिरः। गदिने शिखा। वज्रिणे कवचम्। पद्मिने नेत्रम्। पाशांकुशधारिणे अस्त्रम्। ध्यानम्—

आरूढो वारणेन्द्रं दशशतनयनः शाड्वलश्यामळाङ्गः
वर्मी वीरप्रतापी प्रतिभटदहनप्रस्फुरद्वज्रपाणिः।
दोर्भिर्दिव्यायुधाढ्यैर्बहुभिरतिमहान्देवसेनासनाथः
दद्यादिष्टानि सद्यः परिहृतदुरितः पातु विश्वं महेन्द्रः॥

इमौ मन्त्रावभयप्रदौ॥

व्यास ऋषिः। अनुष्टुप् छन्दः। मेधासरस्वती देवता॥ यः छन्दसामित्यृक् धारणाप्रधाना। शरीरं मे इत्यृक् मेधाप्रधाना॥

अग्निस्तु विश्ववस्तमं इत्यस्य वसूयव ऋषिः। अनुष्टुप् छन्दः। अग्निर्देवता। पुत्रफलप्रदः॥

*मा प्रगाम यथा वयं। इत्यादिसूक्तचतुष्टयं आयुःप्रधानम्। तत्र प्रथमसूक्तस्य ऋचष्षट्। द्वितीयसूक्तस्य यत्तेयमित्यादयः ऋचो द्वादश। तृतीयसूक्तस्य प्रतारीत्यादयः ऋचो दश। चतुर्थस्य आजनन्तु इत्यादयो द्वादश। इत्थं संभूय चत्वारिंशदृचः। एताभिः ऋग्भिः सहस्राहुतिसंख्यया, सूक्तचतुष्कपञ्चविंशत्यावृत्त्या वा, चतुस्सहस्राहुत्या, सूक्तचतुष्कशतावृत्त्या वा, आज्यैर्हुनेत्। साध्यशरीरं स्पृष्ट्वा सूक्तचतुष्टयं जपेद्वा। मृत्युनाशकरं भवति॥

तत्र प्रथमसूक्तस्य प्रयोगविशेषः। प्रथमं सूक्तं गमने पथि जपेत्॥

स्वस्तिमानेति पन्थानं विन्दते च परं सुखम्॥

क्षीणायुषः पुरुषस्य शिरसि स्पृष्ट्वा द्वितीयसूक्तं जपेत् सहस्रकृत्वः। पश्चाहमायुर्लभते सः। एनं (तृतीयं) सूक्तं जले स्थित्वा जपेत्, शयने जप्त्वा संविशेयद्वा। आयुष्करं भवति। चतुर्थसूक्तस्य उत्तरषट्कस्य प्रयोगः—

*मा प्रगाम पथः इत्यादि इति ग. पाठः।

अयं माताऽयं पितेत्यादिना स्पृष्ट्वा जपेद्वा, घृतेन साध्यमभिषिञ्चेद्वा। विज्वरो भवति॥

तत्र प्रथमसूक्तस्य बृहदुग्धबन्धुसुबन्धुश्रुतबन्धुविप्रबन्धवो ऋषयः। चतुर्णां सूक्तानामप्येते ऋषयः। गायत्री छन्दः। विश्वेदेवा देवताः। सप्तानामृचामनुष्टुप् छन्दः, अष्टम्याः पंक्तिः, नवम्याः महापंक्तिः छन्दः। दशम्याः पङ्क्त्युत्तरा छन्दः। आद्यानां चतसृणां निर्ऋतिर्देवता। पञ्चम-षष्ठयोः असुनीतिर्देवता। सप्तम्याः लिङ्गोक्तदेवता। अष्टम्यादीनां तत्तल्लिङ्गोक्त-द्यावापृथिव्यौ देवते। दशम्यास्त्वपसमिन्द्ररये इत्यर्धर्च इन्द्रो देवता। अवशिष्ट-स्यापि द्यावापृथिव्यौ॥

चतुर्थसूक्तस्य [1] बहुदुग्धबन्धु सुबन्धु श्रुतबन्धु विप्रबन्धवः ऋषयः। आद्यानां पञ्चानां गायत्रीछन्दः। षष्टसप्तम्योरनुष्टुप्छन्दः। अष्टमीनवम्योः पङ्क्तिश्छन्दः। दशम्यादितिसृणां अनुष्टुप् छन्दः। आद्यानां चतसृणामसमति-र्देवता। पञ्चम्या इन्द्रो देवता। षष्ठ्या असमतिर्देवता। शेषाणां सुबन्धुर्देवता। इत्थं जपहोमादिसमये तत्तत्सूक्तसमये तत्तदृक्समये च तत्र तत्रोक्ता-नृष्यादीन्विधाय कुर्यात्। मृतसंजीवनं भवति॥

आदौ यद्ब्रह्म [2] विलयं इत्यादिपुत्रानापो देवीरिहाहित इत्यन्तं ह्रीमिति जले विलिख्य अनेन मन्त्रेण जप्त्वा स्त्रियै दातव्यं पुत्रलाभाय॥

यक्ष्मनाशन ऋषिः। चतस्रस्त्रिष्टुभः। एकाऽनुष्टुप्। इन्द्रो वा इन्द्राग्नी वा लिङ्गोक्तदैवतं वा (देवता)। मुञ्चामि त्वा हविषा। इति सूक्तं क्षयरोगनिवृत्त्यर्थं जपेत्। अनेन प्रयोगः — मुञ्चामीत्यादि पञ्चभिः ऋग्भिः आज्यपक्वाद्यैः क्रमेण एकैकऋक्क्रमेण एकैकवारं हुत्वा षडाहुतिसंज्ञं भवति। एवं प्रथमतः कृत्वा, पुनरपि काश्मर्यसमिदाज्यचर्वाज्यद्रव्यक्रमेण एकैक-

१ बहुदुक्थबन्धु इति ग मातृकापाठः।

२ विलपं इति ग मातृकापाठः।

मन्त्रैरेकैकवारं हुत्वा, तत्र यदि क्षितायुर्यदि वा इत्यृचा होमसमये, तान्येव द्रव्याणि एकैकं शतसंख्यया हुत्वा, पुनरुत्तराभी अग्निरेकैकवारं जुहुयादिति । महापद्माहुतयः आयुष्कराश्च यक्ष्मरोगनाशकराश्च भवन्ति ॥

अथाश्लेषां वा पौर्णिमां वा रात्रौ सकलसर्पप्रीत्यर्थं सर्पबलिं करिष्ये इति संकल्प्य तण्डुलचूर्णैरष्टदळानि विरचय्य दळमध्येषु हरिद्राचूर्णानि प्रविकीर्य, पुनः कर्णिकायां च तण्डुलचूर्णानि प्रविकीर्य वामायै नमः । ज्येष्ठायै नमः । रौद्र्यै नमः । काळ्यै नमः । कलविकलिन्यै नमः । बलविकलिन्यै नमः । बलप्रमथिन्यै नमः । सर्वभूतदमन्यै नमः । मनोन्मन्यै नमः ॥ ९ ॥ इत्यष्टदळेषु अष्टशक्तीः नवमीं कर्णिकायां च समभ्यर्च्य ओं नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः । इति च कर्णिकायाम् । एवं जलगन्धपुष्पधूपदीपैः संपूज्य तत्र पञ्चाक्षरेण शिवं समावाह्य, पञ्चाक्षरेणैव जलगन्धपुष्पधूपदीपान् दत्वा पुनरष्टदळेषु प्रागादिक्रमेण अनन्ताद्यष्टनागान् समावाहयेत् ॥

तत्र प्रथमं प्राग्दळे अनन्तमावाहयामीति आवाह्य, अनन्ताय नमः, इति जलगन्धपुष्पधूपदीपैः संपूज्य आग्नेयदळे वासुकिमावाहयामीत्यावाह्य, वासुकये नमः इति जलगन्धपुष्पधूपैस्त्रिवारं संपूज्य, पुनर्दक्षिणदळे तक्षकमावाहयामीति तक्षकाय नमः इति पूर्ववत् संपूज्य निर्ऋतिदळे कार्कोटकमावाहयामीति कार्कोटकाय नमः इति संपूज्य वारुणदळे शङ्खपालमावाहयामि शङ्खपालाय नमः इति जलादिभिस्संपूज्य वायव्यदळे गुळिकमावाहयामि गुळिकाय नमः इति पूर्ववत्संपूज्य, उत्तरदळे पद्ममावाहयामि पद्माय नमः इति संपूज्य ईशानदळे महापद्ममावाहयामि इत्यावाह्य महापद्माय नमः इति जलादिभिस्संपूज्य पुनरष्टदळाद्बहिः प्रागादिक्रमेण देवग्रहेभ्यो नमः । मनुष्यग्रहेभ्यो नमः । गन्धर्वग्रहेभ्यो नमः । यक्षग्रहेभ्यो नमः। पितृग्रहेभ्यो नमः । नागग्रहेभ्यो नमः । पिशाचग्रहेभ्यो नमः । राक्षसग्रहेभ्यो नमः ॥ इत्यष्टदिक्षु जलगन्धपुष्पैः संपूज्य, क्षं क्षेत्रपालाय नमः इत्युत्तरभागे समभ्यर्च्य पुनः

कर्णिकामध्यस्थित महादेवायान्नं निवेद्य अष्टदलस्थितानन्ताद्यष्टनागानां तण्डुलचूर्णलोळितक्षीरं कदळीफलसहितं निवेद्य अनन्तादिसर्वनागानां यथाभागं निवेद्यमिदं समर्पयामीति निवेद्य गण्डूषादिकं दत्वा कर्णिकामध्यस्थितमहादेवमारभ्य अनन्ताद्यष्टनागक्रमेण देवग्रहादीनां चान्नेनैव तत्तत्स्थानेषु बलिं हरेत् । ओं नमः शिवाय स्वाहा । अनन्ताय स्वाहा । इत्यादिक्रमेण देवग्रहेभ्यः स्वाहा । मनुष्यग्रहेभ्यः स्वाहा इत्यादिप्रकारेण स्वाहान्तैर्मन्त्रैः बलिं हरेत् ।

अथ क्षेत्रलाभकरमन्त्रः —

यो भाग्ने भागिनं सन्तं । इत्यृक् क्षेत्रलाभाय ॥

अथ छर्दिनाशनमन्त्रः —

ठं वं नमश्शिवाय इत्यमृतपञ्चाक्षरमन्त्रं छर्दिनाशार्थं जपेत् ॥

अथ राक्षोघ्नहोमविधानं व्याख्यास्यामः —

अपामार्ग वकुळ-पलाशा-श्वत्थ-वेणु-बिल्वा-म्र-निम्ब-कार्पासबीज-सर्षपोन्मत्तबीज-तुषतिल-दूर्वा-लवणा-ज्यानि संभृत्य, निशामुखे गोमयेनोपलिप्य अग्निमुपसमाधाय, प्रणीतान्वाधानान्तं कृत्वा, चरुं श्रपयित्वाऽग्नेः पुरस्तात् व्रीहिमण्डले तत्पुरुषाय विद्महे इति मन्त्रेण तत्पुरुषमावाहयेत् । एवमग्नेर्दक्षिणतोऽघोरेभ्य इति मन्त्रेणाऽघोरमावाहयेत् । एवमग्नेः पश्चात् सद्योजातमिति मन्त्रेण सद्योजातमावाहयेत् । एवमुत्तरतो वामदेवाय नम इति मन्त्रेण वामदेवमावाहयेत् । अथ दक्षिणतो जातवेदस इति मन्त्रेण योगिनीं कपालहस्तां दुर्गामावाहयेत् । प्रतिदैवतं मण्डले कूर्चेनैवावाह्यावाह्य स्वेन स्वेन मन्त्रेण पाद्यार्घ्याचमनीयस्नानगन्धपुष्पधूपदीपोपचारैरभ्यर्च्य स्वसूत्रोक्तप्रकारेण परिध्याधानाज्यभागान्तं कृत्वा, चरुणा रक्षोहणं वाजिनमिति पुरोनुवाक्यामनूच्य विज्योतिषा बृहतेति याज्यया जुहुयात् ॥

अथ स्विष्टकृतमवदाय भूमौ निधाय, ये देवाः पुरस्सदोऽग्निनेत्रा

रक्षोहण इति पञ्चाज्याहुतीर्हुत्वा ततः समूढं रक्ष स्वाहा। संदग्धं रक्ष स्वाहा। इदमहं रक्षोभिस्संदहामि स्वाहा। अग्नये रक्षोघ्ने स्वाहा। यमाय रक्षोघ्ने स्वाहा। सवित्रे रक्षोघ्ने स्वाहा। वरुणाय रक्षोघ्ने स्वाहा। बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा। इत्यष्टावाज्याहुतीर्हुत्वा अपामार्गादिसंभारानादाय तेन एतमेव-मामयाविनं प्रदक्षिणीकृत्य, कृणुष्वपाज इति सूक्तं रक्षोहणं वाजिनं इत्यनया ऋचा विज्योतिषा बृहस्पते इति द्वाभ्यां ऋग्भ्यां, एवमेवाष्टादशर्चं एकैकार्धर्चेन दहाशसो रक्षस इत्यर्धर्चं संयोज्य, त्रिःकृत्वः अष्टोत्तरशताहुतीः मिश्रीकृत्य अपामार्गादिना कृत्वा स्विष्टकृत्प्रभृति उपरिष्टाचन्तमखिलं कृत्वा देवतानां स्वैस्स्वैर्मन्त्रैः नैवेद्योपचारं दत्वा पश्चादुद्वास्याग्निं पात्रे वोध्दृत्य चरुणा सह चत्वरे गत्वा ततस्स्थण्डिलमुपलिप्य तमग्निमुपसमाधाय संपरिस्तीर्य तत्सन्निधौ दिक्षु बलिं दद्यात् ॥

यानीह भूतानि वसन्ति तत्र बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥

गृह्णन्तु बलिमेतेषां बाह्यस्था बहुरूपकाः ।
वेतालाश्चैव मातङ्गा हीनाऽहीनाश्च ये गणाः ॥

ये क्रूरा येऽल्पसत्वाश्च भूतप्रेतनिशाचराः ।
तेषां सर्वेषां बलिं हरामि तेभ्यस्तामो स्वाहा ॥

इत्येतैर्मन्त्रैः चतुर्दिक्षु बलिं दद्यात्। कर्ता गृहं गत्वा मनोहृदयदेशं स्वस्तिनो मिमीतामिति मन्त्रेणाभिमृशेत् ॥

तत्र आमयाविनमभिमृश्य, कृणुष्व पाज इति पूर्ववदावर्त्य रक्षां कुर्यात्। आदौ पुण्याहं कुर्यात्। तत्रापि रक्षोघ्ने कर्मणे स्वस्ति भवन्त्विव(तुइ)त्युक्त्वा, रक्षोघ्नः प्रियतां इति समापयेत्। ओं नमो भगवते महारुद्राय वज्रपाणये ज्वर-हृदयमावर्तयिष्यामि, भो भो ज्वर ज्वर शृणु हन हन गर्ज गर्ज मुञ्च मुञ्च

सदुज्वरपाणिराज्ञापयति हुं फट् स्वाहा । अवतरावतर वज्रपाणिराज्ञापयति तत्वं मम शिरो मुञ्च मुञ्च, कर्णं (कण्ठं) मुञ्च मुञ्च, हृदयं मुंच मुंच उदरं मुञ्च मुञ्च, कटिं मुञ्च मुञ्च, ऊरु(रू) मुञ्च मुञ्च, जङ्घे मुञ्च मुञ्च, पादौ मुञ्च मुञ्च इति जपेत् ॥

अथ पुत्रप्रदमन्त्रः —

नमो अस्तु नीलग्रीवाय इति । अस्याः पुरश्चरणं, पञ्चदश दिनानि जपेत् ॥

पश्चिमद्वारशिवालये कुण्डमरत्निमात्रं सर्वतो निखाय, मथिताग्निमाधाय अर्कपद्मपुष्पैः आमावास्यायाः प्रतिदिनं सहस्रं हुत्वा घृतपायसं देवाय निवेदयेत् ॥

अनेन पुत्रकामानां प्रयोगो वक्ष्यते —

शम्भोरायतनं नदीतीरं गोष्ठं वा गृहीत्वा देवालये चेद्देवस्योपरि अन्यत्र कुम्भे आवाह्य तस्य पुरतोऽग्नौ शमीसमिधां दधिमधुघृताक्तानां एकादशसहस्रं जुहुयात् दिनत्रयं दिनं वा ईक्षित्वा कार्यम् । प्रतिदिनमष्टसहस्रं तदर्धं अष्टशतं वा तामरसपुष्पं उपरि विन्यसेत् । तदभावे शमीपत्रं वा । एवं कृत्वा अन्तिमदिने अष्टसहस्रं तदर्धं वा ब्राह्मणान् भोजयेत् । द्रव्यत्यागं विशेषेण कुर्यात् । एकादश रुद्रान् भोजयित्वा तेषां किञ्चिद्वस्तु प्रदाय दक्षिणतो देवस्य सन्निधावाचार्यमधिकं भोजयित्वा दक्षिणां दद्यात् ॥

दक्षिणापि उप्तबीजा भूः । मानमप्युच्यते — नवारत्निदण्डेनाष्टसहस्रं कुण्डलाय रत्नं स्वर्णमपि प्रतिदिनं पादनिष्कं * निर्णाय दातव्यम् । कांस्यपात्रमेका गौरपि ॥

* निमीय इति ग मातृकापाठः । निर्णीय इति पाठो युक्तो भाति ।

एवं पुत्रकामविधिं कृत्वा शंभुप्रसादात् पुत्रवान् भवति। यावद्दक्षिण भूः तावदविच्छिन्ना सन्ततिर्भवति। आसंवत्सरात् सिद्धिर्भवति। एतत्फलं सप्तजन्माहीनं संवध्यते। ध्यानं—शरच्चन्द्रप्रकाशेन इत्यादि॥

अथ शत्रुविजयार्थमन्त्रः —

प्रमुञ्च धन्वन इति प्रथमा ऋक्। अवतत्य धनुरिति द्वितीया। विज्यं धनुः इति तृतीया। आभिश्शत्रवो विजिता भवन्ति॥

अथ जानपदादिव्याधिशमर्थमन्त्रः —

प्रतिनमस्कारं होमजपं सर्वमुक्तफलं साङ्गमिति। नमस्सहमानाय इत्यनुवाकस्य पुरश्चरणं कृच्छ्रं च कृत्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति॥

जनपदव्याधिषु सत्सु राजा शान्तिं कारयेत्। सश्रद्धैर्ब्राह्मणैर्दशभिः ईश्वरावासे जपः कार्यः। पञ्चभिर्जपः, पञ्चभिर्होमः। एको ब्रह्मा। होमद्रव्यं तिलोदनम्। प्रतिनमस्कारैर्जुहुयात्। तेन सहस्रं जपः। एवं कृते जनपदव्याधिर्नश्यति। अन्यव्याधौ वा हरावासे अपामार्गतण्डुलैराज्यमिश्रैरष्टसहस्रं जुहुयात्। तस्य व्याधिर्नश्यति। प्रधानव्याधौ शुद्धतण्डुलैराज्यसिक्तैश्शम्भोरायतने शतसहस्रं जुहुयात्। अमात्यानां रोगे सति पूर्ववदपामार्गैः प्रत्येकमष्टसहस्रं जुहुयात्। तस्य (तेषां) व्याधिर्नश्यति॥

राजव्याधौ उच्यते —

*शुद्धैर्ब्राह्मणैरेकविंशत्या कार्यम्। एको ब्रह्मा। राजप्रमाणं सर्वतोऽग्निकुण्डं कृत्वा तत्र मथिताग्निमाधाय द्वन्द्वीभूत्वा जुहुयात्। व्रीहिश्यामाकनीवारापामार्गदूर्वाकमलकिञ्जल्कान् शुद्धेन जलेन प्रोक्षणं राजोपयोगिद्रव्येषु कर्तव्यम्। एवं कृते हि राजव्याधयो नश्यन्ति॥ अन्यदप्युच्यते —

* सिद्धैः इति ग पाठः।

राजरोगविनाशनार्थं नित्यमदनेनानुवाकेन शुद्धतण्डुलैराज्यमिश्रैराहुतयो होतव्याः। अनेन राजा नित्यमरोगो दीर्घायुर्भवति। अन्येषामपि रोगे सति अनेन अनुवाकेन प्रतिनमस्कारं तिलव्रीहियवैराज्यसिक्तैरष्टसहस्रं जुहुयात्। तेषां व्याधिर्नश्यति ॥

अनेनानुवाकेन आभिचारा उच्यन्ते —

राजा राज्यकामः द्रव्यं सर्वत्र यवाज्यमिश्रं हविः। तस्मादग्निकुण्डाद्दक्षिणपश्चिमतः कलशं जलपूर्णं स्पृष्ट्वा ब्रह्मा जपेत्। आहुतीस्सप्तनाडिकान्ता निरन्तराः। एवममावास्याप्रभृत्यमावास्यान्तं होमः। अथ रज उदीर्णं चेत् उदयात्प्रभृत्यास्तमयाद्धोमः ॥

नाडिकाहोमस्य प्रतिदिनं प्रतिपुरुषमर्धनिष्कम्। दिवाहोमस्य द्विगुणम्। कलशजलं च कारयेत्। परराष्ट्रस्य रोगबाहुल्यमिच्छन् मांसैर्वा राक्षोघ्नीभिर्वा शतसहस्रं होमः। सर्वत्र आभिचारं करोति स्वाहा इत्येवं मांसहोमेन शत्रुराष्ट्रप्रजाः शुष्यन्ति। अथ वैकङ्कतसमिद्भिः रक्ततन्तुवेष्टिताभिः शतसहस्रं होमः। अनेन शत्रोः राज्ञः महाज्वरो भवति। राष्ट्रजनैरुपभोग्यजलादिकं वस्तु स्पृष्ट्वा वीक्ष्य वा शतसहस्रं जप कुर्यात्। तद्वस्तूपभुक्ते स संवत्सरान्नश्यति। श्मशानाग्नावर्कसमिद्भिः शतसहस्रं जुहुयात्। तेन शत्रुराजनगरं व्याधिना नश्यति। अर्कारण्यं भविष्यति। अनेनैव चामुण्डागृहे दक्षिणाभिमुखो भूत्वा माषतिलैस्तैलमिश्रैरेकादशसहस्रं जुहुयात्। पुरराष्ट्रप्रजाः वसूरिकाभिर्बाध्यन्ते ॥

अनेनैवापरमुच्यते —

पश्चिमद्वारे शम्भोरायतने देवस्य पादपीठे अग्निमपस्मारिणं स्पृष्ट्वा सप्तसहस्रं जपेत् ज्वलस्वापस्मारिन्निति। एतेन राज्ञश्शत्रुरपस्मारी भवति। अनेनैव संपन्नभूमिपालं स्मृत्वा शुद्धतण्डुलपिष्टैराहुतिमात्रैः शतसहस्रहोमः। राजयक्ष्मोत्पद्यते। तेनैव नश्यति। ध्यानम् — रूपयौवनसंपन्ना इत्यादि ॥

(अथ) तृतीयोऽनुवाकः । ओं हां व्योमव्यापिने स्वाहा । इति व्योमव्यापिमन्त्रः । सार्धलक्षजपः पुरश्चरणाहोमः । रोगनिवृत्तिप्रधानोऽयं मन्त्रः । प्रातःकाले चुलुकोदकमेकादशवारमभिमन्त्र्य प्रतिदिनं पिबेत् । सर्वरोगविमुक्तश्शतायुर्भवति ॥

अथ कन्यायाः वरलाभप्रदरुक्मिणीवल्लभमन्त्रः —

नारद ऋषिः । अनुष्टुप् छन्दः । रुक्मिणीवल्लभश्रीकृष्णो देवता । ओं हृत् । नमः शिरः । भगवते शिखा । रुक्मिणीवल्लभाय कवचम् । स्वाहा अस्त्रम् । ओं नमो भगवते रुक्मिणीवल्लभाय स्वाहा । इति मूलमन्त्रः । कन्या तु वरलाभार्थं जपेत् ॥

अथ देवीमाहात्म्ये प्रोक्तनवाक्षरीविधानं लिख्यते —

मार्कण्डेय ऋषिः । विराट् छन्दः । महिषमर्दिनी देवता । ह्रीं चामुण्डायै हृत् । ह्रीं चण्डिकायै शिरः । इत्याद्यङ्गानि । ध्यानम् —

त्रिशिखदलितरक्षोधीशवक्षोविनिर्य-
द्बहळरुधिरधारादिव्यमाध्वीरसौघम् ।
वदनमुपनयन्ती सिंहपृष्ठाधिरूढा
हरतु भगवती मे दुःखचिन्तां दुरन्ताम् ॥

ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥ इति नवाक्षरीमन्त्रः ॥

अथ यन्त्रम् —

षट्कोणमध्ये मन्त्रस्य बीजत्रयमवशिष्टाक्षराणि कोणेषु च विलिखेत् । हं इति देवीमाहात्म्यमूलबीजम् ॥

देवीमाहात्म्यस्य प्रतिश्लोकं पायसैस्तिलैः सर्पिषा च पञ्चामृतैश्च जुहुयात् । पञ्चामृतं नाम —

पीयूषदध्याधाराख्यं मधिक्षुरसपञ्चकम् ।
एतत्पञ्चामृतं नाम स्नपने प्रवरं मतम् ॥ इति ॥

अथ लवणमन्त्रविधानमुच्यते —

अङ्गिरा ऋषिः । अनुष्टुप् छन्दः । अग्निरात्रिदुर्गाभद्रकाल्यो देवताः । मन्त्रे स्थिता हलो बीजानि । मन्त्रे स्थितास्स्वराश्शक्तयः । लवणांभसीत्यृचा हृत् । लवणे हूयमाने इत्यृचा शिरः । दह त्वचास्थि इत्यृचा शिखा । सन्दग्ध्वानय वशं मे इत्यृचा कवचम् । या रात्रिरित्यृचा अस्त्रम् । अथवा चिटिमन्त्राक्षरैः षडङ्गानि कुर्यात् । पञ्चत्रिपञ्चचतुःपञ्चद्विसंख्याकैरक्षरैः क्रमात् ॥

ओं चिटि चिटि चण्डायै महाचण्डायै अमुकं मे वशमानय स्वाहा ॥ इति चिटिमन्त्रः । आदौ तारस्थाने शक्तिबीजमिति केचित् ॥

ध्यानम् —

नवकुंकुमसन्निभं त्रिणेत्रं रुचिराकल्पशतं भजामि वह्निम् ।
स्रुवशक्तिवराभयानि दोर्भिर्दधतं रक्तसरोरुहे निषण्णम् ॥
इत्यग्निध्यानम् ॥

कालाम्बुवाहद्युतिमिन्दुवक्त्रां तारावलीशोभिपयोधराढ्याम् ।
कपालपाशांकुशशूलहस्तां नीलांशुकां यामवतीं नमामि ॥
इति रात्रिदेवताध्यानम् ॥

नीलाम्बुदाभामरिशङ्खशूलखड्गाढ्यहस्तां तरुणेन्दुचूडाम् ।
भीमां त्रिणेत्रां जितशत्रुवर्गां दुर्गां स्मरेद्दुर्गतिभङ्गदक्षाम् ॥
इति दुर्गाध्यानम् ॥

टङ्कं कपालं डमरुं त्रिशूलं संबिभ्रती चन्द्रकलावतंसा ।
पिङ्गोर्ध्वकेशी सितभीमदंष्ट्रा भूयाद्विभूत्यै मम भद्रकाली ॥
इति काळीदेवताध्यानम् ॥

अग्निर्यामवती ध्येयौ वश्याकर्षणकर्मणोः ।
स्मरेद्दुर्गां भद्रकाळीं मन्त्री मारणकर्मणि ॥

मूलमन्त्रम् —

लवणांभसि जातोसि तीक्ष्णोस्युग्रोसि हृदयं तव ।
लवणस्य पृथिवी माता लवणस्य वरुणः पिता ।
लवणं दहति पचति लवणं छिन्दति भिन्दति ॥
इति प्रथमा ऋक् ॥

लवणे हूयमाने तु कुतो निद्रा कुतो रतिः ।
अमुकस्य दह गात्राणि दह मांसं दह त्वचम् ॥
इति द्वितीया ऋक् ॥

दह त्वचास्थिलोमानि अस्थिभ्यो मज्जकां दह ।
यदि वसति योजनशते नदीनां च शतेन्तरे ॥
इति तृतीया ऋक् ॥

संदग्ध्वाऽऽनय वशं मे शीघ्रमग्ने लवणतेजसा ।
न शरे लोहप्राकारे कृष्णसर्पयुतार्गले ॥
तत्रस्थं वशमानय ॥
इति चतुर्थी ऋक् ॥

या रात्रिश्शल्यविद्धस्य शूलाग्रारोपितस्य च ।
सा ते रात्रिर्महारात्रिः या रात्रिरमुकं विना ॥
इति पञ्चमी ऋक् ॥

प्रयोगकाले मन्त्रस्थामुकपदस्थाने साध्यनाम प्रक्षिप्य जुहुयात् ॥

ऋक्पञ्चकं जपेत्सम्यगयुतं तद्दशांशतः ।
हविषा घृतसिक्तेन जुहुयादर्चितेऽनले ॥

एवं कृतपुरश्चर्यः प्रयोगकुशलो भवेत् ।

केवलपक्षे समावाह्य अङ्गेन्द्रवज्रादिभिः पूजा —

जानुप्रमाणे सलिले स्थित्वा निशि जपेन्मनुम् ।
अनेन वाञ्छितः साध्यः किंकरो जायते क्षणात् ॥

नाभिमात्रजले स्थित्वा जपेन्मन्त्रमिमं सुधीः ।
अष्टोत्तरसहस्रं यः तस्य साध्यो वशी भवेत् ॥

ऋक्पञ्चकं जपेन्मन्त्री कण्ठमात्राम्भसि स्थितः ।
सप्तभिर्दिवसैर्भूपान् वशयेद्विधिनाऽमुना ॥

विलिख्य ताळपत्रे तं साध्यनाम्ना विदर्भितम् ।
निक्षिप्य क्षीरसंमिश्रे जले तत्क्राथयेन्निशि ॥

वश्यो भवति साध्योऽस्य नात्र कार्या विचारणा ।
ताळपत्रे लिखित्वैवं भद्रकाळीगृहे खनेत ॥

वश्याय सर्वजन्तूनां प्रयोगोऽयमुदाहृतः ।
ताळपत्रे समालिख्य मन्त्रं साध्यविदर्भितम् ॥

तापयेत्खादिरे वह्नौ मासाद्वश्यो भवेन्नरः ।
त्रिकोणं कुण्डमापाद्य सम्यक् शास्त्रोक्तलक्षणम् ॥

तस्मिन् होमं प्रकुर्वीत संस्कृते हव्यवाहने ।
प्रक्षाळ्य गव्यदुग्धेन संशोध्य लवणं सुधीः ॥

संचूर्णितं प्रजुहुयात सप्ताहाद्वशयेज्जनान् ।
दधिमध्वाज्यसंयुक्तैः सैन्धवैर्जुहुयात्तथा ॥

वशयेत्सकलान्देवानचिरात्किमु पार्थिवान् ।
विशुद्धं लवणं प्रस्थं विभक्तं पञ्चधा पृथक् ॥

एकैकं च प्रजुहुयात् ऋचा पञ्चाहमादरात् ।
यस्य नाम्ना स वश्यस्स्याद्नेनैव न संशयः ॥

शुद्धं लवणमादाय जुहुयान्मधुरान्वितम् ।
ऊनपञ्चाशदाहुत्या वशं नयति वाञ्छितम् ॥

नित्यं शुद्धेन लोणेन हुत्वा शत्रून्वशं नयेत् ।
मधुरत्रयसंयुक्तैः लवणैस्साधु चूर्णितैः ॥

जुहुयाद्वशयेन्नारीं नरान्नरपतीनपि ।
मन्त्रं कृष्णतृतीयादि प्रजपेद्यावदष्टमी ॥

पुत्तळीः पञ्च कुर्वीत साङ्गोपाङ्गास्समाश्शुभाः ।
एका साध्यद्रुमेण स्यादन्या पिष्टमयी मता ।
लवणं पोतसंभूतं चूर्णितं परिशोधितम् ॥

पोतसंभूतमिति सैन्धवमित्यर्थः ॥

कुडुबं प्रोक्षयेत् क्षीरं दध्याज्यमधुभिः क्रमात् ।

कुडुबं नाम प्रस्थचतुर्थांशम् ॥

गुडाज्यमधुभिस्सम्यक् मिश्रितेनामुना पुनः ।
कुर्वीत पुत्तळीं सौम्यां सर्वावयवशोभिताम् ॥

पुत्तळीति साध्यप्रतिकृतिः ॥

प्राणमन्त्रकृतं यन्त्रं आमां हृदि विनिक्षिपेत् ।

प्राणमन्त्रयन्त्रं तु —

वाय्वग्निवज्रिवरुणेश्वरराक्षसेन्दु-
प्रेतेशदिक्षु लिखितैरथ यादिवर्णैः ।

द्व(वि)न्द्वाङ्कितैः क्षगतहंससमेतमध्यं
प्राणाख्ययन्त्रमथ वर्णवृतान्तरस्थम् ॥ इति ॥

आसु प्राणान् प्रतिष्ठाप्य पूजयेत्कुसुमादिभिः ।
पश्चात् कृष्णाष्टमीरात्रौ याममात्रगते सति ॥

विधाय मातृकान्यासं मन्त्रन्यासमनन्तरम् ।
चिटिमन्त्रसमुद्भूतान् चतुर्विंशतिसंख्यकान् ॥

तारायान्विन्यसेद्वर्णान् स्थानेष्वेषु समाहितः ।
मूर्ध्नि फाले दृशोः श्रोत्रे नासास्यचुबुकेष्वथ ॥

कण्ठहृत्स्तनयुग्मेषु कुक्षौ नाभौ कटिद्वये ।
मेढ्रे पायौ प्रविन्यस्य शिष्टं वर्णचतुष्टयम् ।
ऊरुयुग्मे जानुयुग्मे जङ्घायुग्मे पदद्वये ॥

एवं विन्यस्तसर्वाङ्गः रक्तमाल्यानुलेपनः ।
रक्तवस्त्रधरश्शुद्धः पुत्तळीं दारुणा कृताम् ॥

अधोमुखीं खनेत्कुण्डे पिष्टजामासनादयः (धः) ।

दारुणेति साध्यनक्षत्रवृक्षेणेत्यर्थः ॥

मृण्मयीं प्रतिमां पाददेशे न्यस्य तदात्मनः ।
मधूच्छिष्टमयीं व्योम्नि कुण्डस्योर्ध्वं प्रलम्बयेत् ॥

मधूच्छिष्टं मेण । மெழுகு

लवणेन कृतां पश्चात् पुत्तळी संस्पृशन् जपेत् ।
त्र्यक्षपञ्चक यथान्यायमष्टोत्तरसहस्रकम् ॥

संहृत्य चिटिमन्त्रार्णान्पुनस्तस्यास्तनौ न्यसेत् ।
अंगुष्ठसन्धिप्रपदजङ्घाजानूरुपायुषु ॥

लिङ्गदेशे पुनर्नाभौ हृदये जठराम्बुजे ।
स्तनद्वये कन्धरायां चुबुके वदने पुनः ॥

घ्राणयोः कर्णयोर्युग्मे ललाटे मूर्धनि क्रमात् ।
अग्निमाधाय विधिवत् संपूज्य कुसुमादिभिः ॥

तस्मिन्नभ्यर्च्य मन्त्रोक्ता देवताः प्रणमेत्सुधीः ।
मन्त्रैरेतैः प्रयोगादावन्ते संयतमानसः ।
ओं त्वमानन मित्रघ्न निशाया हव्यवाहनं ॥

हविषा मन्त्रदत्तेन तृप्तो भव तया सह ।
जातवेदो महादेव तप्तजाम्बूनदप्रभ ॥

स्वाहापते विश्वदक्ष लवणं दह शत्रुहन् ।
ईशे शर्वरि शर्वाणि ग्रस्तमुक्तं त्वया जगत् ॥

महादेवि नमस्तुभ्यं वरदे कामदा भव ।
नमो मयि महादेवि महादेवस्य सुव्रते ॥

त्रियामे पुरुषं हत्वा वशमानय दह्य तम् ।
दुर्गे दुर्गादिरहिते दुर्गसंरोधनार्गळे ॥

शङ्खचक्रधरे देवि दुष्टशत्रुभयंकरि ।
नमस्ते दह शत्रून्मे वशमानय चण्डिके ॥

शाकंभरि महादेवि शरणं मे भवानघे ।
भद्रकाल्यभयाभीष्टे भद्रसिद्धिप्रदायिनि ॥

सपत्नान्मे हन हन दह शोषय तापय ।
शूलासिशक्तिवज्राद्यैः उत्कृत्योत्कृत्य नाशय ॥

महादेवि महाकालि रक्ष मामक्षतात्मिके ।
साध्यं संस्मृत्य निर्भिद्य पुत्तळीं सप्तधा ततः ॥

ऋक्पञ्चकं समुच्चार्य जुहुयादेधितेऽनले ।
प्रथमो दक्षिणः पादस्तत्करस्तदनन्तरम् ॥

शिरस्तृतीयमाख्यातो वामहस्तस्ततः परम् ।
मध्यादूर्ध्वं पञ्चमः स्यादधोंशः षष्ठ ईरितः ॥

सप्तमो वामपादस्स्यादेवं भागक्रमः स्मृतः ।
सप्तसप्तविभागो वा प्रोक्तेष्वेषु यथाविधि ॥

सप्तधा विभक्तेष्वेकैकं सप्तधा विभज्येत्यर्थः ॥

हुत्वैवमर्चयित्वाग्निं प्रणमेद्दण्डवत्ततः ।
यजमानो धनैर्धान्यैः प्रीणयेद्गुरुमात्मनः ॥

अनेन विधिना मन्त्री वशयेदसुरान्सुरान् ।
किंपुनर्मनुजान्भूपानमात्यान्वरयोषितः ॥

मारणे पूर्वसंप्रोक्तपुत्तळीनां चतुष्टयम् ।
निवेशयेद्यथापूर्वं साधकेन्द्रो विधानवित् ॥

अपरां वक्ष्यमाणेन विधानेन प्रकल्पयेत् ।
वराहपारावतविट्तिलत्र्यूषणरामठैः ॥

व्रणकृन्निम्बसिद्धार्थसाध्यवामाङ्घ्रिरेणुभिः ।

त्र्यूषणं-शुण्ठि, मिरे, पिप्पली। சுக்கு மிளகு திப்பிலி रामठं-
हिङ्गु பெருங்காயம் व्रणकृत्-विबे சேங்கொட்டை।

महिषीमूत्रसंपिष्टैः पूर्वोक्तलवणान्वितैः ।
विधाय पुत्तळीं सम्यक् प्राणस्थापनमाचरेत् ॥

जपपूजादिकं सर्वं कुर्यात्प्रागुक्तवर्त्मना ।
ततः पूर्वोदिते कुण्डे रात्रौ प्रज्वलितेऽनले ॥

दुर्गां वा भद्रकाळीं वा समाराध्य यथाविधि ।
धारयेन्निशितं शस्त्रं सव्यहस्तेन साधकः ॥

वामपादं समारभ्य दक्षिणाङ्घ्र्यवसानकम् ।
छित्वा छित्वा प्रजुहुयात् निराहारो जितेन्द्रियः ॥

कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ।
अनेनैव विधानेन होमं कुर्यात् विचक्षणः ॥
त्रिसप्ताहप्रयोगेण मारयेद्रिपुमात्मनः ॥

इति लवणमन्त्रविधानं समाप्तम् ॥

अथ प्रत्यङ्गिरामन्त्रविधानं लिख्यते—

अङ्गिरसप्रत्यङ्गिरसावृषी । उग्रा कृत्या देवता । अनुष्टुप् छन्दः । मम सर्वारिष्टविनाशार्थे जपे विनियोगः । क्रां अंगुष्ठाभ्यां नमः । क्रीं तर्जनीभ्यां नमः । इत्यादि करन्यासः । क्रां हृत् । क्रीं शिरः । इत्याद्यङ्गानि । एवं न्यस्य पुनर्दिग्बन्धनं कुर्यात् ॥

दिग्बन्धनमन्त्रस्य मरीचिपुत्रः कण्व ऋषिः । इन्द्रादिलोकपाला देवताः । अनुष्टुप्छन्दः । मम सर्वारिष्टविनाशार्थे दिग्बन्धने विनियोगः ॥

शमग्निरग्निभिः करतृछन्नस्तपतु सूर्यः । शं वातो वात्वरपा अपास्त्रिधः । पूर्वदिग्भागे इन्द्रः सुप्रीतो वरतो भवतु । यो मे [1] कुलाभिगमधनाभिमान-प्राणस्य पुरस्तादागतः पाप्मा पापकेन कर्मणा । इन्द्रस्तं देवो राजा [2] जम्भयत् स्तम्भयत् जृम्भयत् मोहयत् मारयत् नाशयत् क्लेशयत् शोषयत् भ्रामयत्

१ यो मे कुलागमधना इति ग मातृकापाठ ।

२ जम्भयतु स्तम्भयतु जृम्भयतु मोहयतु मारयतु नाशयतु क्लेशयतु शोषयतु भ्रामयतु फलिं तस्मै प्रयच्छतु इति ग मातृकापाठ ।

कलिं तस्मै प्रयच्छतु । ऋतुं मम शिवं मम शुभं मम शान्ति स्वस्त्ययनं मम । भद्रं नो अपिवातय मनः । मरुतामोजसे स्वाहा । इन्द्रो विश्वस्य राजति । शं नो भव द्विपदे शं चतुष्पदे ॥ येनो रयिं दुश्चरितासो अग्ने जहून्मर्तासो अनृतं वदन्तः । तेषां वपूंष्यर्चिषा जातवेदश्शुष्कन्न वृक्षमभिसन्दहस्व । जातवेदसे सुनवाम सोमं ॥ इत्यादि, एतैश्शमग्निरग्निभिरित्यारभ्य जातवेदो-मन्त्रान्तैः पूर्वदिग्बन्धनं कुर्यात् ॥

पुनरपि, शमग्निरग्निभिः करत्छन्नस्तपतु सूर्यः । शं वातो वात्वरपा अपस्त्रिधः । आग्नेयदिग्भागे अग्निस्सुप्रीतो वरदो भवतु । यो मे कुलागम-धनाभिमानप्राणस्याग्नेयदिग्गतः पाप्मा पापकेन कर्मणा अग्निस्तं देवो राजा *जम्भयत् स्तम्भयत् जृम्भयत् मोहयत् मारयत् नाशयत् क्लेशयत् शोषयत् भ्रामयत् कलिं तस्मै प्रयच्छतु । ऋतुं मम शिवं मम शुभं मम शान्ति स्वस्त्ययनं मम । भद्रं नो अपिवातय मनः । मरुतामोजसे स्वाहा । इन्द्रो विश्वस्य राजति । शं नो भव द्विपदे शं चतुष्पदे । एनो रयिं दुश्चरितासो अग्ने जहून्मर्तासो अनृतं वदन्तः । तेषां वपूंष्यर्चिषा जातवेदः शुष्कन्न-वृक्षमभिसन्दहस्व । जातवेदसे सुनवाम सोमं इत्यादि । एतैश्शमग्निरग्निभिरि-त्यादिभिः जातवेदोमन्त्रान्तैराग्नेयदिग्बन्धनं कुर्यात् ॥

पुनरपि शमग्निरग्निभिरित्यादि + स्त्रिधः ॥ दक्षिणदिग्भागे यमस्सुप्रीतो वरदो भवतु ॥ इत्यादिभिर्जातवेदोमन्त्रान्तैः दक्षिणदिग्बन्धनं कुर्यात् ॥

पुनरपि शमग्निरग्निभिरित्यादिभिर्जातवेदोमन्त्रान्तैः निर्ऋतिदिग्बन्धनं कुर्यात् ॥

पुनरपि शमग्निरग्निभिरित्यादिभिर्जातवेदोमन्त्रान्तैर्वारुणदिग्बन्धनं कुर्यात् ॥

पुनरपि शमग्निरग्निभिरित्यादिभिर्जातवेदोमन्त्रान्तैर्वायव्यदिग्बन्धनंकुर्यात् ॥

*जम्भयतु स्तम्भयतु जृम्भयतु मोहयतु मारयतु नाशयतु क्लेशयतु शोषयतु भ्रामयतु कलिं तस्मै प्रयच्छतु इति ग मातृकापाठः ।

पुनरप्येवमेव सौम्यदिग्बन्धः । पुनरप्येवमेव ऐशान्यदिग्बन्धः । पुनरप्येवमेव ऊर्ध्वदिग्बन्धः ( पुनरप्येवमेव अधोदिग्बन्धः ) ॥

पुनरप्येवमेव अवान्तरदिग्भागे परब्रह्म सुप्रीतो वरदो भवतु । यो मे कुलागमधनाभिमानप्राणस्य आध्यात्मिकाधिदैविकाधिभौतिकादागतः पाप्मा पापकेन कर्मणा । परब्रह्म तं देवो राजेत्यादि जातवेदोमन्त्रान्तं पूर्ववद् दिग्बन्धनं कृत्वा, पुनः, तामग्निवर्णां तपसा ज्वलन्तीं+तरसे नमः ॥ अग्ने त्वं पारयानव्यो अस्मान्+तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः+तनूनाम् ॥ प्रतनाजितं+दुरितात्यग्निः ॥ एतानपि मन्त्रान् जपेत् ॥ पुनः कृणुष्वपाजः प्रसितिन्न पृथ्वीं इत्यादि+द्रुहो निदो मित्रमहो अवद्यात् । इत्यन्तं पञ्चदश ऋचो जप्यात् ॥ पुनर्ध्यानम्—

कृष्णवर्णां बृहत्कण्ठां रक्तकुञ्चितमूर्धजाम् ।
शिरःकपालमालां च त्रिकेशीं घूर्णिताननाम् ॥

रक्तनेत्रामतिवृद्धां लम्बजिह्वामधोमुखीम् ।
ऊर्ध्वदक्षिणहस्तेन बिभ्राणां च परश्वथम् ॥

अधोदक्षिणहस्तेन धारयन्तीं तथांकुशम् ।
ऊर्ध्ववामकरेणैव बिभ्रतीं पाशमेव च ॥

अधो वामकरेणैव बिभ्राणां शूलमूर्धजम् ।

एवं ध्यात्वा पुनरपि ऋष्यादीन् कुर्यात् ॥

अस्य श्रीप्रत्यङ्गिरसमन्त्रस्य । आङ्गिरसप्रत्यङ्गिरसावृषी । द्वात्रिंशदृचामनुष्टुप् । यथेत्यृचः पंक्तिः । अवब्रह्मेत्येकपदा ( ब्रह्म इत्यृचः एकपदा ) गायत्री छन्दः । यो न इति (इत्यस्याः) त्रिष्टुप् छन्दः । शिष्टानामनुष्टुप् छन्दः । प्रतिकर्तांकृत्या कृत्या (प्रतिकर्त्री कृत्या) देवता । कालाग्निरुद्रः *श्रीमहादेवो देवता ।

* अधिदेवता इति ग पाठः

एवं ऋष्यादिकं विधाय, कमिति बीजम् । अमल इति शक्तिः । उदिति कीलकम् । मम कुलागमधनाभिमानप्राणस्य ये ये प्रतिकूलकारिणः त्रैलोक्यवर्तिनः तेषां केवलं तत्तद्वाङ्मनःकायचेष्टाविनाशार्थे विनियोगः ॥ पुनरपि ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गं कृत्वा ध्यानम् —

सिंह्यां सिंहमुखीं सखीं भगवतः श्रीभैरवस्योल्लसत्-
शूलस्थूलकपालपाशडमरुव्यग्राग्रहस्ताम्बुजाम् ।
दंष्ट्राकोटिविशङ्कटास्यकुहरामारक्तनेत्रत्रयां
बालेन्दूज्ज्वलमौलिकां भगवतीं प्रत्यङ्गिरां भावये ॥

एवं ध्यात्वा, पुनः परिवारजातवेदोमन्त्रस्य दूर्वासा भगवानृषिः । त्रिष्टुप् छन्दः । जातवेदो देवता । मम सर्वारिष्टविनाशार्थे परिवारजातवेदोजपे विनियोगः । जातवेदोमन्त्रं जपेत् । पुनः प्रत्यङ्गिरामूलमन्त्रं विंशत्यक्षरं जपेत् ॥

अस्य श्री अथर्वणभद्रकालीमन्त्रस्य प्रत्यङ्गिरस ऋषिः । अनुष्टुप् छन्दः । अथर्वणभद्रकाली देवता । क्षं बीजम् । हुं शक्तिः । फट् कीलकम् । मम सर्वभूत (दुरित) विनाशार्थे विनियोगः । क्षां हृत् । क्षीं शिरः । इत्याद्यङ्गानि ॥ ध्यानम् —

ध्यायेत्समस्तशत्रुघ्नीं सर्वसौख्यदयालयाम् ।
कालीं कङ्कालवदनां कालजीमूतसन्निभाम् ॥

भीमदंष्ट्रां ज्वलन्नेत्रीं भूयोज्वालाशिखोज्ज्वलाम् ।
अष्टनागकृताकल्पामष्टदिक्पूर्णविग्रहाम् ॥

सहस्रभुजदण्डोद्यत्सहस्रायुधशोभिताम् ।
बिभ्रतीं किङ्किणीमालामापादतललम्बिकाम् ॥

समस्तशत्रुरुधिरपानोन्मत्तां परां शिवाम् ।
एवं ध्यात्वा महाकृत्यां जपेन्मन्त्रं यथाविधि ॥

मूलमन्त्रः—

क्षं भक्ष ज्वालाजिह्वे कराळदंष्ट्रे प्रत्यङ्गिरे क्षं ह्रीं हुंफट्। इति विंशत्यक्षरीमन्त्रः। चतुष्षष्टिसहस्रसंख्यं जपं कृत्वा, दशांशं तर्पणं, दशांशमाज्यहोमः। पश्चात्प्रयोगविधिः॥

ओं नमः कृष्णवाससे शतसहस्रकोटिसिंहासने सहस्रवदने अष्टादशभुजे महाबले महाबलपराक्रमे अजिते अपराजिते देवि महाप्रत्यङ्गिरे प्रत्यङ्गिरसेऽन्यपरकर्मविध्वंसिनि परमन्त्रोच्चाटिनि परमन्त्रोत्सादिनि सर्वभूतदमनि कें सौं प्रें ह्रीं क्रों मां सर्वोपद्रवेभ्यः सर्वापद्भ्यो रक्ष रक्ष ह्रां ह्रीं श्रीं क्रों सर्वदेवानां मुखं स्तम्भय स्तम्भय सर्वविघ्नं छिन्धि छिन्धि सर्वदुष्टान् भक्षय भक्षय वक्त्रालयज्वालाजिह्वे कराळवदने सर्वयन्त्राणि स्फोटय स्फोटय शृङ्खलान् त्रोटय त्रोटय प्रत्यसुरसमुद्रान् विद्रावय विद्रावय सं रौद्रमूर्ते महाप्रत्यङ्गिरे महाविद्ये शान्तिं कुरु कुरु मम शत्रून् भक्षय भक्षय [1]ओं ह्रां ह्रीं ह्रूं जम्भे जम्भे मोहे मोहे स्तम्भे स्तम्भे ओं ह्रीं हुं फट् प्रत्यङ्गिरसे स्वाहा॥ इति मालामन्त्रः॥

अथ प्रत्यङ्गिराऋचः—

यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव।
तां ब्रह्मणाऽपनिर्नुद्मः प्रत्यक्कर्तारमृच्छतु॥ १॥

शीर्षण्वतीं कर्णवतीं विपुरूपां भयङ्करीम्।
यः प्राहिणोदिहाद्यत्वा वीतं त्वं योजयासुभिः॥ २॥

येन दिष्टेह वदसि प्रतिकूल[2]मधायिनी।
तमेवेतो निवर्त्योपमास्मां(स्मान्)ऋच्छो अनागसः॥ ३॥

१. ओं ह्रां ह्रीं ह्रूं जम्भे इति ग पाठः।

२. अधायिनि इति ग पाठः।

अभिवर्तस्व कर्तारं निरस्ताऽस्माभिरोजसा ।
आयुरस्य निकृन्तस्व प्रजां च [1]पुरुषादिनी ॥ ४ ॥

यस्त्वा कृत्ये चकारेह त्वं तं गच्छ पुनर्नवे ।
अरातीन्कृत्ये नाशय सर्वाश्च यातुधान्यः ॥ ५ ॥

इति प्रथमवर्गः ॥

क्षिप्रं कृत्ये निवर्तस्व कर्तुरेव गृहान्प्रति ।
पशूंश्चैवास्य नाशय वीरांश्चास्य निबर्हय ॥ १ ॥

यस्त्वा कृत्ये प्रजिघाय विद्वानविदुषो गृहान् ।
तस्यैवेतः परेत्याशु तनूं( तनुं )कृन्धि परुष्परुः ॥ २ ॥

प्रतीचीं त्वापसेधतु ब्रह्मरोचिष्णुमिलहाः ।
अग्निश्च कृत्ये रक्षोहा रिपुहा चाज एकपात् ॥ ३ ॥

यथा त्वाङ्गिरसः पूर्वे भृगवश्चापसेधिरे ।
अत्रयश्च वसिष्ठाश्च तथेतस्त्वाऽपसेधिम ॥ ४ ॥

यस्ते परूंषि सन्दधौ रथस्येव विभुर्धिया ।
तं गच्छ तत्र यं जनम ज्ञातस्ते अयं जनः ॥ ५ ॥

इति द्वितीयवर्गः ॥

यो नः कृत्ये रणस्थो वा कश्चिद्वान्योऽभिहिंसति ।
तस्य त्वन्द्रोरिवेद्धोग्निस्तनूं ऋच्छस्व हेळिता ॥ १ ॥

भवा शर्वा देवहेळिमस्य तं पापकृन्मते ।
हरस्वती त्वं च कृत्ये मोच्छिपत्तस्य किञ्चन ॥ २ ॥

१. पुरुषादिनि इति ग पाठः ।

ये नो शिवासः पन्थानः परा यान्ति परावतम् ।
तैर्देवि रात्र्याः कृत्या नो गमयस्वाऽनुकृत्तये ॥ ३ ॥

यो नः कश्चिद्द्रुह्वारातिः मनसा ह्यभिदासति ।
दूरस्थो वान्तिकस्थो वा तस्य हृद्यमसृक् पिब ॥ ४ ॥

येनासि कृत्ये प्रहिता दूत्ये (त्ये) नास्मज्जिघांसया ।
तस्य व्यनचाव्यनच हिनस्तु ह (त)रसाऽशनिः ॥ ५ ॥

इति तृतीयवर्गः ॥

यद्युपैपि द्विपद्यस्मान्यदि वैपि चतुष्पदि ।
निरस्तैतो व्रजास्माभि कर्तुरष्टापदी(थी)गृहान् ॥ १ ॥

योनश्शपादशपतो यश्च नश्शपतश्शपात् ।
[1]वृपमिव विद्युदाशु तमामूलादनुशोपय ॥ २ ॥

यं द्विष्मो यश्च द्वेष्टघघायुर्यश्च नश्शपात् ।
शुने पैष्टमिव क्षामं तं त्वं प्रत्यस्व मृत्यवे ॥ ३ ॥

यश्च सापत्नः शपथो(तो)यश्च जामी शपाति नः ।
ब्रह्मा च यत्क्रुद्धश्शपात् सर्वं तत्क्रुन्ध्यघस्पदम् ॥ ४ ॥

सबन्धुश्चासबन्धुश्च यो अस्मानभिदासति ।
तस्य त्वं भिन्ध्यधिष्ठाय पदा विस्फू(ष्फू)र्य तच्छिरः ॥ ५ ॥

इति चतुर्थवर्गः ॥

अभिप्रेहि सहस्राक्ष(क्षं)युक्त्वाशु शपथं रथे ।
शत्रूनन्विच्छती कृत्ये वृकीवाथावृतो गृहान् ॥ १ ॥

---

१. वृक्षमिव विद्युता हतं इत्यपि पाठो भवतीति भाति ।

परिणो वृन्धि शपथं[1] दहन्नग्निरिव हृदम् ।
शत्रूनेवाभिनो जहि दिव्या वृक्षमिवाशनिः ॥ २ ॥

शत्रून्मे प्रोथ शपथान् कृत्याश्च सुहृदोऽसुहृत् ।
[2] जिह्मरयक्ष्णाश्च सुहृदः समिद्धं जातवेदसम् ॥ ३ ॥

असपत्नं पुरस्तान्नः शिवं दक्षिणतः कृधि ।
अभयं सततं पश्चात् भद्रमुत्तरतो गृहे ॥ ४ ॥

परेहि कृत्ये मातिष्ठ विद्धस्येव पदं नय ।
मृगस्य हि मृगारिः प्रणत्वानि कर्तुमर्हसि ॥ ५ ॥

इति पञ्चमवर्गः ॥

अभ्यक्ताक्तास्स्वलंकृतास्सर्वं नो दुरितं दह ।
जानीथाश्चैव कृत्यानां कर्तॄन्पापचेतसः ॥ १ ॥

यथा हन्ति पूर्वासिनं तथैवेष्वाशुकृन्नरः ।
[3] यथा त्वया युजा वयं तस्य निकृद्मुस्स्थाणु जङ्गमम् ॥ २ ॥

उत्तिष्ठैव परे भीता अज्ञाते किमिहेच्छसि ।
ग्रीवांस्त कृत्ये पादौ च अभिकृत्स्वाभिनिद्रव ॥ ३ ॥

स्वायसास्सन्ति नो [4]सधो विद्म चैव परूंपि ते ।
तैस्तैर्निकृमस्तान्युग्रे यदि नो जीवयस्यरीन् ॥ ४ ॥

मास्योच्छिपो द्विपदं मोत किञ्चिचतुष्पदम् ।
मा ज्ञातीननुजान्स्वान्मा मा वेशप्रतिवेशिनौ ॥ ५ ॥

इति षष्ठवर्गः ॥

---

१ शपथान् इत्यपि पाठो भवति । २ जिह्माश्लक्ष्णाश्च इति ग मातृकापाठः ।
३ तथा त्वया इति ग मातृकापाठः । ४ स थो इति ग मातृकापाठः ।

शत्रूयता प्रहितासि मां येनाभि यथा यतः ।
ततस्तथा त्वा नुदतु योयमन्तर्मयि श्रितः ॥ १ ॥

एवं त्वं निकृतास्माभिः ब्रह्मणा देवि सर्वतः ।
[1] यथेतमाश्रितो गत्वा पापधीनेव नो जहि ॥ २ ॥

यथा निग्रुद्धतो वृक्ष आमूलादनुशुष्यति ।
एवं संप्रति शुष्यतु यो मे पापं चिकीर्षति [2] ॥ ३ ॥

यथा प्रतिशुका भूत्वा तमेव [3]परिधावति ।
पापं तमेव धावतु यो मे पापं चिकीर्षति [4] ॥ ४ ॥

यो नस्वो अरणो यश्च (यश्च)निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥ ४ ॥[5]
अव ब्रह्मद्विषो जहि ॥ ५ ॥

इति सप्तमवर्गः ॥

कुबेरं तु मुखं रौद्रं नन्दिमानन्दिमावह ।
ज्वरं मृत्युं भयं घोरं ज्वरं नाशय मे ज्वर ॥ १ ॥

यो मे करोति प्रद्वारे यो गृहे यो निवेशने ।
ये मे केशनखे कुर्युरञ्जने दन्तधावने ॥ २ ॥

ये नो दमे दारुधर्मे शयानं धिया शयीतं पुरुषं निजघ्नुः ।

---

१ यथेतमाश्वीश्यंरन्तो इति ग मातृकापाठः ।

२ या मे पापं चिकीर्षति इत्यपि ग मातृकापाठः ।

३ प्रतिधावत्ति इति मातृकापाठः ।

४ या मे पापं चिकीर्षति इत्यपि ग मातृकापाठः ।

५ शर्म वर्म ममान्तरम् । अव ब्रह्मद्विषो जहि । इति ग मातृकायां त्रिविधः पाठः ।

कुम्भीपाकं नरकं ग्रीवबद्धा हतान्येवं पुरुपासो मयस्य॥ ३ ॥

यो नो रयिं दुश्चरितासो अग्ने जहन्मर्तासो अनृतं वदन्तः ।
तेषां वपूंष्यर्चिषा जातवेदः शुष्कन्न वृक्षमभिसन्दहस्व ॥ ४ ॥

प्रतिसर प्रतिधाव कुमार्य(र) इव पितृगृहान् ।
मूर्धानमेषां स्फोटय वधमेषां कुले कृधि ॥ ५ ॥

कृष्णवर्णि बृहद्रूपि बृहत्कण्ठि महद्भयि ।
देवि देवि महादेवि मम शत्रून् विनाशय ॥
मम शत्रून् विनाशयों नमः ॥ ६ ॥

इत्यष्टमवर्गः ॥

खट् फट् जहि महाकृत्ये विधूमाग्निसमप्रभे ।
देवि देवि महादेवि मम शत्रून् विनाशय ॥
मम शत्रून् विनाशयों नमः ॥ १ ॥

गृध्रकर्णि विरूपाक्षि लम्बस्तनि महोदरि ।
जहि शत्रून् त्रिशूलेन क्रुद्धास्य(क्रुद्धैषां)पिब शोणितम् ॥ २ ॥

अग्न्यास्ये घोररूपे *विपरूपे विनाशनी ।
जृम्भिता प्रतिगृह्णस्व स्वयमादाय अर्भकम् ॥ ३ ॥

त्वमिन्द्रो यमो वरुणः त्वमापोऽग्निरथानिलः ।
ब्रह्मा चैव रुद्रश्च त्वष्टा चैव प्रजापतिः ॥ ४ ॥

आवर्तध्वं निवर्तध्वं ऋतवः परिवत्सरम्(रात्) ।
अहोरात्राश्च देवाश्च त्वं दिशः प्रदिशश्चिम ॥ ५ ॥

*विपुरूपे विनिशिनि इति ग, मातृकापाठः ।

त्वमिन्द्रं यमं वरुणं सोममग्निरथा(मथा)निलम् ।
अत्राहूत्य पशूंश्चैवानुत्पादयस्वाद्भुतम् ॥ ६ ॥

ये द्रुह्यान्नृ [1]जवेमह्ममग्ने कदापि यो दुर्मदा अश्मदासः ।
आविद्ध्यैतान्रोचिर्षां विद्धि (अ) तन्तून्वैवस्वतस्य सदनं (ने)यमस्य ॥

इति नवमवर्गः ॥

इति प्रत्यङ्गिराऋचस्समाप्ताः ॥

प्रत्यङ्गिराप्रथमवर्गप्रथमऋचः ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । प्रत्यङ्गिरा देवता । अष्टचतुश्चतुरष्टाष्टभिरक्षरैः पञ्चाङ्गानि ॥

भ्रूमध्य-नयनद्वय गळ बाहुद्वय-हृन्नाभिपार्श्वद्वय- कटिद्वया - न्धु-पादद्वयेषु पदन्यासः ॥ ध्यानम् —

खड्गचर्मधरा कृष्णा मुक्तकेशी दिगम्बरा ।
सदंष्ट्रा सर्वभूषाढ्या ध्येया सर्वारिभक्षणा ॥

अथवा यां कल्पयन्तीत्यस्य अङ्गिरा, अनुष्टुप्, उग्राकृत्याः । कृष्णाष्टमीमारभ्य यावत्पर्वपर्यन्तं औदुम्बरदण्डं पुरुषमात्रं धारयन् नामसंयुक्तमष्टोत्तरशतं जपेत् । ततश्शत्रोर्मृतिर्भवति । तद्दिवसादूर्ध्वं ब्रह्मापि रक्षितुं न समर्थः ॥ १–१ ॥

[2]शीर्षवतीमित्यस्य प्रथमवर्गद्वितीयस्य अङ्गिराऽनुष्टुप्कृत्याः । विभीतकदण्डमष्टप्रादेशमात्रं धारयन् कृष्णप्रतिपदारभ्य चतुर्दशीपर्यन्तं अष्टोत्तरशतं जपेत् । शत्रुर्व्याधिग्रस्तो भवति म्रियते वा । न संदेहः ॥ १–२ ॥

येन दिष्टेह वदसि इत्यस्य वामदेवो गायत्री प्रत्यङ्गिरसः ॥ अर्कसमिधं कारस्करं वा भल्लातकरलक्ष्णकं तैलेनाभ्यक्तं नित्यमष्टोत्तरशतं नामसंयुक्तं

१ जपे मह्ममग्ने कदा धियो इति म मातृकापाठः ।

२ ऋङ्निरूपणे शीर्षण्वतीं इति पाठो भवति ।

जुहुयात् । सप्तरात्रैः शत्रुक्षयो भवति । केवलं जपमात्रात् मासान्ते ज्वराभिभूतो भवति । तत्क्षणान्मृत्युर्भवति ॥ १–३ ॥

अभिवर्तस्य कर्तारं इत्यस्य वृद्धविष्णुरनुष्टुप्कालाग्निरुद्रः । कृष्णाष्टमीमारभ्य यावत्पर्वपर्यन्तं केवलमष्टोत्तरसहस्रं जपेत् । तद्दिवसादूर्ध्वं ब्रह्मापि रक्षितुं न समर्थः ॥ १–४ ॥

यस्त्वा कृत्येत्यस्य प्रथमावद्ध्यादिकम् । ईश्वरालये तालपत्रे नामसंयुक्तं मन्त्रं विलिख्य अष्टोत्तरशतं जप्त्वा प्रादेशमात्रं खनित्वा शत्रुनिग्रहे निक्षिपेत् । तत्क्षणात् सर्वस्वं नष्टं भवति । तत्कुलक्षयो भवति । गोभूहिरण्यदक्षिणां दद्यात् ॥ १–५ ॥

द्वितीयवर्गे क्षिप्रं कृत्येत्यस्य वामदेवः पङ्क्तिः महादेवः ॥ २–१ ॥

यस्त्वाकृत्येत्यस्य अगस्त्यानुष्टुप् कृत्याः ॥ २–२ ॥

प्रतीचीं त्वेत्यस्य वसिष्ठानुष्टुप् रुद्राः ॥ २–३ ॥

यथा त्वाङ्गिरस इत्यस्य अत्रिगायत्रीब्रह्माणः ॥ २–४ ॥

यस्ते परूंषीत्यस्य अग्निजगत्यग्नयः ॥ २–५ ॥

तृतीयवर्गे यो नः कृत्येत्यस्य भृगुवर्धानुष्टुप् कृत्याः ॥ ३–१ ॥

भवा शर्वेत्यस्य अगस्त्यत्रिष्टुप्कृत्याः ॥ ३–२ ॥

यो नो शिवास इत्यस्य महादेव उष्णिक्गायत्र्यः ॥ ३–३ ॥

यो नः कश्चित् द्रुहारातिरित्यस्य अग्निरनुष्टुबिन्द्रः ॥ ३–४ ॥

येनासि कृत्येत्यस्य गौतमानुष्टुप् कृत्याः ॥ ३–५ ॥

चतुर्थवर्गे यद्युपैपीत्यस्य अङ्गिरागायत्री कालाग्नयः ॥ ४–१ ॥

योनश्शपादित्यस्य ज्वरानुष्टुप् मृत्यवः ॥ ४–२ ॥

यं द्विष्मो इत्यस्य कपिलानुष्टुप्ब्रह्माणः ॥ ४–३ ॥

यश्च सापत्नश्शपथः इत्यस्य ब्रह्मानुष्टुप्रैवाः ॥ ४–४ ॥

संबन्धुश्चासबन्धुश्च इत्यस्य काश्यपानुष्टुप् बृहस्पतयः ॥ ४—५ ॥

पञ्चमवर्गे अभिप्रेहि इत्यस्य *आपान्तमृत्युर्बृहतीकालाग्निरुद्रः ॥ ५-१ ॥

परिणो वृन्धीत्यस्य सत्यतपोनुष्टुप्कृत्याः ॥ ५—२ ॥

शत्रून्मे प्रोथेत्यस्य अङ्गिरास्त्रिष्टुप्कृत्याः ॥ ५—३ ॥

असपत्नमित्यस्य गालवगायत्रीहयग्रीवविष्णवः ॥ ५-४ ॥

परेहि कृत्येत्यस्य ब्रह्मानुष्टुप्ब्रह्माणः ॥ ५-५ ॥

षष्ठे वर्गे अभ्यक्ताक्ता इत्यस्य शर्वानुष्टुप्शर्वाः ॥ ६—१ ॥

यथा हन्ति पूर्वासिनं इत्यस्य वरुणः त्रिष्टुप् सूर्यः ॥ ६—२ ॥

उत्तिष्ठैव परे इत्यस्य इन्दुर्गायत्र्यश्विनौ ॥ ६-३ ॥

स्वायसा इत्यस्य गालवत्रिष्टुप्मित्रः ॥ ६—४ ॥

मास्योच्छिपो इत्यस्य विष्णवनुष्टुप्विष्णवः ॥ ६—५ ॥

सप्तमवर्गे शत्रूयता इत्यस्य ब्रह्मानुष्टुप्रुद्राः ॥ ७—१ ॥

एवं त्वं निकृता इत्यस्य परब्रह्मानुष्टुप्वसवः ॥ ७—२ ॥

यथा विद्युद्धत इत्यस्य परब्रह्मा पङ्क्तिर्वसवः ॥ ७-३ ॥

यथा प्रतिशुका(शुका)इत्यस्य अग्निः पङ्क्तिः रुद्रः ॥ ७—४ ॥

यो नस्त्वो अरणो इत्यस्य शातातपस्त्रिष्टुप्परमात्मा ॥ अत्र ब्रह्मेत्यस्य परब्रह्मा गायत्रीब्रह्मा ॥ ७—५ ॥

अष्टमवर्गे कुबेरं ते मुखमित्यस्य कुत्साग्निरनुष्टुप्कालमृत्युः ॥ ८—१ ॥

यो मे करोति इत्यस्य आङ्गीरसकाश्यपावृषी । पङ्क्तिः छन्दः । रुद्रो देवता ॥ ८—२ ॥

प्रत्यङ्गिराऋक्समुदायस्य नवसहस्रजपः । आज्येन दशांशं पुरश्चरणाहोमः ॥ त्रिंशत्सहस्रं वा जपः ॥

---

* आपान्तमन्युः इति ग मातृकापाठः ।

अथ प्रत्यङ्गिरादिमन्त्रप्रसङ्गात् प्रत्यङ्गिरसः कृत्याशान्तिफलप्रधानत्वात् तत्प्रसङ्गात् कृत्याग्रहाणां लक्षणविशेषाः प्रयोगसारोक्तप्रकारेण लिख्यन्ते—

अमरा राक्षसा यक्षा नागा भूतास्सुराः कृशाः ।
गन्धर्वाः पितरो गुर्वाः पिशाचा ब्रह्मराक्षसाः ॥

विनायकाः कुमाराश्च निस्तेजा भस्मकास्तथा ।
प्रलापाः काश्मलाश्चेति दशाष्टौ ते महाग्रहाः ॥

चरन्ति स्वेच्छया लोके कोटिभेदैर्व्यवस्थिताः ।
पूजोपहारहवनव्याक्षेपेणोपमोहिताः ।
गृह्णन्ति मानवानेते वक्ष्ये तेषां गुणानपि ॥

लुब्धं मूर्खं भयार्तं हृपितमतिशठं पूर्ववैरानुबद्धं
नष्टद्रव्यं वियुक्तं प्रतिगतमशुचिं प्राप्तकालं सरोगम् ।
हासान्तं कान्तदेहं निधिविलयकरं कातरं भूषिताङ्गं
रात्रावेकाकिनं तं स्मरमथनगणास्ते पुमांसं ग्रसन्ति ॥

तैलाभ्यक्तां प्रसूतामभिनवसुरतां मद्यमांसानुरक्तां
नग्नामुन्मत्तसत्वां स्मरशरविवशां मुह्यमानां विहारैः ।
रथ्याश्रृङ्गाटकस्थां ऋतुममयरतां पुंश्चलीकां रुदन्तीं
एकान्तां कान्तदेहां स्त्रियमपि निपमां गुह्यकास्ते ग्रसन्ति ॥

सौम्यो रक्ताननो हृष्टः प्रशस्तवचनः शुचिः ।
स्वल्पमूत्रपुरीषश्च धीरो देवग्रहः स्मृतः ॥ १ ॥

स्वमांसादस्सुरासिक्तः चपलः पिङ्गलोऽशुचिः ।
शून्यालयस्थितो हृष्ट बलवान् राक्षसग्रहः ॥ २ ॥

धीरस्त्यागी मनोवेगी कामी रक्ताननेक्षणः ।

भोगान्धो गन्धशाद्याशी ज्ञेयो यक्षग्रहः क्षमी ॥ ३ ॥

दुग्धमद्यप्रियः श्राव्यः लोलजिह्वो नगाश्रयः ।
रक्ताक्षस्सिन्धुतोयार्थी वक्री नागग्रहो मतः ॥ ४ ॥

परिहारप्रियो नित्यं निद्रालुर्भोजने रतः ।
द्रुमाधिरोही दुर्वक्तः क्रोधी भूतग्रहो विदुः ॥ ५ ॥

क्रूरदृष्टिर्भयोद्रिक्तः प्रभूताशी सविस्मयः ।
द्विजवैद्यसुरद्वेषी गुरुमायोऽसुरग्रहः ॥ ६ ॥

विविक्तसेवी शुष्काङ्गो बुभुक्षुर्दारुणध्वनिः ।
दिक्षु प्रसारितोद्वेगः वैद्यो मौनी कुशग्रहः ॥ ७ ॥

गन्धमाल्यप्रियो हृष्टो नवलवाद्यप्रियो रतः ।
गीतनृत्यपरो रागी ज्ञेयो गान्धर्वको ग्रहः ॥ ८ ॥

तिलमाषगुळाकांक्षी प्रेतकार्यपरायणः ।
शान्तोऽपराह्णसञ्चारी बोद्धव्योयं पितृग्रहः ॥ ९ ॥

स्मेरास्यश्चोन्मुखी मौनी बद्धमुष्टिर्दिगीक्षणः ।
जान्वाश्रयी क्रूरदृष्टिः ज्ञेयो गुह्यग्रहो ज्वलः ॥ १० ॥

प्रलापो निष्ठुरालापो हीनश्शून्यरतिश्शठः ।
दुर्गन्धलेपो मलिनः स्यात्पिशाचग्रहोऽशुभः ॥ ११ ॥

ताम्रदृक् वेदवाक्यज्ञः ब्रह्मचारी द्विजप्रियः ।
वैद्यापहासी शुद्धात्मा ग्रहस्स्यात् ब्रह्मराक्षसः ॥ १२ ॥

फूत्कारनिरतोद्गारी *मृष्टावादरजो बली ।
दशनैर्दशनादंशी क्रूरो वैनायको ग्रहः ॥ १३ ॥

* —दृष्टावादरजो इति ग मातृकापाठः ।

उत्सङ्गशयनासक्तः पांसुक्रीडापरस्सदा ।
स्निग्धवाक्यो महोत्साही स्यात्कुमारग्रहो मृदुः ॥ १४ ॥

निस्पृहो विह्वलो वक्ता निर्निमेषावलोकनः ।
निराकृतभिषग्वाक्यः निस्तेजाख्यो ग्रहः स्मृतः ॥ १५ ॥

त्वगस्थिभूतो बुभुक्षुश्शीतांगस्तिर्यगीक्षणः ।
असदर्थाभिधायी च निर्मलो भस्मकग्रहः ॥ १६ ॥

* नृत्तकस्सहसा हासी बहुवक्ता प्रभूतभुक् ।
शुष्काङ्गो जृम्भणपरः स्यात्प्रलापग्रहोऽस्थिरः ॥ १७ ॥

रागी परार्थहृत् क्रुद्धः स्त्रीद्रोही कलहप्रियः ।
बह्वाशी भीषणो लुब्धः स्तब्धवाक् कश्मलग्रहः ॥ १८ ॥

अष्टादशग्रहा ह्येते लक्षणैस्सह दर्शिताः ।
तेष्वेव जातिभेदांश्च लक्षयेद्वर्णलक्षणैः ॥

क्षुत्तृष्णाज्वरदाहशीर्षकरुजायुक्तस्तु पूजाप्रियः
सोद्वेगसुरतप्रियः सुवचनश्शुद्धो विहारोत्सुकः ।
हृष्टस्साहसिकः प्रकम्पितशिरो व्यापादनार्थी तथा
त्रेधा ते समुदीरिता ग्रहगणाः तेष्वन्त्य उक्तं त्यजेत् ॥

लिङ्गैर्ग्रहान्समुपलक्ष्य यथाक्रमेण
मन्त्री विमृश्य विदधातु तथा चिकित्साम् ।
पूजाविधानविधिपूर्वकमिष्टसिद्धि-
लाभाय सङ्गतमनाः सकलक्रियाभिः ॥

मन्त्री दृष्ट्वा ग्रहाविष्टं पुरः पृच्छेदनाकुलः ।
संस्कृत्य मन्त्रपूतेन वारिणा दैवतं स्मरन् ॥

* नर्तकः इति ग मातृकापाठः ।

पटेनान्तरितं कृत्वा पूज्य गन्धाक्षतादिभिः ।
को भवान्काथ संस्थानं प्राप्तस्त्वं केन हेतुना ॥

ब्रूहि सत्याभिधानेन ते शिवाज्ञेति निश्चयः ।
रात्रित्रयं परीक्ष्यैवं भूयः कर्म समारभेत् ॥

आख्याय नाभिच्छतं यस्तु समये तिष्ठति ग्रहः ।
तत्र पूजा यथा प्रोक्ता दण्डोऽन्यत्र प्रशस्यते ॥

पायसेन च मांसेन ज्ञात्वा भूतोदितं यथा ।
तन्त्रोक्ते मण्डपे भूम्यां प्रासादे वा विशेषतः ॥

भूतेश्वरं महादेवं पूजयेत् खड्गरावणम् ।
ग्रहास्तत्रानु[1]गच्छन्ति सौम्या दण्डैरथापरे ॥

अथ भूतलक्षणप्रसङ्गात् अपस्मारलक्षणमप्यत्र प्रयोगसारोक्तं लिख्यते —

क्षेत्रगो विस्मृतो योसावपस्मारः प्रकीर्तितः ।
स पर्वदिवसेष्वेव प्रायो व्यक्तिं समेष्यति ॥

विस्रस्ताङ्गः पतति सहसा भूतले नष्टसंज्ञः
फेनोद्गारी रटति पुरुषः [2]स्वर्णकण्ठश्चिराय ।
व्यावृत्ताक्षो दशति दशनान्पीतवर्णः प्रमादी
भोज्यासक्तो विकृतवदनः स्यादपस्मार एषः ॥

श्वसना विमना निद्रा जृम्भिका दशना तथा ।
त्रासिनी मोहिनी चाथ रोदिनी क्रोधिनी तथा ॥

तापिनी शोषिणी चाथ ध्वंसिनी चेति कीर्तिताः ।
दूत्यो द्वादश विख्याता अपस्मारस्य सुप्रियाः ॥

---

१ गृह्णन्ति इति ग मातृकापाठः । २ सन्नकण्ठः इति ग मातृकापाठः ।

एतत्समस्ता व्यस्ताश्च संश्रयन्ति नरं किल ।
स्वाख्यानार्थवर्तीं चेष्टां तत्राभिव्यञ्जयन्ति च ॥

अपस्मारोपभेदास्ते ततो द्वादश कीर्तिताः ।
शमापायादपस्मारे कूश्माण्डबलिमाहरेत् ॥

सुदर्शनेन जुहुयात्तिलैः क्रोधाग्निनाऽथवा ।
प्रत्यक्षरसहस्रेण घोरापस्मारशान्तये ॥

क्रोधाग्निः—செங்கொடிவேலி.

शूलिनीकल्पे —

तार्क्ष्यमार्जारसिंहश्वा(श्व)सर्पान्धुकरिणः शशाः ।
आगच्छन्त्युदयाद्यैन्द्रादर्धयामे प्रदक्षिणम् ॥

तार्क्ष्यादिषु चतुर्दिक्षु कचिद्वै न्यवसन्स्त्रयम् ।
सर्पादिरूपिणं ग्रस्तं ध्यात्वा कुर्यात् क्रियान्तरम् ॥

स्वासनस्थानमज्ञात्वा यः पश्यति गृहादिकम् ।
तद्ग्रहाभिभवेनैव लघुत्वं याति मन्त्रवित् ॥

अथ मुद्राप्रदर्शनपूर्वकं देवतापूजाद्यर्थं मन्त्रदेवताप्रकाशिकोक्तप्रकारेण सकलमुद्रालक्षणानि लिख्यन्ते —

अर्चने जपकाले तु ध्याने काम्ये च कर्मणि ।
तत्तन्मुद्राः प्रयोक्तव्याः देवतासन्निधायकाः ॥

हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।
अंगुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावहनी स्मृता ॥

अधोमुखी त्वियं चेत्स्यात्स्थापिनी मुद्रिका मता ।
उच्छ्रितांगुष्ठमुष्टयोस्तु संयोगात्सन्निधायि(पि)नी ॥

अन्तःप्रवेशितांगुष्ठा सैव संरोधिनी मता ।
मुष्टिद्वयस्थितांगुष्ठौ संमुखौ तु परस्परम् ॥

संश्लिष्टावुच्छ्रितौ कुर्यात् सेयं सम्मुखिमुद्रिका ।
प्रसृतांगुलिकौ हस्तौ मिथश्श्लिष्टौ च सम्मितौ ॥

कुर्यात्स्वहृदये सेयं मुद्रा प्रार्थनिसंज्ञिका ।
समस्तानां देवतानां षण्मुद्राः पूजने स्मृताः ॥

अञ्जल्याऽञ्जलिमुद्रा स्याद्वासुदेवाभिधा च सा ।
उच्छ्रितं दक्षिणांगुष्ठं वामांगुष्ठेन बन्धयेत् ॥

वामांगुलीर्दक्षिणाभिरंगुलीभिश्च वेष्टयेत् ।
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ॥

तर्जनीमध्यमासन्धिनिर्गतांगुष्ठमुद्रिका ।
अधोमुखी दीर्घरूपमध्यमा विघ्नमुद्रिका ॥

मिथः कनिष्ठिके बध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वगश्लिष्टदीर्धमध्यमयोरधः ॥

अंगुष्ठाग्रद्वयं न्यसेद्योनिमुद्रेयमीरिता ।
कमलाकृतिमुद्रा तु जानुमुद्रेति कीर्तिता ॥

जानुमध्ये गतौ कृत्वा चिबुकोष्ठौ समावृतौ ।
हस्तौ तु भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥

मुखं च विवृतं कुर्यात् लेलिहानश्च जिह्विकाम् ।
एषा मुद्रा नारसिंह्री प्रधानेति प्रकीर्तिता ॥

वामस्यांगुष्ठतो बध्वा कनिष्ठामंगुलित्रयम् ।
त्रिशूलवत्संमुखोर्ध्वा कुर्यान्मुद्रां नृसिंहिकाम् ॥

वामहस्तमथोत्तानं कृत्वा देवस्य चोपरि ।
नामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिता ॥

दक्षहस्तं चोर्ध्वमुखं वामहस्तमधोमुखम् ।
अंगुल्यग्रं तु संयुक्तं मुद्रा वाराहसंज्ञिता ॥

अंगुष्ठाभ्यां च करयोरथाक्रम्य कनिष्ठिके ।
अधोमुखीभिश्शिष्टाभिः मुद्रेयं नृहरेर्मता ॥

वामहस्ततले दक्षा अंगुलीस्तास्त्वधोमुखीः ।
संरोध्य मध्यमां तासामुन्नम्याधो विमोचयेत् ॥

हयग्रीवप्रिया मुद्रा तन्मूर्तेरनुकारिणी ।
वेणुधारणवद्धस्तौ कुर्यात्तिर्यङ्मुखो भवेत् ॥

वेणुमुद्रा भवेदेषा सर्वदा कृष्णवल्लभा ।
चक्रमुद्रां तथा बध्वा मध्यमे द्वे प्रसार्य च ॥

कनिष्ठके तथानीय तदग्रेंगुष्ठके क्षिपेत् ।
लक्ष्मीमुद्रा परा ह्येषा सर्वसंपत्प्रदायिनी ॥

मुष्टिरूर्ध्वगतांगुष्ठा तर्जन्यग्रे तु विन्यसेत् ।
सर्वरक्षाकरा ह्येषा कुन्द्र(न्त)मुद्रेयमीरिता ॥

हनौ (स्तौ) तु संपुटौ कृत्वा प्रसृतांगुलिकौ तथा ।
तर्जन्यो मध्यमांगुष्ठे अंगुष्ठौ मध्यमास्थितौ ॥

काममुद्रेयमाख्याता सर्वशक्तिप्रियङ्करी ।
मूर्ध्न्यूर्ध्वांगुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ॥

मुष्टिं बध्वा कराभ्यां च वामस्योपरि दक्षिणम् ।
कृत्वा शिरसि संयोज्य दुर्गामुद्रेयमीरिता ॥

हस्तौ तु विमुखौ कृत्वा ग्रन्थ(थ)यित्वा कनिष्ठिके ।
मुखं तर्जनिके श्लिष्टे श्लिष्टावंगुष्ठिकौ तथा ॥

मध्यमानामिके द्वे तु द्वौ पक्षाविह चिन्तयेत् ।
एषा गारुडमुद्रा स्यादशेषविषनाशिनी ॥

मणिबन्धस्थितौ कृत्वा .... ... ।
.... ... ... ... .... ॥

... ... ... ... ... सिद्धिदा ।
वामांगुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ॥

कृत्वोत्तानं तथा मुष्टिमंगुष्ठं तु प्रसारयेत् ।
वामांगुलीस्तथा श्लिष्टास्संयुक्तास्सुप्रसारिताः ॥

दक्षिणांगुष्ठसंस्पृष्टमुद्रा शङ्खस्य चोदिता ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथितांगुली ॥

अंगुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ।
गदामुद्रेयमाख्याता परा मुक्तिकरी तथा ॥

करौ तु सम्मुखौ कृत्वा सम्मुखादुन्नतांगुली ।
तलान्तर्मिलितांगुष्ठौ कुर्यादेषाऽब्जमुद्रिका ॥

कनिष्ठानामिके बध्वा स्वांगुष्ठेनैव वामतः ।
शिष्टांगुली तु प्रसृते संश्लिष्टे मुखमुद्रिका ॥

वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसार्य च ।
आकुञ्चितांगुलिं कुर्यात् चर्ममुद्रा प्रकीर्तिता ॥

मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्यान्मुसलमुद्रेयं सर्वविघ्नप्रमर्दिनी ॥

हस्तावधोमुखौ कृत्वा नाभिदेशे प्रसार्य च ।
तर्जनीभ्यां नयेत्स्कन्धं प्रोक्तैषाऽस्त्राख्यमुद्रिका ॥

हस्तावूर्ध्वमुखौ कृत्वा तले संयोज्य मध्यमे ।
अनामायां तु वामायां दक्षिणां तु विनिक्षिपेत् ॥

तर्जन्यौ पृष्ठतो लग्नावंगुष्ठौ तर्जनीश्रितौ ।
चक्रमुद्रा भवेदेषा नृहरेस्सन्निधौ मता ॥

चक्रमुद्रां तथा कृत्वा तर्जनीभ्यां तु मध्यमे ।
पीडयेद्दंष्ट्रमुद्रैषा सर्वपापप्रणाशिनी ॥

अन्योन्यपृष्ठकरयोर्मध्यमानामिकांगुळी ।
अंगुष्ठेन तु बध्नीयात् कनिष्ठामूलसंश्रितौ ॥

तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिता ।
अनामापृष्ठसंलग्नां दक्षिणस्य कनिष्ठिकाम् ॥

कनिष्ठिकां च बध्नीयादनामीक्षिततर्जनीम् ।
गृहीत्वा दक्षिणांगुष्ठमध्यमानामिकात्रयम् ॥

उच्छ्रयित्वा तत्र वामतर्जनीमध्यमे न्यसेत् ।
दक्षिणे मणिबन्धे च वामांगुष्ठं च योजयेत् ॥

मुद्रेयं कौस्तुभस्योक्ता दर्शनीया प्रयत्नतः ।
स्पृशेत्कण्ठादिपादान्तं तर्जन्यांगुष्ठनिष्ठया ॥

करद्वयेन मालावत् मुद्रेयं वनमालिका ।
अंगुष्ठेन कनिष्ठां तु बध्वा शिष्टांगुलित्रयम् ॥

प्रसारयेत् त्रिशूलस्य मुद्रेयं परिकीर्तिता ।
मुष्टिं त्वामिळितां बध्वा ईषदुच्छ्रितमध्यमाम् ॥

दक्षिणामूर्ध्वमुन्नम्य कण्ठदेशे प्रचालयेत् ।
एषा मुद्रा डामरुका सर्वविघ्नविनाशिनी ॥

तले तलं तु करयोः तिर्यक् संयोज्य चांगुलीः ।
सह (ताः) प्रसृताः कुर्यात मुद्रेयं परशोर्मता ॥

मिळितानामिकांगुष्ठमध्यमाग्राणि योजयेत ।
शिष्टांगुल्युच्छ्रिते कुर्यान्मृगमुद्रेयमीरिता ॥

पञ्चांगुल्यो दक्षिणस्य मिळिता उन्नतास्तथा ।
खट्वाङ्गमुद्रा विख्याता सर्वपापप्रणाशिनी ॥

पात्रवत् वामहस्तं च कृत्वाङ्के वामके तथा ।
निधायोच्छ्रितवत्कुर्यात् मुद्रा कापालिकी स्मृता ॥

वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ।
अनामां कनिष्ठिकां च तस्यांगुष्ठेन पीडयेत् ॥

दर्शयेद्दक्षिणस्कन्धे धेनुमुद्रेयमीरिता ।
दक्षमुष्टिस्थतर्जन्या दीर्घया बाणमुद्रिका ॥

अंगुष्ठतर्जन्यग्राभ्यां स्फोटो नाराचमुद्रिका ।
हस्तद्वये त्वधोवक्त्रे संमुखे च परस्परम् ॥

वामांगुलीर्दक्षिणानामंगुलीनां च सन्धिषु ।
प्रवेश्य मध्य (मांगुल्यौ तर्जन्योस्तु) प्रयोजयेत् ॥

कनिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात्सा धेनुमुद्रिका ।
दक्षमुष्टिगृहीता स्याद्वाममुष्टी(ष्टि)स्तु मध्यमा ॥

प्रसार्य तर्जनी ... ... ... ।

.... ... ... ... ... ॥

... ... ... विद्वद्भिः परिकीर्तिता ।

वामहस्तांगुळिचतुष्कं मुष्टीकृत्य तदंगुष्ठं ऋजुतः ऊर्ध्वीकृत्य वामपार्श्वे इक्षुचापमुद्रां प्रदर्शयेत् ॥

हस्तद्वये सुरभिमुद्रोक्तलक्षणतदंगुळ्यष्टकैः गृहीत्वा अंगुष्ठद्वयमृजूकृतान्योन्याग्रमाबध्यात् । एषा पञ्चपुष्पबाणमुद्रा । दक्षिणभागे प्रदर्शयेत् ।

अधोमुखो वामहस्तः प्रसृतो वरमुद्रिका ।
ऊर्ध्वीकृतो दक्षहस्तः प्रसृतोऽभयमुद्रिका ॥

अंगुष्ठतर्जनी द्वे तु ग्रथयित्वांगुलित्रयम् ।
(प्रसा)रयेदक्षमाला मुद्रेयं परिकीर्तिता ॥

वामहस्तं स्वाभिमुख्यं(खं) बध्द्वा पुस्तकमुद्रिका ।
दक्षांगुष्ठे परांगुष्ठं क्षिप्त्वा हस्तद्वयेन तु ॥

सावकाशामेकमूर्तिं कुर्यात्सा कुम्भमुद्रिका ।
अधोमुखो वामहस्त ऊर्ध्वास्यो दक्षहस्तकः ।
क्षिप्त्वांगुळीरंगुळीभिस्संयोज्य परिकीर्तयेत् ॥

प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते ।
पुष्करं शिखि(सूक्ष्माढ्यं विन्दु)सूक्ष्मान्वितं भवेत् ॥

आकाशशशिसंयुक्तं सिध्द्यै हृदयसंयुतम् ।
एष पञ्चाक्षरो मन्त्रो मालायाः परिकीर्तितः ॥

ग्रहणे स्थापने चैव पूजने विनियोजयेत् ।

पुष्करं हकारः । शिखी रेफः । सूक्ष्म ईकारः । ... ... ... ... विन्द्वर्धचन्द्राभ्यां संयुतम् । सिध्यै इति स्वरूपम् । हृदयं नमः पदम् ॥ ह्रीं सिध्यै नमः इति मन्त्रस्वरूपम् ॥

इति अक्षमालाजपविधिः

इति प्रपञ्चसारप्रसङ्गाल्लिखिता मन्त्रास्समाप्ताः ॥

इति श्रीमदमरेन्द्रसरस्वतीशिष्यश्रीविश्वेश्वरसरस्वत्याः प्रियशिष्येण गीर्वाणेन्द्रसरस्वत्या गृहीतः प्रपञ्चसारसारसंग्रहः समाप्तः ॥

शङ्करश्चामरेन्द्रश्च विश्वेश्वर इति त्रयः ।
पुनन्तु मामकीं बुद्धिमाचार्याः कृपया मुदा ॥

अमरेन्द्रयतिशिष्यो गीर्वाणेन्द्रस्य योगिनः ।
तस्य विश्वेश्वरः शिष्यो गीर्वाणेन्द्रोहमस्य तु ।

शिष्यः प्रपञ्चसारस्य व्यदधां सारसंग्रहम् ।
एनं दृष्ट्वाखिलास्सन्तः सन्तुष्टास्सन्तु सन्ततम् ।

साध्वसाध्वविवेकेन लिखितं वापि यन्मया ॥
तदपि प्रियशिष्यत्वात् स्वामी वीक्ष्याभिनन्दतु ।

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥

हरिः ओं ॥ शुभमस्तु ॥

श्रीसाम्बसदाशिवो रक्षतु ॥ श्रीगुरुभ्यो नमः ॥

श्रीशुभमस्तु ॥

यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गळा ।
तयोस्संस्मरणात्पुंसां सर्वतो जयमङ्गळम् ॥

---